# बौधायन-श्रौतसूत्रम्

## भवस्वामि-सायणाचार्यभाष्यसहितम्

## दर्शपूर्णमास-प्रकरणम्

# बौधायन-श्रौत-सूत्रम्

## भवस्वामि-सायणाचार्यभाष्यसहितम्

## दर्शपूर्णमास-प्रकरणम्

भवस्वामिभाष्य-सम्पादकः
सहगलोपाह्वः डा० सीतारामः शास्त्री
सायणभाष्य-सम्पादकौ
वेदमूर्तिः सुब्रायगणेशभट्टः कोड्लेकेरे
वेदमूर्ती रामचन्द्रगणेशभट्टः कोड्लेकेरे

डा० विजयपालेन विद्यावारिधिना
परिष्कृतम् उपोद्घातपरिशिष्टादिभिः संयोजितं च

प्रकाशकः—
युधिष्ठिर मीमांसक
बहालगढ़
सोनीपत-हरयाणा

वितरकः—
रामलाल कपूर ट्रस्ट
बहालगढ़
सोनीपत-हरयाणा

संवत् २०३९
प्रथम संस्करण ५००
मूल्य ४०-००

मुद्रकः—
श्री शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट प्रेस
बहालगढ़ (सोनीपत)

# आमुखम् (१)

## भवस्वामि-भाष्यस्य कोशाः

क—पाण्डुलिपिः—[1]लालचन्दपुस्तकालयस्था, संख्या—५६२७

ग्रन्थारम्भे—'श्रीगणेशायनमः ।। हरि ॐ ।।' इति माङ्गलिकं पठितम् । आदिमं पृष्ठत्रयं पीतमस्या लिखितम् । अपूर्णा भ्रष्टाश्च पाठा रिक्तप्रान्ते लिखिता वर्तन्ते । अध्यायान्ते भाष्यकारस्य नामसङ्केतो नास्ति । सप्तदशाध्यायान्ते—'समाप्तौ दर्शपूर्णमासौ' इति वाक्यं वर्तन्ते ।

आकारः ९"×४", पृष्ठसंख्या ३९, प्रतिपृष्ठं ९-१० पङ्क्तयः सन्ति । सर्वत्र देवनागरी लिपिः प्रयुक्ता वर्तते ।

ख—पाण्डुलिपिः—लालचन्दपुस्तकालयस्था, संख्या—५६२५

पाण्डुलिपेरादौ—'श्रीगणेशाय नमः । हरिः ॐ' इति माङ्गलिकाः शब्दा वर्तन्ते । अध्यायान्ते च दण्डानुरूपौ द्वौ पूर्णविरामौ प्रयुक्तौ स्तः । सप्तदशाध्यायान्ते—'पुरोडाशी समाप्ता' इति लिखितं वर्तते । प्रतिपृष्ठं 'भवस्वामिनः भाष्यम्' इति सङ्केतितम् अस्ति । आकारः १०"×४", पृष्ठसंख्या ३२, प्रतिपृष्ठं ९,१० पङ्क्तयः सन्ति । तिथिनिर्देशो नास्ति ।

ग—पाण्डुलिपिः—लालचन्दपुस्तकालयस्था, संख्या—५५५६

रिक्तप्रान्ते—'भवस्वामिभाष्यम्' इति लिखितम्, अपूर्ण-भ्रष्टाः पाठा रिक्तप्रान्ते लिखिताः सन्ति । पाण्डुलिपेरादौ—'श्रीगणेशाय नमः, हरि ॐ' इति शब्दा लिखिताः सन्ति । यत्र-यत्र भ्रान्त्या अधिकः पाठोऽस्ति, तदुपरि पीतसिन्दूरस्य (हरितालस्य) प्रयोगो विहितः । द्वौ दण्डानुरूपौ पूर्णविरामसंज्ञकौ स्तः ।

आकारः १०"×४", प्रतिपृष्ठं द्वादश-चतुर्दश-पङ्क्तयो वर्तन्ते । लिपिः देवनागरी । लेखकस्य नामसङ्केतो नास्ति ।

घ—पाण्डुलिपिः—वाराणसेयसरस्वतीभवनपुस्तकालयस्था, संख्या—१५५

आदौ 'नवीन ढुण्ढिराज भवस्वामिभाष्यम् । भवस्वामिव्याख्या दर्शपूर्णमासादि सीमान्ता' इति पाठो वर्तते ।

आरम्भे—'श्रीगणेशाय नमः, श्रीआर्यादुर्गायै नमः' इति माङ्गलिकाः शब्दा वर्तन्ते । अन्ते च—'पुरोडाशी समाप्ता' इति लिखितं वर्तते । माङ्गलिकशब्दैः प्रतीयते यत् लिपिकारो दुर्गाभक्त आसीत् ।

---

१. अयं पुस्तकालयो देशविभाजनात् पुरा लाभपुरे (लाहौरनगरे) दयानन्द-एङ्ग्लोवैदिक-महाविद्यालयान्तर्गत आसीत् । सम्प्रति होशियारपुरस्थे 'साधु-आश्रम' नाम्नि स्थाने वर्तते ।

आकार: १०"×४", पृष्ठसंख्या ३९, प्रतिपृष्ठं दश पङ्क्तयो वर्तन्ते। लिपिः देवनागरी अस्ति।

### पाण्डुलिपीनामवान्तरः सम्बन्धः

सम्पादने यासां चतसृणां पाण्डुलिपीनां प्रयोगो विहितः, ता द्विधा विभक्तुं शक्यन्ते— ग, घ; क, ख यत्र अधिकः संवादः, न्यूनश्च विसंवादः।

ग-घ लिप्योः साम्यमेवं दृश्यते—गौणार्थे-गुणामा, नास्त्यर्थे-नास्तेवेति, प्रकृतावूहे प्रकृतावूह. त्वरितानां स्थाने स्वरितानाम् पाठाः सन्ति।

अपपाठा एवमुपलभ्यन्ते—एषां तूष्णीमेवेति। अन्ये इहातृग्निवृत्यर्थमिति ततश्च तूष्णीं पक्षेप्या। घान्यनिघान्यर्थं (घ. 'विधानार्थं') तृणयुज (घ. पुंञ्ज) सन्निवेश विशेषो मतः (घ. 'मूतः') । दर्शयन् यूनानां सर्वत्र क्रमेणाङ्गप्राप्तो अनुषङ्गेण दर्शयति तृणप्रस्तर ब्राह्मण।

ग-पाण्डुलिप्यां बृहत्पाठा उपलभ्यन्ते। तद्यथा कर्मान्तो तानुवाक्योक्तयो चार्यभिप्रायश्च पुरा प्रातरग्निहोत्रात् पिरव्यानुपसादयेदिति वचनात् त्रीणि काष्ठानीत्येवारब्धव्येऽनीमन्वाद-घातीत्येत। स्व कवि० ०यनम व्रतनिवृत्तिः अस्य। प्राचीमिति प्रागुदीची ग्रहणपक्षे। नान्म-मनसां प्रतिग्रहेऽपि एतन्न स्यात् इह सकृदेव मन्त्रकर्म चा यावन्तलमिति प्रस्तरविकल्पार्थम्।

आसां पाडुलिपीनां शाखावृक्ष एवं प्ररूढः प्रतीयते—




## विवरणकारस्य कालः

संस्कृत-साहित्यकाराणां कालनिर्णये प्रायो विसंवादाः श्रूयन्ते। कालिदासादीनां जगत्-प्रसिद्धानां कवीनां कालेऽपि नैकमत्यम्। महाकविरयं ख्रिस्ताब्दात् पूर्वं पश्चाद्वेति अद्यत्वेऽपि संशेरते साहित्यसारस्वतरसावगाहनसमाहतानां विदुषां चेतांसि। अत्र किं कारणम् इति विचार्यमाणे गीताशास्त्रे प्रोक्तकर्मणो निष्कारणमेव प्रधानं कारणं प्रतीयते। ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति पतञ्जलिमुनिप्रोक्तमनुशासनं परम्परा-रूपेण भारते सम्मतमभवत्। नदीनां यथा नामरूपे विहाय पारावारे विलयनमेव तासां चरमोत्कर्षो लोके प्रसिद्धस्तथैव कर्तृत्वनिरासेन स्वकर्मणां नैष्कर्म्यसिद्धिः भारतीयानां जीवनलक्ष्यम् आसीत् तेनैव कारणेन भारतीयैर्विद्वद्भिः स्वकृतिषु स्वनामोल्लेखो न कृतः। एतल्लेखेन अहङ्कारप्रदर्शनं भवति। शास्त्रे च तन्निरासाय भूयो भूयः प्रचोदना कृता। तद्यथा गीतायाम्—

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः॥ (१६,१८)

यस्या नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ (१८,१७)

तथा च

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ १३,८॥

यास्क-पाणिनि-कात्यायन-पतञ्जलि-शास्त्रकृतां ग्रन्थेषु दम्भप्रदर्शकं प्रशंसात्मकं जीवनं नैव व्याख्यातं वर्तते। एतत्पाश्चात्यजीवनलक्ष्यं यत्र आत्मनः श्लाघा क्रियते।

अस्तु। शास्त्रकृतां कालनिर्णये गौणं साक्ष्य साहाय्यं भवति। ये-ये ग्रन्थान्तरेषु निर्देशा उपलभ्यन्ते तेषां साहाय्यमपि निर्णायकं जायत इति। भवस्वामिनः कः काल इति निर्णेतुं समीचीनतया नैव शक्यते। तैत्तिरीयसंहिताया भाष्यकारेण भट्टभास्करेण स्वभाष्यस्यादौ भवस्वामिनो नामतो निर्देशः कृतः। तद्यथा—

वाक्यार्थैकपराण्यधीत्य भवस्वाम्यादिभाषाण्यतो
भाष्यं सर्वपथीनमेतदधुना सर्वीयमारभ्यते।

एतेन प्रतीयते यद् भवस्वामी भट्टभास्करात् प्राचीनतर आसीत्। शर्मण्यदेशीयबर्नेलविदुषा एतत् प्रतिपादितं स्वनिर्मिते तञ्जौरपाण्डुलिपिसंग्रहे यद् भट्टभास्करो दशम्यां ख्रिस्ताब्दयां बभूव। अतो भवस्वामी नवम्यां शताब्दयां जात इति संभाव्यते।

बौधायनश्रौतप्रयोगसारकारेण केशवस्वामिना स्वग्रन्थे एवमलेखि—

'नारायणादिभिः प्रयोगकारैरेकैकं पक्षमाश्रित्य दर्शपूर्णमासादीनां प्रयोग उक्तः। आचार्यपादैर्द्वेधे पक्षान्तराण्युक्तानि। भवस्वामिमतानुसारिणा मया तूभयमप्यङ्गीकृत्य प्रयोगसारः क्रियते।'

इयं पाण्डुलिपिः १६२० ख्रिस्ताब्दीया इति बर्नेलविदुषा लिखितम्। केशवस्वामी एकादशशताब्दयां बभूव इति ऐतिहासिकैर्निर्णीतं वर्तते। अनेन साक्ष्येणापि एतन्निर्णेतुं संभाव्यते यद् भवस्वामी केशवस्वामिनः पूर्वतर आसीत्।

अपरं च बौधायनकारिकाकारगोपालस्य उल्लेखोऽपि अत्र विचारमर्हति—

इति द्वैधोदिताः पक्षा भवस्वामिमतानुगाः।

एतेनोल्लेखेन एतन्निश्चेतुं शक्यते यद् भवस्वामी दशमशताब्दीतः पूर्वतरो विवरणकारः।

भवस्वामिना फलागमे नम्रतरवद् अन्येषामाचार्याणामुल्लेखः 'एके, अपरे, अन्ये' इति प्रयोगैर्व्यधायि। स्वविवरणे संक्षेपेण विवरणकृता विश्लेषणं विहितम्। सायणवत्तत्रस्वमतस्य सविस्तरं भाष्यं नास्ति। द्वादशशताब्दीतः पूर्वं वैदिका विवरणशैलीमधिकृत्य वैदिकग्रन्थान् विश्लेषयामासुरिति निश्चितमतं वर्तते। तदानीं वैदिकी परम्परा देशे प्राज्ञेषु अजरा

अमरा चासीत् । म्लेच्छाक्रमणे नगराणि भस्मसात् कृतानि, पुस्तकालयाश्च अग्निसात् कृताः । भगवती वेदविद्या प्राणेभ्योऽपि गरीयसी कुम्भीधान्यैर् अलोलुपैः शिष्टैर्निधिपैः रक्षिता । खण्डितायां परम्परायां विस्तारबहुला भाष्यशैली भारते जन्म लेभे । भवस्वामिनो विवरणम् अखण्डितवैदिकपरम्परा-द्युलसूचकमिति संभावनायां नवमशताब्द्यामस्य निर्माणकालः प्रतीयते ।

## भवस्वामि-विवरणवैशिष्ट्यम्

पारोवर्यविद्भिर्वैदिकैः सूत्रसाहित्यं स्वल्पाकारम् असन्दिग्धं सारवद्, विश्वतोमुखम्, अस्तोभम्,अनवद्यमिति विशेषणैः स्तूयते स्म । आसीत् स कालो यदा आसेतुहिमाचलं सूत्रसाहित्यं पठ्यते पाठ्यते च स्म । अनपेक्षितं पिष्टपेषणं मा भूदिति विवरणशैली विकासमवाप । पतञ्जलिमुनिना सूत्रशैलीवैशिष्ठ्यं प्रतिपादयता सुभाषितम्—'छन्दोवत् सूत्राणि भवन्ति' । तथा च तेनैव निरदेशि—'ग्रामे–ग्रामे काठकं कालापकं च प्रोच्यते' ।

भवस्वामिना बौधायनश्रौतसूत्रमधिकृत्य विवरणमलेखि । तस्य विवरणं संक्षिप्तं मणिवत् सारवद् हृदयग्राहि चास्ति । अनेन संहिताग्रन्थेषु अपि विवरणानि लिखितानीति -निघण्टुव्याख्याग्रन्थे देवराजयज्वना निर्देशो व्यधायि । तैत्तिरीयसंहिताया विख्यातभाष्यकारो भट्टभास्करो भवस्वामिनं सादरम् उद्धृतवान् इति पूर्वमुक्तम् । सायणीयं बौधायनश्रौतसूत्र-भाष्यं भवस्वामिविवरणेन प्रभावितं वर्तते । तद्यथा—

### भवस्वामिभाष्यम्

ब्राह्मणानां बहुत्वादेकैकस्यां शाखायाम-परिसमाप्तत्वादर्थस्य च दुर्बोधत्वादसार्वजन्य-त्वाच्च संहृत्य विवरणार्थं सुखं बुध्वा कर्म-साङ्गमनुष्ठाय फलं सर्वे प्राप्नुयुरिति कल्प आरब्ध आचार्येण ।[2]

### सायणभाष्यम्[1]

तत्र तावद्विध्यर्थवाद…कर्मणां सुखाव-बोधाय भगवान् बोधायनः कल्पमकल्पयत् । यतो ब्राह्मणानामानन्त्यं दुःखबोधता चातो न तैः सुखं कर्मावबोध इति कल्पसूत्राणीमानि प्रतिनियतशाखान्तराण्यङ्गीचक्रुः पूर्वाचार्याः ।[3]

उपर्युक्तोद्धरणेन एतत् सिध्यति यत् सायणनाम्ना लिखितं भाष्यं भवस्वामिच्छाया एव अस्ति । इयं शैली तस्मिन् काले मनोहारिणी जनप्रिया भवेदिति स्पष्टं प्रतीयते । एतद् विवरण मीमांसाशास्त्रानुसारि वर्तते ।

---

१. पंजाबविश्वविद्यालयलवपुरे (अधुना पाकिस्ताने) सायणभाष्यस्य तिस्रः पाण्डुलिपय आसन् ।

२ द्र०—पृष्ठ १ ।    ३. द्र०—पृष्ठ २ ।

## भवस्वामि-भाष्यसम्पादनप्रकाशनैतिह्यम्

विभाजनात् पूर्वं लाभपुरीये पंजा-विश्वविद्यालये 'संस्कृत एम० ए०' परीक्षायां कस्यचिद् अप्रकाशित-प्राचीनपाण्डुलिपिग्रन्थस्य, कस्यचिद् भाष्यस्य कस्याश्चिद् टीकाया वा सम्पादनमधिकृत्य एकः शोध-विषयोऽनिवार्यत्वेन निर्धारित आसीत्। मया तत्र १९३५ तमेऽब्दे बौधायनश्रौतसूत्रीयभवस्वामिभाष्यस्य दर्शपूर्णमास-प्रकरणं सम्पादनार्थं प्रस्तुतम्, तच्चानुमतमभूत्। एतद् भाष्यं संक्षिप्त दुर्बोधं क्लिष्टञ्चेति मया श्रीब्रह्मदत्तजिज्ञासु-महाभागा बुरुहस्थलावबोधार्थम् अनुरुद्धाः। तैश्च स्वप्रोद्दिष्ठाः शिष्या ब्रह्मचारिश्रीयुधिष्ठिर-मीमांसकाः साहाय्यार्थमादिष्टाः। तैर्मम पुष्कलं साहाय्यमाचरितम्। 'एम० ए०' परीक्षायाः साफल्यानन्तरं श्रीविश्वेश्वरानन्द-वैदिक-शोधसंस्थाने संहिता-ब्राह्मण-आरण्यक-उपनिषद्-श्रौत-गृह्य-धर्म-सूत्रादिग्रन्थानां शोधकार्यं प्रक्रान्तम्। विदेशीयभाषासु यावद् वैदिकविषयमधिकृत्य लिखितमासीत तत्सर्वं संस्कृतभाषायामनूद्य विचारार्थं सामग्रीसंकलनं मम कार्यमासीत्। जर्मनभाषायां सर्वाधिका सामग्री उपलब्धा यस्या देववाण्यां भाषान्तरं कृतम्। तस्या उपयोगः षोडश खण्डात्मके वैदिकपदानुक्रमकोषे जातः। कल्पसूत्रखण्डस्य विशिष्टः सम्पादनकार्यभारो मम दायित्वे आसीत्। विभाजनपूर्वं लाभपुरं पाकिस्तान-देशान्तर्गतं भविष्यतीत्येतस्या वस्तुस्थितेः स्वप्नोऽपि नासीत्। यदा लाभपुरान्तर्गतशाहालमीगोपुरम् अग्निसाज् जातं तदा सपत्नीकेन मया स्वरचितकालिदासपदानुक्रमकोषोऽन्ये च केचन प्रकाशिता वेद-कालिदास-साहित्यग्रन्था एकस्यां मञ्जूषायां निधाय (निक्षिप्य, न्यस्य) दिल्लीनगरं प्रति प्रस्थानमकारि। केचन ग्रन्था मया अमृतसरनिवासिने स्वर्गीयमित्रवर्य-श्रीसाधुरामाय सुरक्षार्थं दत्ताः, येषु बौधायनीय-भवस्वामिभाष्यशोधग्रन्थोऽप्यासीत्।

१९५५ तमेऽब्दे मम मित्रेण साधुरामेणाहं सूचितः भोः सीताराम! तव बौधायनश्रौतसूत्रं भवस्वामिभाष्योपेतं मम पत्न्या एकस्यां लौहमञ्जूषायां लब्धम्, यत्त्वया लाभपुरे सुरक्षार्थं न्यस्तमासीत्। तत्तुभ्यं प्रतिदातुमिच्छामि। सौभाग्येन राज्यविप्लवान् मूषकभक्षणाद् रक्षितेय शोधपाण्डुलिपिः। केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयमिति सुभाषितं सुस्पष्टीकरोति। एतद् वेदग्रन्थस्य अमरत्वम् अजरत्वं यत् सप्तचत्वारिंशद्वर्षानन्तरमद्य प्रकाशनं क्रियते। १९७८ तमेऽब्दे मया अस्या प्रकाशनार्थं मित्रवर्याः श्रीयुधिष्ठिरमीमांसकाः प्रार्थितास्तैश्च स्वीकृतम्।

अत्रान्तरे कारवारसमीपस्थगोकर्णनगरे बौधायन-श्रौतसूत्रीयं सायणभाष्यं डा० विजयपालहस्तगतमभवत्। विजयनगर-साम्राज्ये वैदिकधर्मोद्धारकाणां राजनीति-धर्म-क्षेत्रयोः प्रथितयशसां सायणाचार्याणां भाष्यमिदं महार्घ्यमिति कृत्वा उभे भाष्ये अत्र प्रकाशिते स्तः। एतेन सायणभाष्ये भवस्वामिभाष्यस्य कियती छाया वर्तते इति प्रामाणिकत्वेन स्फुटं भविष्यति।

भारतशासनान्तर्गत-शिक्षामन्त्रालयीयसंस्कृतविभागस्येदं पवित्रं कर्त्तव्यं वर्तते यदेतादृश-शोध-ग्रन्थानां प्रकाशने पञ्जीकृतसंस्थानेभ्यः प्रतिशतं साहाय्यं देयमिति नीतिर्विचारमपेक्षते। अनेनानुदानेन बह्वचो वैदिक-पाण्डुलिपयः प्रकाशमागमिष्यन्ति। वैदिक-भाष्यकाराणां

स्कन्दस्वामि-वेङ्कटमाधव-भट्टभास्करादीनां कालनिर्णयविज्ञानं स्पष्टं विश्वसनीयं त्वरितञ्च भविष्यति । 'आम्राश्च सिक्ताः पितरश्च प्रीणिता' इति पातञ्जलसूक्तिः कस्तूरिकामोदं जनिष्यति ।

अस्य ग्रन्थस्य प्रकाशने आदर्श-पत्रादिपठने च यैः पुष्कलः परिश्रमः कृत इति तदर्थं सर्वे धन्यवादार्हाः ।

अन्ते च राष्ट्र-संस्कृतेराधारभूतेष्वन्यतमम् ऋग्वेदीयशांखायनगृह्यसूत्रस्य तर्पणमनुहृत्य विरमामि—

यथाऽऽगम-प्रज्ञा-श्रुति-स्मृति-विभवादनुक्रान्तमानाद् अविवादप्रतिष्ठादभयं शंभवे नो अस्तु । नमोऽस्तु देव-ऋषि-पितृ-मनुष्येभ्यः शिवमायुर्वपुरनामयं शान्ति-मरिष्टिमक्षितिमोजस्तेजोयशोबलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्नमो नमस्कृता वर्धयन्तु । दुष्टुताद् दुरुपयुक्तान्यूनाधिकाच्च सर्वस्मात् स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यं च पातु मामिति-ब्रह्म सत्य च पातु मामिति ।

दीपावल्याम्— विदुषां वशंवदः—

ब्रह्मविहार W/४३ सहगलोपाह्वः सीतारामः

राजौरी गार्डन, नई दिल्ली-२७ (११००२७)

—:०:—

# आमुखम् (२)

## सायणभाष्यस्य कोशाः

क—गोश्रुतिक्षेत्रस्थानां कीर्तिशेषाणां श्रौतिगणेशशर्मणां संग्रहाल्लब्धः, समग्रः ।

ख—वाराणसीक्षेत्रे विद्यमानस्य 'विशुद्धसाङ्गवेदविद्यालयस्य' लक्ष्मणग्रन्थालयात् प्राप्तः, समग्रः ।

ग पुण्यपत्तनस्थाद् 'भारत-इतिहास-संशोधनमण्डल' संग्रहात् समासादितः, समग्रः ।

घ—गोकर्णस्थानां श्रीरामवेंकटरमण-पण्डितमहोदयानां संग्रहाल्लब्धः, समग्रः ।

ङ—गोकर्णस्थानां श्रीजोगळेकर-नीलकण्ठदीक्षितानां संग्रहस्थः, समग्रः ।

वृ०—काशीक्षेत्र वास्तव्यानां सम्प्रति वृन्दावननिवासिनां श्रीऋषिशङ्कर-सोमयाजिनां सकाशात् प्राप्तः, समग्रः ।

## —निवेदनम्—

बोधायनाय भगवद्गुणभूषणाय श्रुत्यब्धिसारमथने निजमन्दराय ।
सूत्रं विरच्य निगमोदितकर्मवर्त्म देष्टुं कृतावतरणाय नमोऽस्तु भूयः ।।

बौधायन-श्रौतसूत्रं तैत्तिरीयशाखीयेष्वादिममिति प्राचीनानामाचार्याणामभिमतम् । न केवलं तैत्तिरीयेषु सूत्रेषु, अपि च सर्वेष्वपि श्रौतसूत्रेष्विदमादिममिति भाषाशास्त्रज्ञानां निश्चयः ।

बौधायनं श्रौतसूत्रं त्रिधा विभक्तं वर्तते, मूलसूत्रं, द्वैधसूत्रं, कर्मान्तसूत्रमिति, यथा-गृह्य-सूत्रे—मूलसूत्रं, परिभाषासूत्रं, शेषसूत्रमिति । तेषां समुच्चयेनैव कर्मानुष्ठेयं भवति । तेनैव क्रमेण सायणाचार्येण भाष्यं विरचितम् ।

सूत्रस्यास्य भवस्वामि-सायण-दामोदर-रामस्वामि-केशवस्वामि-सुदर्शनाचार्यप्रभृतीनां विंशत्यधिकसंख्याकानि भाष्यादीन्यासन्नित्यवगम्यते । तान्यंशत एवोपलभ्यन्ते, न समग्रतया । सर्वज्ञकल्पेन सायणाचार्येणास्य सूत्रस्य समग्रतया भाष्यं विरचितमिति तदीयदर्शपूर्णमास-भाष्यस्थ "शुल्बे निपुणतरं वक्ष्यामः, तत्तत्प्रकरणे वक्ष्यामः" इत्यादिवचनैर्निश्चितं प्रतीयते तथापि नेदानीं समग्रमुपलभ्यते ।

श्रौतसूत्रादीनां यथार्थज्ञानं भाष्य-वृत्त्याद्यधीनम् । बहोः कालात् पूर्वमेवाश्वलायनाप-स्तम्बादिसूत्राणि भाष्य-वृत्त्युपेतानि तैस्तैः प्रकाशितानि अद्यापि समुपलभ्यन्ते । परन्तु सर्व-प्रथमस्यास्य बौधायनश्रौतसूत्रस्य भाष्याद्युपेतस्य प्रकाशने न केनाप्यद्यावधि प्रयत्नः कृतो दृश्यते । इदानीमंशतोऽपि तत्र तत्रोपलभ्यमानानां भवस्वामिभाष्यम्, सायणभाष्यम्, रामस्वामिविवरणम्, सुबोधिनीवृत्तिः इत्यादीनामप्यप्रकाशने सर्वथा लोपस्यैव प्रसङ्गः समभूदिति अस्माकं प्रयत्नः ।

सुब्रायगणेशभट्टः कोड्लेकेरे
रामचन्द्रगणेशभट्टः कोड्लेकेरे

---

# वैदिक-कर्मकाण्ड-विषयकं श्रीभगवद्दयानन्दसरस्वतीस्वामिनाम् अभिमतम्

अत्र वेदभाष्ये कर्मकाण्डस्य वर्णनं शब्दार्थतः करिष्यते । परन्त्वेतैर्वेदमन्त्रैः कर्मकाण्डविनियोजितैर्यत्र यत्राग्निहोत्राद्यश्वमेधान्ते यद् यत् कर्त्तव्यं तत्तदत्र विस्तरतो न वर्णयिष्यते । कुतः ? कर्मकाण्डानुष्ठानस्यैतरेयशतपथब्राह्मणपूर्वमीमांसाश्रौतसूत्रादिषु यथार्थं विनियोजितत्वात् । पुनस्तत्कथनेनानृषिग्रन्थवत् पुनरुक्तपिष्टपेषणदोषापत्तेश्चेति । तस्माद् युक्तिसिद्धो वेदादिप्रमाणानुकूलो मन्त्रार्थानुसृतस्तदुक्तोऽपि विनियोगो ग्रहीतुं योग्योऽस्ति । ऋग्वेदादिभाष्यभूमिका, प्रतिज्ञाविषयः ।

# उपोद्घातः

## १. कल्पप्रादुर्भावः

### १. १. यज्ञः

प्राचीनभारतीयसमाजो यज्ञप्रधान आसीत् । सम्प्रत्युपलभ्यमानं सम्पूर्णमेव प्राचीनं भारतीयवाङ्मयं याज्ञिकप्रसङ्गैरोतश्च प्रोतश्च दरीदृश्यते । यज्ञो वै श्रेष्ठतमं कर्म (शत० ब्रा० १।७ १।५) इत्यास्थिषत मनीषिणः । यज्ञो धर्मश्च पर्यायवाचिनौ समजायेताम्, तत्र च श्रुतिरपि प्रमाणत्वेनोपन्यस्यते स्म ।[1] यज्ञो न केवलं वैयक्तिककामानामेव पूरकः, अपि तु मानवसमाजाभ्युदयाय कल्पत इत्यासीदास्था जनानाम् । सर्वमेध-पुरुषमेधसदृशा यागा यज्ञभावनायाश्चरमोत्कर्षं द्योतयन्ति । वार्षशतिकानां वार्षसहस्रिकाणां च सत्राणामुल्लेखः प्राचीनवाङ्मय उपलभ्यते ।[2] यज्ञसम्पादनं गव्यौषध्यादिद्रव्याधीनम्, गव्यौषध्यादिद्रव्याणि च कृषिगोपालनकर्माधीनम्, तदायत्तं पुनः प्रधानं सामाजिकं संघटनम् । अनया निमित्तनैमित्तिकशृङ्खलया समग्र एव मानवसमाजो यज्ञेन सम्बद्ध आसीत् । एवं सामाजिकान् आर्थिकान् धार्मिकान् सर्वान् ऐहिकामुष्मिकपदार्थान् यज्ञः स्वपरिधौ समववेष्टत् । यज्ञविहीनभारतीयसंस्कृतेः कल्पनापि न सम्भवति । प्राचीनभारतीय-समाजस्य धर्म-दर्शन-मनःसंवेदनादीनां परिज्ञानाय साङ्गोपाङ्गानां यज्ञानां सम्यगवबोध आवश्यक इति निष्कर्षः ।

अथ को नाम यज्ञः ? द्रव्यं देवता त्याग इत्याहुराचार्याः ।[3] परमदेवस्य प्रकृतिस्था विभिन्ना विभूतयः (शक्तयः) देवतापदेनाभिधीयन्ते । तत्र चेतनवद् व्यवहारो दृश्यते । मानवेन सहैतासां शक्तीनां सम्बन्धोऽग्निद्वारक इति देवतातत्त्वज्ञा आहुः । मानवः परमदेवं प्रति कृतज्ञताप्रकाशनार्थं स्वकीयं सर्वस्वं देवताभ्यः समर्पयितुं तमेव द्वारीकरोति । यतो देवैः सह मानवस्य सम्बन्धोऽग्निद्वारैव सम्भवति, स्वकीयसर्वस्वस्य (प्राणानां) च समर्पणस्य नास्ति सम्भवः; अतस्तन्निष्क्रयद्रव्यं (दधिपयआदि) अग्नय उपहरति मनुजः । तत्सन्नियोगेन चोद्दिष्टदेवतानामस्मरणपुरःसरं स्वत्वाधिकारं त्यजति सः । अस्याः प्रक्रियाया निर्वाहाय स परमदेवस्य वाणीम् (वेदम्) एवाश्रयति, यतो हि मानववाचि तत्सामर्थ्यं क्व, येन कर्म सम्पद्येत । द्रव्य-देवता-कर्मणां

---

१. यो हि यागमनुतिष्ठति, तं धार्मिक इति समाचक्षते । यश्च यस्य कर्ता स तेन व्यपदिश्यते यथा पाचको लावक इति । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते । न केवलं लोके वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' (ऋ० १०।९०।१६) इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति । पू० मी० १।१।२ शाबरभाष्ये ॥

२. वर्षशब्दो दिवसवाचीति मीमांसकाः ।

३. का० श्रौ० १।२।२॥

स्मारकत्वाद् मन्त्रा अप्यनुष्ठीयमानकर्मणाम् अङ्गान्युद्घोष्यन्ते यज्ञकोविदैः। अत एवोक्तम्—एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणम् ऋग्यजुर्वाभिवदतीति (गो० ब्रा० २।२।६)।

१. २. वेदः

ऋग्यजुःसामात्मको मन्त्रराशिर्वेदशब्देनाभिधीयते[1]। वेदो भारतीयजनमानसस्य श्रद्धास्पदमावहति। स परमात्मदेवस्याजरममरं काव्यमाघोष्यते[2], स च तादात्म्यसम्बन्धेन ब्रह्मपदभाग् भवति। सर्वज्ञानमयो हि सः, सर्वं वेदात् प्रसिध्यति[3]। धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिरिति[4] श्रुतिरेव परमप्रमाणत्वेनाङ्गीक्रियते स्म। मन्त्रायत्ता हि कर्मणां सम्पत्तिरित्यास्थासीद् भारतभूजुषाम्[5]। अत एव कर्म मन्त्रेण सम्बद्धं दृश्यते। कर्ममन्त्रयोः पारस्परिकसम्बन्धप्रतिपादनं हि विनियोग इत्याख्यायते। मन्त्रा अत्यन्तरहस्यमय्या भाषया स्फुरितानि संक्षिप्तवाक्यानि भवन्ति। तादृशो वाक्यस्य (मन्त्रस्य) व्याहर्ता (द्रष्टा) ऋषिरिति, तद् वाक्यसम्बोध्या च देवतेति प्रख्यायते[6]। कर्मणामनुष्ठानकाल ऋषिदेवताछन्दोविनियोगाः पदे पदेऽपेक्ष्यन्त इत्येषां प्रतिमन्त्रं बोध आवश्यको वेदाध्येतॄणाम्। एतेषां बोधमन्तरेण वेदस्याध्ययनं वाध्यापनं वातीव गर्ह्यं मन्यते[7]।

१. ३. ब्राह्मणम्

मन्त्राणाम् ऋषिदेवताछन्दोविनियोगानां कर्मकाण्डीयार्थानां च रक्षाप्रयासो ब्राह्मणग्रन्थेषु व्यधायि ब्रह्मर्षिभिः। अत एव 'विनियोजक ब्राह्मणम्' इति भण्यते। ब्राह्मणानि तावत् प्रसक्तानुप्रसक्तव्याख्यानैस्तथा वितन्वन्ति विषयं यथा कर्मणां क्रमिकानुष्ठानबोधो दुष्करो जायते। तथा च मन्त्रस्थपदानाम् उच्चारण-स्वरूपनिष्पति-पदार्थ-कर्मानुष्ठानादीनां विशिष्टबोधस्यावकाशो न शक्यते लब्धुम्। इमां दुरूहताम् अनुभूय कारुणिकैः प्राचीन विपश्चिद्भिर्वेदाध्ययनसहायका ग्रन्था रचिताः, ये साक्षादुपकारकत्वाद् वेदाङ्गानीति प्रख्यायन्ते।

१. ४. वेदाङ्गानि

यास्को वेदाङ्गप्रादुर्भावं स्वविशिष्टशैल्या समासतो वर्णयामास—साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् प्रादुः। उपदेशाय

---

१. कर्मकाण्डे तु मन्त्रब्राह्मणयोर्वेदनामधेयत्व प्रसिद्धम्।

२. देवस्य पश्य काव्यं न ममार न जीर्यति। अथर्व० १०।८।३२।

३. मनु० २।७।। १२।९७।।   ४. मनु० २।१३।।

५. पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे। निरु० १।२।।

६. यस्य वाक्यं स ऋषिः। या तेनोच्यते सा देवता। ऋक्सर्वानुक्रमणी २।५।।

७. यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति। …तस्मादेतानि मन्त्रे मन्त्रे विद्यात्। आर्षेयब्राह्मणे १।१।।

ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च (निरु० १।२०) इति ।

अस्यायमभिप्रायः—अमुष्मात् कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवंलक्षणः फलविपरिणामो भवतीति ज्ञानचक्षुषा येऽपश्यन् ते ऋषय आदौ बभूवुः।[1] ततस्तेऽवरकालोत्पन्नेभ्यः सविनियोगार्थादिकान् मन्त्रान् प्रतिपादयामासुः । ते चावरे श्रुतज्ञत्वात् श्रुतर्षयः प्रसिद्धाः । श्रुतर्षयस्तु ततोऽवरकालजातानाम् अल्पसामर्थ्यम् अनुभवन्तस्तदनुकम्पया चरणशाखाविभागेन वेदाङ्गप्रणयनेन च सुगमेनोपायेन वेदविद्यां प्रतिपादयामासुरिति । तथा च कर्मकाण्डदृष्ट्या शाखानां विभागो वेदाङ्गानां च प्रणयनं जातमित्याकूतं भवति । अत्र वेदाङ्गानां विकासोपक्रममात्रमभिहितम्, न तु कालविशेषोऽपि ।

वेदाङ्गानां साक्षादुपकारकत्वं तावदेवं प्रसिध्यति—शिक्षया निर्दोषवर्णोच्चारणपूर्वको वेदाध्ययनविधिरधिगम्यते । छन्दःशास्त्रेण नियताक्षरपादबद्धानां गायत्र्यादिछन्दसां बोधः । कल्पेन छन्दोविशेषस्य कर्मविशेषे विनियोगः कर्मणां क्रमश्च परिज्ञायते । व्याकरणेन शब्दस्वरूपनिष्पत्तिरवबुध्यते । निरुक्तेन मन्त्रार्थप्रतिपादनं दैवतज्ञानं च जायते । ज्योतिषमपि श्रुतिचोदितकर्माङ्गभूतस्य कालस्य परिज्ञानायापेक्ष्यते । तथा चाह शिक्षाकारः—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ इति ।

## २. वेदाङ्गकल्पः

### २. १. कल्पस्य स्वरूपं विभागश्च

कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति कल्पः[2] इति व्युत्पत्त्या यागप्रयोगप्रतिपादको ग्रन्थः कल्प इत्यभिधीयते । कल्पशब्दो यद्यपि मुख्यया वृत्त्या यागप्रयोगप्रतिपादकशास्त्रम् अभिदधाति, तथापि गौण्या तत्सदृशानि शास्त्राण्यपि सगृह्णाति । तथा चास्मिन् वेदाङ्गे चतुर्विधानि शास्त्राणि समाविशन्ति—श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्राणि, शुल्वसूत्राणि चेति । वस्तुतस्तु शुल्वसूत्राणां श्रौत-सूत्रेष्वेवान्तर्भूतत्वात् त्रितय एव कल्पः । त्रितयमप्येतच्छास्त्रं सूत्रशैल्या प्रणीतम्, ब्राह्मणग्रन्थप्रणयनकालानन्तरं चास्य प्रणयनकालो विद्वद्भिः स्वीक्रियते । तत्र श्रौतसूत्रेषु श्रुतिविहितानां यागानाम् अनुष्ठानविधिः, तत्तद्विधौ च मन्त्रविनियोगः प्रोच्यते । गृह्यसूत्रेषु गृहस्थैरनुष्ठेया यागाः संस्काराश्चोपदिश्यन्ते । धर्मसूत्रेषु वर्णाश्रमराजप्रजादिभिः पालनीया धर्मा विव्रियन्ते । अत्र केचन ग्रन्थाः पद्यबद्धा अपि दृश्यन्ते । शुल्बसूत्रेषु श्रौताङ्गभूतेषु वेदिमानादिविषयाः प्रदिश्यन्ते ।

---

१. द्र०—दुर्गभाष्यम् ।
२ द्र०—सायणीय ऋग्वेदभाष्यभूमिका ।

२. २. ब्राह्मण-कल्प-सम्बन्धः

श्रौतकल्पः स्वशाखीयब्राह्मणमुपजीव्यत्वेनाश्रयतीत्यौत्सर्गिको नियमः। ब्राह्मण-कल्पयोः प्रणयनलक्ष्यभेदादयं नियमः क्वचिदपोद्यतेऽपि। ब्राह्मणं हि नाम त्रयी-तदनुष्ठेयकर्म-तद्रहस्यविदो ब्रह्मनामकस्य ऋत्विग्विशेषस्य तत्तत्कर्मप्रसङ्गे समभिव्याहृतं व्याख्यानात्मकं वाक्यम् इति शक्यते परिभाषितुम्। तत्र विध्यर्थवादनिन्दाप्रशंसापरकृतिपुराकल्पादयो विविधा विषयाः समाविश्यन्ते[1]। कल्पस्तु व्यवस्थितानाम् आनुक्रमिकाणां कर्मणां निरूपकं शास्त्रम्। कल्पस्य कर्मानुष्ठानसौकर्यमभिसमीक्ष्यावोचद् भट्टः कुमारिलः—

वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः।
न तु कल्पैर्विना केचिन् मन्त्रब्राह्मणमात्रकात्॥[2] इति।

आचार्याणां मतभेदा ब्राह्मणवत् कल्पेष्वपि प्रदर्श्यन्ते। स्वशाखापरम्परोल्लङ्घनेन कल्पकाराः कर्मणामनुष्ठानविधीन् विकल्पांश्च शाखान्तरेभ्योऽपि संगृह्णन्ति सर्वशाखाप्रत्ययैककर्मन्यायेन[3]। तथा हि—तैत्तिरीयशाखासम्बन्धिभिः सूत्रैर्मैत्रायणी-काठक-माध्यन्दिनशाखानां मन्त्रा विधयश्च स्वीकृताः। तद् यथा—ब्राह्मणे वत्सापाकरणार्था पालाशी शाखा विधीयते, सूत्रे पुनः शमीशाखाया विकल्पः स्मर्यते। क्वचित् स्वशाखावहेलनया शाखान्तरीया असम्बद्धा मन्त्रा विनियोगाश्चोद्गृहीता दृश्यन्ते सूत्रेषु। तद् यथा—आपस्तम्बश्रौतसूत्रे वाजसनेयवरणतो मन्त्रा विनियोगाश्चोद्धृत्य स्वाङ्गीकृताः। अपि च, ब्राह्मणकल्पयोरयं विशेषो यद् ब्राह्मणेष्वश्रूयमाणानि प्रायश्चित्तानि कल्पेषु स्मर्यन्ते इति।

२. ३. विधि-क्रम-विनियोगज्ञानोपायाः

विधीनां यथाक्रमं प्रतिपादनं विनियोगप्रदर्शनं च कल्पस्य प्रधानं लक्ष्यमित्युक्तं पुरस्तात्। अथ कथं विधीनां पौर्वापर्यस्य मन्त्रविनियोगस्य च निर्णयः? बौधायनकल्पप्रदर्शितदिशा किमपि निवेद्यते समासतः—

(१) छन्दः—आम्नायक्रमेण मन्त्राणां विनियोगो भवति। तत्र क्वचिद् मन्त्रेष्वेव विधिरपि निर्दिश्यते, तन्मन्त्रस्य तत्रैव विनियोग इष्यते। विशेषस्तु मीमांसोक्तलिङ्गादिप्रमाणैर्निर्णीयते।

(२) ब्राह्मणम्—मन्त्रलिङ्गाभावे ब्राह्मणानुरोधेन विनियोगो भवति। यथा 'इषे त्वेति शाखामाच्छिनत्ति' इति। ब्राह्मणं क्वचिदमन्त्रकमपि कर्म विदधाति। यथा अन्न्याधाने यथावर्णं प्रक्रमव्यवस्था विहिता।

(३) प्रत्ययः—प्रत्ययो नाम प्रमाणम्। छन्दोगबह्वृचाध्वर्युप्रामाण्येन पदार्थनियमो भवति। यथा सोमयागे रथन्तरादिसामवशेन ऐन्द्रवायवादिग्रहानुपूर्वीनियमः।

---

१. आ॰प॰ श्रौ॰ २४.१।३२,३३॥ ब्रह्माण्डपुराणे १।३३।४७,४८॥
२. तन्त्रवार्त्तिके १।३।११ (पृष्ठ २३२ पूना सं॰)।
३. पूर्वमीमांसा २।४।८-३२॥

(४) न्यायः—श्रौते तन्त्रे प्रस्तुते श्रौतवचनं चेन्नाधिगम्यते, तर्हि स्मार्त्तवचनेन विधि-निर्वाहः। यथा भागप्राशनेऽविहितमप्याचमनं स्मार्त्तवचनादनुष्ठीयते।

(५) सिद्धिः (समाप्तिः)—उपक्रान्तस्य कर्मणः सिद्ध्यर्थं प्रतिनिधिद्रव्यं कल्प्यते। यथा सोमेऽपहृते तृणामिषवेण कर्म संस्थीयते।

(६) श्रुतिनिर्देशाशीरादयः—मन्त्रविनियोगज्ञानोपायत्वेन श्रुत्यादयोऽपि निर्दिश्यन्ते बोधायनेन। एतेषां व्याख्योदाहरणानि सायणेन भाष्योपक्रम एव प्रदर्शितानि।

## ३. श्रौतकल्पवाङ्मयम्

श्रौतकल्पस्य सुविशालं वाङ्मयमद्यापि विद्यते, ग्रन्थेषु सूच्यते च। तत्र प्रथमतस्तत्तद्-वेदसम्बद्धानि सुविस्तृतानि सूत्राणि समुपलभ्यन्ते। तेषां विवरण–भाष्य–वृत्ति–टीका अपि प्रचुरसंख्याका विद्यन्ते मुद्रिता अमुद्रिताः। पद्धतिग्रन्थाः प्रयोगाश्च खल्वपि बहव उपलभ्यन्ते। तत्रापि हौत्रप्रयोगः, आध्वर्यवप्रयोगः, औद्गात्रप्रयोग इत्येवम् ऋत्विग्विशेषकर्मानुष्ठानप्रति-पादका हस्तलिखितग्रन्थाः कर्मकाण्डिनां कुलेषु विविधपुस्तकालयेषु च सुरक्षिताः सन्ति। प्रतिवेदं मौलिकाः श्रौतग्रन्था इहोपन्यस्यन्ते—

### ३. १. ऋग्वेदीय-श्रौतसूत्राणि

(१) आश्वलायन-श्रौतसूत्रम् — पितृमेध-प्रवरसहितम्, भाष्य-वृत्तियुतम्।
(२) शाङ्खायन-श्रौतसूत्रम् — पितृमेधसहितम्, भाष्यादियुतम्।
(३) शौनक-श्रौतसूत्रम् — उद्धृतं केवलम्।

### ३. २. कृष्णयजुर्वेदीय-श्रौतसूत्राणि

(१) बौधायन-श्रौतसूत्रम् — शुल्ब-पितृमेध-प्रवरसहितम्, भाष्यादियुतम्।
(२) वाधूल-श्रौतसूत्रम् — व्याख्यासहितम्, अप्रकाशितम्।
(३) मानव-श्रौतसूत्रम् — शुल्ब-पितृमेध-प्रवरसहितम्, भाष्य-पद्धतियुतम्।
(४) भारद्वाज-श्रौतसूत्रम् — पितृमेध-परिशेषसहितम्।
(५) आपस्तम्ब-श्रौतसूत्रम् — शुल्ब-पितृमेध-प्रवरसहितम्, भाष्य-वृत्तियुतम्।
(६) काठक-श्रौतसूत्रम् — पितृमेधसहितम्।
(७) सत्याषाढ(हिरण्यकेशि)श्रौतसूत्रम् — शुल्ब-पितृमेध-प्रवरसहितम्, व्याख्यायुतम्।
(८) वाराह श्रौतसूत्रम् — शुल्व-प्रवरसहितम्।
(९) वैखानस-श्रौतसूत्रम् — पितृमेधसहितम्।
(१०) लौगाक्षि-श्रौतसूत्रम् — उद्धृतं केवलम्।
(११) मैत्र-श्रौतसूत्रम् — उद्धृतं केवलम्।

### ३. ३. शुक्लयजुर्वेदीय-श्रौतसूत्रम्

(१) कात्यायन-श्रौतसूत्रम् — शुल्ब प्रवरसहितम्, भाष्य वृत्ति-व्याख्या-पद्धतियुतम्।

३. ४. सामवेदीय-श्रौतसूत्राणि

(१) आर्षेय(मशक)कल्पसूत्रम् — व्याख्यायुतम् ।
(२) क्षुद्रकल्पसूत्रम् — व्याख्यायुतम् ।
(३) जैमिनीय-श्रौतसूत्रम् — वृत्तियुतम् ।
(४) लाट्यायन-श्रौतसूत्रम् — भाष्य-व्याख्यायुतम् ।
(५) द्राह्यायण-श्रौतसूत्रम् — व्याख्यायुतम् ।
(६) निदानसूत्रम् — व्याख्या-वृत्तियुतम् ।

३. ५. अथर्ववेदीय-श्रौतसूत्रम्

(१) वैतानसूत्रम् — व्याख्यायुतम् ।

४. बौधायन-श्रौतसूत्रम्

कर्मकाण्डे यजुर्वेदस्यैव प्राधान्यम्, तत्रानुपूर्व्यात् कर्मणां स्वरूपस्य समाम्नानात् । ऋग्वेदे तु याज्या-पुरोनुवाक्याः शस्त्राणि च समाम्नायन्ते, स्तोत्राणि च सामवेदे । तथा च भित्तिस्थानीयो यजुर्वेदः, चित्रस्थानीयावितरौ—इति सायणः प्राह[1] । अत एव याजुषाणां श्रौतसूत्राणां स्थानं प्रतिष्ठिततमं वर्त्तते कर्मकाण्डवाङ्मये । तत्रापि बौधायनसूत्रं गौरवास्पदं भजते—सुगमत्वात्, स्पष्टत्वात् प्राचीनतमत्वाच्च । प्राचीनाचार्यैरपि तस्य प्राथम्यं प्रतिपादितम् । तथा च भट्टभास्करः स्वतैत्तिरीयसंहिताभाष्योपक्रमे बोधायनप्रथमान् सूत्रकारान् प्रणमति—

प्रणम्य शिरसाचार्यान् बोधायनपुरःसरान् ।
व्याख्यैषाध्वर्युवेदस्य यथाबुद्धि विधीयते ॥ इति ।

सत्याषाढश्रौतसूत्रस्य वैजयन्तीव्याख्याकृद् महादेवोऽपि सादरम् इदंप्रथमतया बोधायनं स्मरति—

यत्राकरोत् सूत्रमतीव गौरवात् बोधायनाचार्यवरोऽर्थगुप्तये ।
तथा भरद्वाजमुनीश्वरस्तथापस्तम्ब आचार्य इदं परं स्फुटम् ॥ इति ।

आपस्तम्बीया कृतिः सूत्रत्वेन प्रसिद्धासीत्, बोधायनीया त्वियं प्रवचनत्वेनेति बोधायनीयगृह्यसूत्रेण (३।६।६) सिध्यति—'कण्वाय बोधायनाय प्रवचनकारायापस्तम्बाय सूत्रकाराय' इति । सायणोऽपि बौधायनश्रौतसूत्रभाष्ये आपस्तम्बश्रौतसूत्रं सर्वत्र सूत्रपदेनोद्धरति । सूत्रेऽस्मिन्ननेकं प्रकरणं ब्राह्मणशैलीमनुसरति ।

४. १. बौधायनश्रौतसूत्रस्वरूपम्

बौधायनश्रौतसूत्रे द्विविधो विभाग उपलभ्यते—प्रश्नाध्यायसूत्रात्मकः, प्रश्न-खण्ड-(कण्डिका)-सूत्रात्मकश्च । तत्र प्रश्नाध्यायसूत्रात्मको विभागः प्राचीनतरोऽपरश्चोत्तरकालिकः ।

---

१. तैत्तिरीयसंहिताभाष्यभूमिकायाम् ।

भवस्वामी सायणश्च स्वस्वविवरणभाष्ययोः खण्डविभागं नोदलिखताम् । हस्तलिखितग्रन्थेषु खण्डविभागे एकरूपता नोपलभ्यते । प्रश्नविभागेऽपि वैषम्यं दरीदृश्यते, किमु कथनं खण्डसूत्र-विभागस्य । अग्निष्टोमे त्रिविधो विभाग आश्रित इति कैलेण्डः[1] । विषयविभागे खल्वपि व्यति-करो दृश्यते, यथा प्रवर्ग्यः क्वचिद् अग्निष्टोमात् पूर्वं विन्यस्यते, क्वचित् परम् ।

त्रिंशत्प्रश्नात्मकोऽयं ग्रन्थः षोढा विभक्तुं शक्यते—

(१) प्रधानसूत्रम्—प्रथमप्रश्नप्रभृत्या एकोनविंशतितमात् प्रश्नात् विधिप्रधानम् ।

(२) द्वैधसूत्रम्—विंशतितमात् प्रश्नादा त्रयोविंशतितमप्रश्नाद् वैकल्पिकविधिसंग्रहः ।

(३) कर्मान्तसूत्रम्—चतुर्विंशतितमप्रश्नमारभ्य षड्विंशतितमप्रश्नान्तं विधिशेषः ।

(४) प्रायश्चित्तसूत्रम्—सप्तविंशतितमादूनत्रिंशत्तमप्रश्नपर्यन्तं प्रायश्चित्तनिरूपणम् ।

(५) शुल्बसूत्रम्—त्रिंशत्तमे प्रश्ने वेदिमानादिप्रतिपादनम् ।

(६) प्रवरसूत्रम्—ग्रन्थपरिशिष्टं प्रवरप्रतिबोधकम् ।

### ४. २. बोधायनप्रतिपादितविषयविभागः

बोधायनप्रतिपादितविषयाः प्रतिप्रश्नं विभज्य प्रदर्श्यन्ते । प्रधाना विषया एवात्र संगृह्यन्ते—

१. दर्शपूर्णमासौ
२. अन्याधेयम् (उपव्याहरणादि)
३. दशाध्यायिकः (पुनराधेयादिः)
४. पशुबन्धः
५. चातुर्मास्यानि
६-८. अग्निष्टोमः
९. प्रवर्ग्यः
१०. अग्निचयनम्
११. वाजपेयः
१२. राजसूयः
१३. इष्टिकल्पः
१४. औपानुवाक्यम् (यथासंहितम्)
१५. अश्वमेधः
१६. द्वादशाहादिः
१७. उत्तरा ततिः (अतिरात्रादिः)
१८. उत्तरा ततिः (एकाहाः)
१९. काठकम् (सावित्रादि)
२०-२३ द्वैधसूत्रम्
२४-२६ कर्मान्तसूत्रम्
२७-२९ प्रायश्चित्तसूत्रम्
३०. शुल्बसूत्रम्
परिशिष्टम्—प्रवरसूत्रम्

### ४. ३. बौधायनश्रौतसूत्रे स्मृता आचार्याः

बौधायनश्रौतसूत्र इम आचार्याः स्मर्यन्ते—आञ्जीगविः, आत्रेयः, आर्तभागीपुत्रः, औपमन्यवः, औपमन्यवीपुत्रः, कात्यः, कौणपतन्त्रिः, गौतमः, ज्यायान् कात्यायनः, दक्षिणाकारो राथीतरः, दीर्घवात्स्यः, बौधायनः, माङ्गलः, मैत्रेयः, मौद्गल्यः, राथीतरः, राथीतराः, वाधूलकः, शालीकिः ।

---

१. कैलेण्डसंपादित-बौधायनश्रौतसूत्रस्यामुखे पृ० ११ ।

### ४. ४. बौधायनश्रौतसूत्रकर्तृत्वम्

द्वैधकर्मान्तयोः प्रवर्ग्य-प्रायश्चित्त-काठकचयनादि प्रकरणानां संकेतानुपलम्भात्, आशिःष्विति (बौ० श्रौ० २३।८), द्वयोर्होम इति (बौ० श्रौ० २०।६), चरुमुखेष्विति (बौ० श्रौ० २०।८) इत्यादिविधीनां द्वैधनिर्दिष्टानामपि प्रधानसूत्रेऽभावाच्च केचित् परिकल्पयन्ते नैषा सम्पूर्णा कृतिरेकस्यैव प्रणेतुः—इति। अपि च—द्वितीयप्रश्नस्य प्रारम्भिका एकादश खण्डा औत्तरकालिकाः। 'ताः संवत्सरे पुरस्तादादध्यादिति' (बौ० श्रौ० २४।१५) इति कर्मान्ते निर्दिष्टं सूत्रं न क्वचिदुपलभ्यते, द्वितीयप्रश्नस्य चतुर्दशः खण्डोऽस्य न्याय्यं स्थलम्। एवंविधानि बहूनि संदिग्धानि स्थलानि साम्प्रतिकैरनुसन्धातृभिः संकलितानि। तस्मादनेककर्तृकेयं कृतिरित्यातिष्ठन्त इमे।

बूहलर-काशीकरप्रभृतयस्तु विद्वांसो नैतन्मतं क्षोदक्षमं मन्यन्ते[1]। भारतीयपरम्परा तावत् सम्पूर्णमिमं ग्रन्थमेकस्यैवाचार्यस्य कृतिमधिगच्छति। अपि च—बौधायनधर्मसूत्रे (१।२।३।१५।।२।८।१६।६) बौधायनगृह्यसूत्रं (२।७।।१७।१८) स्पष्टं निर्दिश्यते, बौधायनगृह्यसूत्रं च बौधायनश्रौतसूत्र आवृतमिति निर्विवादम्। भाषा शैली च सर्वत्र समाने एव वर्त्तेते। एकस्याचार्यस्य कृतित्वेऽपि कालान्तरे परिष्काराः सम्भवन्त्येवेति बौधायनस्यैवायं सम्पूर्णो ग्रन्थ इति निष्कर्षः।

### ४. ५. बौधायन श्रौतसूत्राश्रयः

बौधायनश्रौतसूत्रं प्रधानतस्तैत्तिरीयसंहितामाश्रयति। तस्या विकृताः संदिग्धाश्चापि पाठा अत्राङ्गीक्रियन्ते[2]। तैत्तिरीयसंहितायां (तृतीयकाण्डे) प्रोक्तमौपानुवाक्यम् अस्मिन् सूत्रे (चतुर्दशप्रश्ने) विव्रियते। तैत्तिरीयसंहितायां वर्णितानि चाहीनसत्राण्यत्र षोडशे प्रश्नेऽनुक्रियन्ते। एवं सत्यपि स्वसंहिताया मन्त्राणां सकलपाठ उद्ध्रियते, न तु प्रतीकपाठ आपस्तम्बवत्। कोऽत्र हेतुः ? किञ्च, तैत्तिरीयसंहितायाम् असंगृहीता विषयाः प्रकृतसूत्रे समुपलभ्यन्ते, यथा—उपवसथगव्यङ्गभूताया द्यूतक्रीडायाः (बौ० श्रौ० २।६) विवरणम्, पाप्मविनिधिमन्त्रसमूहः (बौ० श्रौ० २।५) निरूढपशुबन्धस्यान्त्योभागः, चातुर्मास्यस्य तिथिनियमः, राजसूयेऽभिषेकपात्रधनुषोः सम्याय प्रदानम् इत्येवमादयो विषयः। इमान् अन्यांश्चैतादृशान् व्यतिकरान् अनुनिशम्य समादधति केचित्—सौत्रीं शाखामाश्रयत्येतत् सूत्रं यतोऽस्य संहिता ब्राह्मणं वा न क्वचिद् निर्दिश्यत इति। अतो नैतत् सूत्रम् तैत्तिरीयशाखया सम्बध्यते; आपस्तम्बसूत्रस्य तु तैत्तिरीयशाखया साक्षात् सम्बन्धः, तस्याः प्रतीकमन्त्रपाठोद्धरणात् शाखान्तरमन्त्राणां सकलपाठोद्धरणात्, क्वचित् हस्तलिखितग्रन्थेषु च 'आपस्तम्बी' संहितेति निर्देशाच्च। शौनकीय चरणव्यूहस्तैत्तिरीयचरणस्य द्वौ भेदावाह—औखेयाः[3] खाण्डिकेयाश्च। तत्रापस्तम्बी शाखा

---

१. कुन्दनलाल शर्मा कल्पसूत्र, पृ० ४४, ४८।। २. अवान्तरशाखारूपा अपि संभवन्ति।

३. अपि द्र०-तै० प्रा० १०।२०।।१६।५३।।

खाण्डिकेयान्तर्गता; परिशेष्याद् बौधायनी औखीयेषु । कातीयपरिशिष्टे चरणव्यूहे तु बौधायनी अपि औखेयेषु पठ्यते । शौनकीयपक्ष एवात्र युक्ततरकः प्रतीयते । तथा चेङ्गितचरा व्यतिकरा समाधातुं शक्यन्ते ।

वाजसनेयब्राह्मण-बौधायनश्रौतसूत्रयोर्बहुधा साम्यमुपलभ्यते । तद्यथा—वयांसि व्याचक्ष्व (बौ० श्रौ० ६।१४।। शत० ब्रा० ३।३।३।३) इति प्रैषस्य, तस्य सर्पिरासेचनं कृत्वा (बौ० श्रौ० २।१४।। शत० ब्रा० २।१।४।५) इत्यादि पदप्रयोगस्य, कृत्तिकाः खल्विमाः प्राचीं दिशं न परिजहति (बौ० श्रौ० २७।५) एता ह वै प्राच्यै दिशो न च्यवन्ते (शत० ब्रा० २।१।२।३) अथैता एव प्राच्यो दिशो न यन्ति (शत० ब्रा० काण्व १।१।२।१) इति कर्मणः । एतेन वाजसनेयब्राह्मणद्वयस्य बौधायनश्रौतसूत्रेण परिचय आसीदित्येव सिध्यति, न तु पूर्ववृत्तित्वम्; यतो ब्राह्मणद्वयम् एके (मा० शत० ब्रा० ४।२।४।८।। काण्व शत० ब्रा० ५।४।४।५) इति पदेन कृष्णयजुर्वेदीयान् अध्वर्यून् (बौ० ७।८) निर्दिशतीति कैलेण्डः[1] । उभयोर्याज्ञिकपरम्परायाः समानत्वादप्येतत् सम्भवतीति बोधायन-ब्राह्मणपौर्वापर्यं न संदिह्यत इति[2] ।

## ४. ६. बौधायनश्रौतसूत्रकालः

बौधायनश्रौतसूत्रे (२७।५) प्राच्या दिशो निर्धारणं कृत्तिकानां वा श्रवणस्य वा चित्रास्वातीमध्यमस्य वा प्रेक्षणाद् विधीयते । नक्षत्राणामयं स्थितिविशेषः केषांचन मतेन ख्रिस्तीय-षष्ठशताब्द्याम्, अन्येषां मतेन खीस्तपूर्वैकादशशताब्द्याम्, अपरेषां गणनया तु खीस्तपूर्वत्रिंशदधिकत्रिशतोत्तरसहस्रतमे वर्षे बभूवेति न निर्णयाय कल्पते बोधायनकालस्य[3] । अतोऽन्यथा प्रयस्यते । बौधायनसूत्रं तावदापस्तम्बश्रौतसूत्रात् प्राचीनतरम्, बौधायनश्रौतसूत्रेऽग्निष्टोमसंस्थासूक्थ्यषोडश्यतिरात्रमात्राणामुपदेशात्, वाजपेयस्य सम्भारेषु निर्दिष्टेष्वप्यधिकारिणोऽनिङ्गितत्वात्, दीक्षाविधौ सुरानुपसंग्रहात्, राजसूये 'एष वो भरतो राजा' इति निर्देशात्, अभिचारविधीनां स्वल्पत्वात्, औपानुवाक्यस्य ब्राह्मणशैल्या रहस्योद्घाटनपरत्वाच्च । आपस्तम्बकल्पश्च प्रायः पाणिनिकालिकः, पाणिनिः पुनः खीस्तपूर्वसप्तमशताब्द्यां जातः । अत आपस्तम्बश्रौतसूत्रकालः खीस्तपूर्वाष्टमशताब्दीदेशीयः, बौधायनश्रौतसूत्रकालश्च खीस्तपूर्वदशमशतब्दीदेशीय इति परिकल्प्यत आधुनिकैः[4] । भारतीयैतिह्यपरम्परानुसारं तु खीस्ताब्दादुपत्रिसहस्रवर्षपूर्वं बौधायनस्य कालः ।

## ५. बौधायनश्रौतसूत्रस्य व्याख्यातारः

बौधायनश्रौतसूत्रं बहुभिः श्रौतमर्मज्ञैर्व्याख्यातम्, परन्तु सम्प्रति तेषां कृतयोऽज्ञात एवोपलभ्यन्ते, ताश्चापि हस्तलिखितमातृकासु निक्षिप्ताः स्वप्रकाशनं प्रतीक्षन्ते । तत्र यथाज्ञातं केचन व्याख्याकारा अत्रोल्लिख्यन्ते—

---

१. कैलेण्ड, काण्वशतपथभूमिकायां पृ० ९८,९९।।

२. कुन्दनलाल शर्मा कल्पसूत्र, पृ० ४७।। ३. कुन्दनलाल शर्मा, कल्पसूत्र, पृ० ४९ ।

४. कुन्दनलाल शर्मा, कल्पसूत्र, पृ० ५० ।

### ५. १. भवस्वामी

भवस्वामी बौधायनश्रौतसूत्रस्य प्राचीनतमो व्याख्याकार आसीत्। अस्योल्लेखो भट्टभास्करमिश्रेण स्वीयतैत्तिरीयसंहिताभाष्यादावकारि। तथा हि—

वाक्यार्थैकपराण्यधीत्य च भवस्वाम्यादिभाष्याण्यतो
भाष्यं सर्वपथीनमेतदधुना सर्वीयमारभ्यते॥ इति

सायणोऽपि भवस्वामिनम् 'अभियुक्त' पदेन बहुकृत्वः संस्मृत्य तं प्रति महान्तमादरं प्रदर्शयति बौधायनश्रौतसूत्रभाष्ये। विवरणपदभाजो भवस्वामिव्याख्यायाः सम्प्रत्युपलभ्यमाना हस्तलिखितकोशा दुःशोधत्रुटिबहुला अशुद्धभ्रष्टपाठाकीर्णा वर्तन्ते। इदं विवरणमादितश्चतुर्दशसु प्रश्नेषु अतिरात्र-एकादशिनी-सौत्रामणी-अप्तोर्यामयागेषु द्वैध-कर्मान्तसूत्रयोश्च सुरक्षितमिति कॅलेण्डो बौधायनश्रौतसूत्रामुखेऽसूसुचत्।

### ५. २. गोपालः

बौधायनश्रौतसूत्रस्य कर्मान्तप्रकरणे (प्रश्न २४-२६) गोपालो नाम विद्वान् विवरणमिध व्याख्यानं व्यरीरचत्। कर्मकाण्डकुशलस्यास्य 'गोपालकारिकाः' अपि श्रौतिकुलेषु प्रसिद्धाः सन्ति।

### ५. ३. सायणः

अस्य विषयेऽनुपदं वक्ष्यते विस्तरेण।

### ५. ४. वासुदेवदीक्षितः

बौधायनश्रौतसूत्रस्याग्निप्रश्ने (दशमे प्रश्ने) वासुदेवदीक्षितप्रणीतस्य महाग्निसर्वस्वाख्यभाष्यस्य हस्तलेखाः समुपलभ्यन्ते। एकादशिन्याम् (सप्तदशे प्रश्ने) अप्यस्य विदुषो व्याख्या विद्यते।

### ५. ५. वेङ्कटेश्वरः

वेङ्कटेश्वरः कर्मान्तसूत्रे (प्रश्न २४-२६) भाष्यं प्रणीतवान्, तस्य हस्तलेखाः सुरक्षितास्तिष्ठन्ति।

### ५. ६. द्वारकानाथयज्वा

बौधायनश्रौतसूत्रस्य प्रायश्चित्त (प्रश्ने २७-२९) शुल्ब (प्रश्न ३०) प्रकरणयोः द्वारकानाथयज्वरचिता व्याख्या समुपलभ्यते।

### ५. ७. महादेववाजपेयी

बालमनोरमाकारस्य वासुदेवदीक्षितस्य पिता महादेववाजपेयी (खीस्तीय-सप्तदशशताब्द्यां जातः) बौधायनश्रौतसूत्रस्य 'सुबोधिनी' नाम्नीं वृत्तिं प्रणिनाय। तत्र द्वितीयप्रश्नमारभ्या पञ्चमप्रश्नात् चत्वारः प्रश्ना भवस्वामिकृत विवरणमाधृत्यातिविस्तरेण व्याख्याताः।

महादेवोऽयं तञ्जावुरराज्यस्य मन्त्रिणस्त्र्यम्बकरायाध्वरिणोऽध्वर्युरासीत्। सुबोधिन्यामनेकं श्रौतसूत्रम् उद्ध्रियते। सामवेदस्य द्राह्यायणश्रौतसूत्रमत्रोद्धृतं, न तु लाट्यायनश्रौतसूत्रम्। कर्मान्तनाम्नोद्धृतानि बहूनि वचनानि सम्प्रत्युपलभ्यमाने बौधायनश्रौतसूत्रे नोपलभ्यन्ते। बौधायनश्रौतसूत्रस्यानेकपाठभेदानामत्र निर्देशात् सूत्रपाठसंशोधन इयं वृत्तिर्महत् साहाय्यं विदध्यात्।

### ६. बौधायनकल्पसम्बद्धाः प्रयोगकाराः

बौधायनश्रौतसूत्रेण सम्बद्धाः प्रयोगग्रन्था अप्युपलभ्यन्ते। कर्मणां क्रियात्मकानुष्ठान इमे ग्रन्थाः परमोपयोगिनो भवन्ति। केचन प्रसिद्धाः प्रयोगकारा इहोल्लिख्यन्ते—

#### ६. १. केशवस्वामी

प्रयोगकारेषु प्राचीनतमः केशवस्वामी प्रख्यायते। अनेन प्रणीते 'प्रयोगसार' नामके ग्रन्थे प्रायेण सर्वे प्रधानयागा वर्ण्यन्ते। धूर्तस्वामिकृतस्यापस्तम्बश्रौतसूत्रभाष्यस्य वृत्तिकारो- ऽग्निचित् केशवस्वामिनः स्मरति। तथैवापस्तम्बश्रौतसूत्रवृत्तिकारो रुद्रदत्तोऽपि बहुधैनमुद्- धरति।

#### ६. २. सायणः

सायणाचार्यो 'यज्ञतन्त्रसुधानिधि' नामकं प्रयोगग्रन्थं व्यरचयत्। सा चास्य चरमा कृतिरिति प्रसिद्धिः।

#### ६. ३. अनन्तदेवः

अनन्तदेवः खीस्तीयसप्तदशशताब्द्यां (१६४५–७५) बहून् प्रयोगग्रन्थान् रचयामास। अयं च धर्मशास्त्रकारत्वेनापि प्रसिद्धः।

#### ६. ४. शेषवंश प्रभवाः

शेषवंशप्रभवैरनेकपण्डितैर्लिखिताः प्रयोगग्रन्था उपलभ्यन्ते।

### ७. बौधायनश्रौतसूत्रभाष्यकारः सायणः

#### ७. १. सायणपरिचयः

दिष्ट्या प्रथितयशा विपश्चिदग्रचो वैदिकवाङ्मयोद्धारकः सायणाचार्यः स्वकृतीनामा- दावात्मानं स्वयमेव पर्यचीचयत। अस्य पिता मायणो, माता श्रीमती, ज्यायान् भ्राता माधवः, कनीयांश्च भोगनाथ आसीत्। अयं च गोत्रेण भारद्वाजः, शाखया तैत्तिरीयः, सूत्रेण च बौधायनीयो बभूव। त्रयोऽपि भ्रातरो विद्याव्यसनिनो नैकग्रन्थप्रणेतारो राजकीयोच्चपदस्था- श्चासन्। तत्र सायणो विजयनगरराज्यस्य चतुर्णां नरेशानां बुक्क-कम्पराज-सङ्गमराज-हरिहर- नामधेयानां महामन्त्रिपदम् अलमकार्षीत्। अयं महामानवः खीस्तीय पञ्चदशशताब्द्याः पूर्वार्धे दक्षिणभारतभुवं भूषयामास।

### ७. २. सायणकृतयः

सायणाचार्यः स्वसहयोगिनां साहाय्येन विपुलं ग्रन्थराशिं सम्पादयामास । तत्र रचनाक्रमम् अनुसृत्योपन्यस्यन्ते सायणीयानि ग्रन्थरत्नानि—

१. सुभाषितसुधानिधिः २. प्रायश्चित्तसुधानिधिः ३. अलंकारसुधानिधिः ४. धातुवृत्तिः ५. पुरुषार्थसुधानिधिः ६. संहिता-ब्राह्मण-श्रौतभाष्याणि ७. आयुर्वेदसुधानिधिः ८. यज्ञतन्त्रसुधानिधिः । संहिता-ब्राह्मण-कल्पग्रन्थेष्विमे ग्रन्था विवृत्ताः—तैत्तिरीयसंहिता, ऋग्वेदः, सामवेदः, काण्वसंहिता, अथर्ववेदः, तैत्तिरीयब्राह्मणं सारण्यकम्, ऐतरेयब्राह्मणम् सारण्यकम्, अष्टा सामब्राह्मणानि (ताण्ड्य-षड्विंश-सामविधान-आर्षेय-देवताध्याय-उपनिषद्-संहितोपनिषद्-वंशाख्यानि) काण्वशतपथब्राह्मणम्, बौधायनश्रौतसूत्रं च ।

### ७. ३. बौधायनश्रौतसूत्रभाष्यम्

यद्यपि सम्प्रति बौधायनश्रौतसूत्रस्य दर्शपूर्णमासप्रकरणस्य (प्रथम प्रश्नस्य) सायणकृत भाष्यमुपलभ्यते, तथापि स सम्पूर्णसूत्रस्य भाष्यं व्यरीरचदिति सुतराम् अधिगम्यते तस्यैव स्ववचोभिरस्मिन् भाष्ये व्याहृतैः । तथा हि—

(१) 'यद्यपि पिण्डपितृयज्ञप्रयोगम् उत्तरत्र वक्ष्यामः, तथाप्यनुष्ठानक्रमानुरोधेनात्रैव तत्प्रयोगो निरूप्यते' (वर्त्तमानसंस्करणे पृ० ३३) । बौधायनश्रौतसूत्रे पिण्डपितृयज्ञस्तृतीयप्रश्नस्य दशमैकादशखण्डयोर्निरूप्यते, तद्भाष्यमेवात्रेङ्गयत्याचार्यः ।

(२) 'एतेषां स्वरूप तत्तत्प्रकरणे वक्ष्यामः' (वर्त्तमानसंस्करणे पृ० १८२) । अत्रैतत्पदेन कर्मान्तसूत्रे (बौ० श्रौ० २४।१८।१०-११) निर्दिष्टान्युपांशुधर्माणि प्रत्यवमृश्यन्ते । तेन तद्भाष्यमनेन प्रणीतमिति सिध्यति ।

(३) 'अयज्ञियतृणानि तु प्रायश्चित्तकाण्डे दर्शितानि । शुकशुम्बवल्वजकृष्णतिलतृणवर्जं कुशादीनि याज्ञिकप्रसिद्धानि प्राह्याणीति दर्शयिष्यते' (वर्त्तमानसस्करणे पृ० २९) । अयं विषयो बौधायनश्रौतसूत्रेऽष्टाविंशतितमस्य प्रश्नस्य त्रयोदशे खण्डे निरूपितः । तस्मात् तद्भाष्यमनेन व्यधायीति स्पष्टम् ।

(४) 'तदेत् सर्वं शुल्बे निपुणतरं वक्ष्यामः' (वर्त्तमानसंस्करणे पृ० ९९) । बौधायनश्रौतसूत्रे शुल्बसूत्राणि त्रिंशत्तमे प्रश्ने संगृहीतानि । तद्भाष्यं सायणेन प्रणीतमिति व्यज्यते स्फुटम् ।

सायणः सुगमया प्राञ्जलया भाषया विस्तरेण सूत्राणि विवृणुते । स्पष्टा इति मन्यमानैः पूर्वाचार्यैर्ये पदार्था न व्याख्यातास्तेऽप्यबुधबोधनार्थं निरूप्यन्तेऽनेन । विधीनां स्पष्टीकरणम् आक्षेपसमाधान-पौर्वापर्यानुसन्धान-विवेचनपुरःसरं प्रस्तूयते । सायणभाष्यवैशिष्ट्यप्रद्योतकाः केचन बिन्दवोऽत्र समासत उद्भाव्यन्ते । तथा हि—

(१) पूर्वाचार्यविवरणे सूत्राणि विभागशो न व्याख्यातानि। सायणस्तु सूत्राणि विभज्य-प्रतीकान्युदधृत्य व्याख्यानं प्रास्तावीत् । तथा च सम्पूर्णो बौधायनग्रन्थः स्वरूपतः सुरक्षितो जातः ।

(२) सूत्राणां पाठभेदास्तत्र तत्र प्रदर्श्यन्ते, विविच्यन्ते च । पत्नीं विष्यति (बौ० श्रौ० १।२०।२६) इत्यत्र निदर्शनम् ।

(३) स्वशाखायाः (तैत्तिरीयशाखायाः)संहिताब्राह्मणारण्यकानां स्वसूत्रस्य(बौधायनस्य) च श्रौतगृह्यधर्मसूत्राणां शतशः सन्दर्भा यथाप्रसङ्गम् उद्ध्रियन्ते, व्याख्यायन्ते च । द्वैध-कर्मान्त-सूत्राणि प्रसङ्गतोऽनुसन्धाय विव्रियन्ते । तथा च तेषामपीदं भाष्यं सम्पन्नमिति शक्यते वक्तुम् ।

(४) आपस्तम्ब-भारद्वाज-सत्याषाढ-मानव-आश्वलायन-जैमिनि-कात्यायनैः प्रोक्तानां कल्पानां वचनानि क्वचित् स्वपक्षोपोद्‌वलनार्थं, क्वचिद् विधिस्पष्टीकरणार्थं, क्वचिच्च विमति-प्रदर्शनार्थम् उपस्थाप्यन्ते विशेषतः । पदानां साधुत्वप्रदर्शनार्थं पाणिनीयसूत्राणि यथेष्टम् उद्ध्रियन्ते ।

(५) मध्यकालिकानामाचार्याणां मतानि तत्तन्नामग्राहं समीक्ष्यन्ते, समर्थ्यन्ते च । तत्र भवस्वामी 'अभियुक्त' पदेन समाद्रियते । अन्ये स्मृता आचार्याः सन्तीमे— धूर्तस्वामी (आप-स्तम्बश्रौतसूत्रभाष्यकारः), रुद्रदत्तः (आपस्तम्बश्रौतसूत्रवृत्तिकारः), रामस्वामी (आपस्तम्ब-भाष्यवृत्तिकारः), कुमारिलभट्टः, लौगाक्षिः, दामोदरः, केशवस्वामी, गोपालश्च । एतेषामा-चार्याणां कृतिभ्यो वचनान्युद्धृत्य स्वकृतिं समार्धनोत् सायणः ।

(६) सर्वत्राध्यायान्ते प्रयोगक्रमः प्रदर्श्यते । तथा चायं ग्रन्थो भाष्य-प्रयोगोभयात्मकः । पिण्डपितृयज्ञादीनां प्रासङ्गिकविधीनामपि प्रयोगोऽत्र सगृह्यते । तत्काले प्रचलितयाज्ञिकप्रसिद्धयोऽत्र समाकल्यन्ते प्रयासेन । हौत्रकर्माण्यपि यथेष्टं संगृह्यन्ते । प्रारम्भिकेष्वध्यायेषु श्लोकात्मको विनियोगसंग्रहोऽनुबध्यते । तत्र न ज्ञायते स सायणकृतो वाऽऽचार्यान्तरकृतो वेति ।

## ८. प्रस्तुतसंस्करणम्

बौधायनश्रौतसूत्र मूलमात्रं प्रायोऽशीतिभ्यो वर्षेभ्यः पूर्वं कैलेण्डेन सम्पाद्य प्रकाशितम् । परत् तस्यैव आफसैटपद्धत्या पुनर्मुद्रणात् सुलभो जातोऽयं ग्रन्थः । परम् अस्य किमपि व्याख्यानं प्रकाशितं नासीदिति खिद्यन्ते स्म श्रुतिसेविनः, विशेषतस्तच्छ्रौतिनः । इतो डा० श्रीसीतारामसहगलोऽस्य ग्रन्थस्य प्राचीनतमं व्याख्यानं भवस्वामिप्रणीतं विवरणाभिधं प्रकाश-यितुम् अचकमत । तत्र भवतास्य विवरणस्य सम्पादनं बहोः कालात् प्राग् व्यधायि । गोकर्ण-वास्तव्यौ श्रौतिवरौ श्रीसुब्रायगणेशभट्ट-रामचन्द्रगणेशभट्टाभिधौ 'कोड्लेकेरे' इत्युपाह्वौ सहोदरौ बौधायनश्रौतसूत्रसायणभाष्यं समपीपदताम्, तत्प्रकाशनाय च तत्र भवन्तौ सचेष्टावास्ताम् । यद्यपि तन्मुद्रणं 'विल्ला प्रेस, मद्रास-२१' इत्यत्र जातम्, तथाप्यज्ञातकारणात् तत्प्रकाशनं नाभवत् । सम्प्रति तत्र भवतां विद्वद्वराणां सहयोगेन बौधायनश्रौत (दर्शपूर्णमास) सूत्र

भवस्वामिकृतविवरणेन सायणकृतभाष्येण च समवेतं प्रकाश्य वैदिकवाङ्मयसेविनां समक्ष उपस्थाप्यते ।

अस्मिन् ग्रन्थेऽस्माभिर्ग्रन्थान्तरसन्दर्भाणां स्थलसंकेतास्तत्रतत्रोट्टङ्किताः, विवरण-भाष्ययोः सूत्रव्याख्यानविवेकः पृथक्-पृथक् संख्योल्लेखेन प्रदर्शितः, पादटिप्पणानि योजितानि, परिशिष्टानि गोपालकारिकाप्रथमानि चानुबद्धानि । तत्र बौधायनश्रौतसूत्रस्थलसंकेताः प्रश्न-खण्ड-सूत्रेतिक्रमेण निर्दिष्टाः कैलेण्डसंस्करणमनुसृत्य । कैलेण्डसंस्करणे च सूत्र संख्या न निर्दिश्यते, उर्ध्वरेखया सूत्रविभागमात्र प्रदर्श्यते । अस्माभिस्तु संगणय्य संख्या दत्ता । द्वैधसूत्र-स्थलसंकेतास्त्वत्र प्रश्नखण्डेति क्रमेणोल्लिख्यन्ते । अस्मिन् संस्करणे ꣳकारस्य स्थानेऽनुस्वार एव मुद्रितो मुद्रणाक्षराभावात् ।

सावधानेन मनसा मुद्रणपत्रे संशोधितेऽपि केचन दोषाः समजायन्त । केचिच्च यन्त्रकृता अपि दोषाः समजनिषत । तेषां परिमार्जनं ग्रन्थान्ते संलग्ने संशोधनपत्रे प्रदर्शितं, तदनुसारं संशोध्य ग्रन्थमध्येष्यन्ते मनीषिण इति प्रार्थयामहे । ये त्वस्माकं ज्ञानाल्पत्वाद् जाता दोषास्तान् विज्ञाप्यानुगृह्णन्तु विपश्चितः ।

पदवाक्यप्रमाणज्ञानां राष्ट्रपण्डितपदभाजाम् आचार्यप्रवराणां श्रीमतां युधिष्ठिर-मीमांसकपादानां शुभाशंसनैः सततप्रेरणया चैतत् किमपि वैदिकवाङ्मयप्रसारकर्म समर्पीपदमिति तान् अत्र भवतोऽभिवन्दे । येषां ज्ञानतपःपूतशेमुषीकाणां कृतिरत्नेभ्यः साहाय्यमधिगृहीमत्र कर्मणि, तान् प्रति नतोऽस्मि कृतज्ञताभारेण । डा० सीतारामसहगलवरा वेदमूर्त्तयः श्रीसुब्रायगणेशभट्टास्तथा वेदमूर्त्तयः श्रीरामचन्द्रगणेशभट्टा वैदिकचूडामणयो धन्यवादानर्हन्ति, येऽतिप्रश्रयेण सर्वं सम्पादनकार्यं समपादयन् ।

—:०:—

# बौधायन श्रौत (दर्शपूर्णमास) सूत्र

## विषय-सूची

---

# संक्षेप-विवरणम्

| | |
|---|---|
| अ० | अष्टाध्यायी (पाणिनीया) |
| आप० यज्ञपरि० | आपस्तम्बीय-यज्ञपरिभाषा |
| आप० श्रौ० | आपस्तम्ब-श्रौतसूत्रम् |
| आश्व० गृह्य० | आश्वलायन-गृह्यसूत्रम् |
| ऋ० | ऋग्वेदः |
| ऐ० ब्रा० | ऐतरेय-ब्राह्मणम् |
| का० शु० प० | कात्यायन-शुल्बपरिशिष्टम् |
| का० श्रौ० | कात्यायन-श्रौतसूत्रम् |
| का०सं०(काण्व सं०) | काण्व-संहिता |
| कै० सं० | कैलेण्डसंस्करणम् |
| जै० गृ० | जैमिनीय-गृह्यसूत्रम् |
| टि० | टिप्पणम् |
| तु० | तुलनीयम् |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० ब्रा० | तैत्तिरीय-ब्राह्मणम् |
| तै० सं० | तैत्तिरीय-संहिता |
| द्र० | द्रष्टव्यम् |
| धूर्त० भा० | धूर्तस्वामि-भाष्यम् |
| पृ० | पृष्ठम् |
| ब० सं० | बनारस-संस्करणम् |
| बौ० गृ० | बौधायन-गृह्यसूत्रम् |
| बौ० गृ० प० | बौधायन-गृह्यसूत्र-परिभाषा |
| बौ०गृ०पितृ० | बौधायन-गृह्यपितृमेधसूत्रम् |
| बौ० ध० | बौधायन-धर्मसूत्रम् |
| बौ० श्रौ० | बौधायन-श्रौतसूत्रम् |
| भार० प० | भारद्वाजश्रौतपरिभाषासूत्रम् |
| भा० श्रौ०, भार० श्रौ० | भारद्वाज-श्रौतसूत्रम् |
| मनु० | मनुस्मृतिः |
| म० सं०, मद्र० सं० | मद्रास-संस्करणम् |
| महा० पस्पशा० | महाभाष्य-पस्पशाह्निकम् |
| महाभा० | महाभाष्यम् (पातञ्जलम्) |
| मा० श्रौ० | मानव-श्रौतसूत्रम् |
| मै० आ० | मैत्रायणीयारण्यकम् |
| रामा० | रामाग्निचित् |
| राम० वृ० | रामाग्निचिद्-वृत्तिः |
| रुद्र० वृ० | रुद्रदत्त-वृत्तिः |
| वृ० कोशः | वृन्दावनकोशः |
| श० ब्रा०, शत० ब्रा० | शतपथ-ब्राह्मणम् |
| श्लो०वा० | श्लोक-वार्त्तिकम् |
| सत्या० श्रौ० | सत्याषाढ-श्रौतसूत्रम् |
| सं० | संस्करणम् |

—:o:—

# दर्शपूर्ण मास विहारः

[बौधायन श्रौतसूत्रानुसारेण]




१. गार्हपत्यः । २. अन्वाहार्यपचनः । ३. आहवनीयः । ४. वेदिः । ५. उत्करः ।
६. पत्नीस्थानम् । ७. यजमानस्थानम् । ८. ब्रह्मणः स्थानम् । ९. होतृस्थानम् ।
१०. अध्वर्युस्थानम् । ११. अग्नीत्स्थानम् ।

# बौधायन-श्रौत-सूत्रम्

## भवस्वामि-सायणाचार्य-भाष्यद्वयोपेतम्

## दर्शपूर्णमासौ

## प्रथमोऽध्यायः

**भवस्वामि-भाष्यम्**—ब्राह्मणानां बहुत्वादेकैकस्यां शाखायामपरिसमाप्तत्वाद् अर्थस्य च दुर्बोधत्वाद् असार्वजन्यत्वाच्च संहृत्य विवरणार्थं सुखं बुद्ध्वा कर्म[1] साङ्गमनुष्ठाय फलं सर्वे प्राप्नुयुरिति कल्प आरब्ध आचार्येण । वाक्यसम्बन्धश्च गर्भाधानादिसंस्कारैः संस्कृतोऽधीत्य वेदान्[2] न्यायतः कृतदार आहिताग्निर् **आमावास्येन वेति** चोदितकर्मणोऽधिकारी । तानि च कर्माणि नानाविधानि । तत्र दर्शपूर्णमासाग्निहोत्रज्योतिष्टोमप्रवर्ग्याण्यपूर्वाणि । तत्र दर्शपूर्णमासविकारा इष्टयोऽग्नीषोमीयश्च पशुः । ज्योतिष्टोमविकारा एकाहा द्वादशाहाश्च । अग्निहोत्रं च प्रकृतिः । प्रकृतिर्नाम सर्वधर्माणामतिदेशकम् । प्रवर्ग्याधानकुण्डपायिनामयनेषु च प्रवर्ग्यश्च न प्रकृतिः । दधिघर्मे घर्मातिदेशं केचिदिच्छन्ति **परिश्रित्योभयतः शान्तिं कृत्वा** (बौ० श्रौ० २१।२२) इति । दर्शपूर्णमासज्योतिष्टोमौ प्रकृती एव । अग्नीषोमीयद्वादशाहसंवत्सरादयः प्रकृतिविकृतयः । इष्टय एकाहाश्चोद्भिदादयो विकृतय एव । दर्विहोमादयो न प्रकृतयो न विकृतयः ।

**सायण-भाष्यम्**—

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ।। १ ।।

त्रयीमन्त्रत्रयीकल्पलतायां यन्निरूपितम् ।
दोहयन् श्रियमाधत्ते मीमांसासङ्ग्रहद्वयम् ।। २ ।।

---

१. 'कर्माण्युष्ठाय' इति क-कोशे । २. 'वेदं न्यायतः' इति कख-कोशयोः ।

यः सायणाचार्यपदाभिषिक्तः श्रीशिङ्गणाचार्यसुताग्रगण्यः ।
प्रसन्नगम्भीरमतिः स्फुटार्थं बौधायनं कल्पमथोऽभिधास्यन् ॥३॥

व्याख्याय विद्यास्थानानि पुराणादीनि साम्प्रतम् ।
व्याचष्टे सायणाचार्यः कल्पं बौधायनं सुधीः ॥ ४ ॥

पूर्वव्याख्यातृभिर्येऽर्थाः स्पष्टा इत्यनिरूपिताः ।
अप्रबुद्धप्रबोधार्थं निरूपयति तानपि ॥ ५ ॥

अनुष्ठानविकल्पाश्च कर्मादौ ये व्यवस्थिताः ।
सम्यक् तेऽपि निरूप्यन्ते पूर्वकल्पे यथोचितम् ॥६॥

तत्र तावद्विध्यर्थवादमन्त्रात्मना त्रिधा व्यवस्थितो वेदराशिः । तस्य च कर्माऽवबोधनमेवाऽर्थः । तदधीनमेव कर्माऽभ्युदयहेतुः । तथा चोक्तम्—दृष्टो हि तस्याऽर्थः कर्मावबोधनं नाम । न च [1]तस्याध्ययनमात्रात् तत्र भवन्तो याज्ञिकाः फलं समामनन्ति (शाबरभाष्य १।१।१) इति । विधिविहितमर्थवादप्ररोचितं मन्त्रेण स्मृतमभ्युदयकारि भवतीति । ततश्च चोदितानां कर्मणां सुखावबोधाय भगवान् बोधायनः कल्पमकल्पयत् । यतो ब्राह्मणानामानन्त्यं दुरवबोधता च, अतो न तैः सुखं कर्मावबोध इति कल्पसूत्राणीमानि प्रतिनियतशाखान्तराण्यङ्गीचक्रुः पूर्वाचार्याः । अत एवाऽध्ययनविध्याक्षिप्तमध्येतव्यत्वात्तदुपबृंहणविशेषरूपबृंहितस्य कल्पस्य वैशद्यलाघवकात्स्न्र्यप्रकरणशुद्ध्यादिभिः प्रकर्षैर्युक्तस्य तत्तन्मार्गानुसारिभिः स्वानुष्ठेयकर्माऽवबोधार्थमध्ययनं सिद्धम् । एतदेवाऽभिसन्धायोक्तं कर्मान्ते—पञ्चतयेन कल्पमवेक्षेत, छन्दसा, ब्राह्मणेन, प्रत्ययेन, न्यायेन, [2]सिद्धिवशेनेति (बौ० श्रौ० २४।१।१) । कल्पत इति कल्पः, प्रयोगः । सोऽत्र निरूप्यत इत्ययं ग्रन्थोऽपि कल्पः । तं कल्पं पञ्चतयेन परीक्षेत । पञ्चाऽवयवा अस्य वक्ष्यमाणस्य समुदायस्याऽसौ पञ्चतयः, तेनेत्यर्थः । तानेवाऽवयवान्विवृणोति—छन्दसेति यदवोचाम, [3]यथाऽम्नायप्रणिधीदं पूर्वमिदमुत्तरमिति (बौ० श्रौ० २४।१।२) । आम्नायस्य प्रणिधिः प्रणिधानं, क्रम इत्यर्थः । येन क्रमेण पदार्थाः समाम्नाताः, तेन क्रमेण श्रुत्यादिभिरभिनियुक्ता मन्त्रा विनियोज्याः । यथा काम्यपशुषु सा वा एषा सर्वदेवत्या यदजा वशा (तै० स० ३।४।३।५) इत्युपक्रम्य, तत्तत्कामनाऽनुरोधेन देवताविशेषादजावशालम्भे, त्वं तुरीया वशीनी वशासि (तै० सं० ३।४।२।२; ३।५) इत्यादीनां मन्त्राणां नियमेन पश्वनुमन्त्रणादिषु विनियोगः । पक्षान्तरमाह—अथाऽपि मन्त्र एव स्वयं कर्म प्रब्रूते, कर्मानुवादी[4] भवति (बौ० श्रौ० २४।१।३,४) इति । तद्विवरणम्—यथैतद्ब्रवति (बौ० श्रौ० २४।१।५) इत्युदाहरणोपन्यासप्रतिज्ञा । प्रेयमगाद्धिषणा (तै० सं० १।१।२।१) इति, उर्वन्तरिक्षमन्विहि (तै० सं० १।१।२।२) इति च बर्हिराहरणार्थं गमनागमने

---

१. 'तत्राप्यध्ययनमात्रान्मन्त्रमनुभवन्तो' इति मद्र० सं० ।
२. 'संस्था०' इति कै० सं० । ३. 'यथा यथाऽम्नायप्रणिधिरिदं' इति मद्र० सं० ।
४. '०नुवादो' इति कै० सं० ।

मन्त्रवाच्ये । तद्वशात्त्रैव विनियोगः । तथा—देवस्य त्वा........भ्यामग्नये जुष्टं निर्वपामि (तै० सं १।१।४।२) इति । एवमन्यत्रापि छन्दसा मन्त्रलिङ्गेन विनियोगः । यत्र तु मन्त्रलिङ्गेन विनियोगो न ज्ञातुं शक्यते, तदा ब्राह्मणानुरोधेन विनियोग इत्याह—यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तच्चिकल्पयिषेत्, ब्राह्मणमु हैवैनान्मन्त्रान-प्रज्ञातान्विदधाति, इदमनेन करोतीदमनेन[1] करोतीति । यथाऽपि[2] भवति इषे त्वोर्जे त्वेति शाखामाच्छिनत्ति, वायव स्थोपायव स्थेति वत्सानपाकरोतीति (बौ० श्रौ० २४।१।६-८) । क्वचित्तु ब्राह्मणमेव मन्त्रानपेक्षं विदधातीत्याह—अथाप्यमन्त्राणि कर्माणि विदधाति, यथैतद्भवति, अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इति[3] व्यवस्थावर्णसंयोगात् (बौ० श्रौ० २४।१।९,१०) इति । अग्न्याधाने यथावर्णं प्रक्रमव्यवस्था । प्रत्ययेनेति तृतीयं विवृणोति—यथो एतत्प्रत्ययेनेति छन्दोगबह्वृचाध्वर्युप्रत्ययेनेति (बौ० श्रौ० २४।१।१२) । प्रतीयते, ज्ञायते विशेषो येन स प्रत्ययः, प्रमाणमित्यर्थः । छन्दोगादयः शब्दाः शास्त्रवचनाः, तेषां प्रत्ययेनेति भावप्रधानो निर्देशश्छन्दोगादिशास्त्रप्रामाण्येनेत्यर्थः । सोमे छन्दोगप्रत्ययेन तावद्रथन्तरादिपृष्ठसामवशेन ग्रहग्रहणानुपूर्व्ये नियमः । तथा चाऽऽपस्तम्बः—यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान् गृह्णीयात् (आप० श्रौ० १२।१४।१) इत्यादि । बह्वृचप्रत्ययेनेति, यथा सौम्ये चरौ—परियक्ष्यसि सौम्या३न्न परियक्ष्यसी३इति (बौ० श्रौ० ८।१४।१) अध्वर्युणा पृष्टे होता यं पक्षमनुमन्यते तदनुष्ठानमिति । अध्वर्युप्रत्ययेनेति, यथाऽऽग्रयणे हविषामानुपूर्व्ये बह्वृचोक्तैन्द्राग्नादित्वापवादेन सौम्यादित्वम्, अध्वर्युवशादैन्द्राग्नादित्वं वेति । चतुर्थं विवृणोति—यथो एतन्न्यायेनेति प्राकृते तन्त्रे प्राकृतं न्यायमनधिगच्छन्प्रामन्यायं प्रतीयादयमिहार्हतां समारम्भ इति (बौ० श्रौ० २४।१।१२) । प्रस्तुते श्रौते तन्त्रे, श्रौतवचनमनधिगच्छन्प्रामन्यायं, स्मार्तवचनं, प्रतीयाद् अधिगच्छेत् । इहास्मिन्विषये अर्हतां मन्वादीनामयं समारम्भः स्मरणमित्यर्थः । तद्यथा कर्ममध्ये हुतभक्षणाद्याचमननिमित्तसम्भवे, तद्विधायकश्रौतवचनाऽभावेऽपि, स्मृत्यनुरोधादाचमनम् । तच्च न कर्मव्यवधायकमिति । यत्तु तत्र श्रौतमाचमनं विहितम्—अथ सायं हुतेऽग्निहोत्रे यज्ञोपवीत्यप आचम्य (बौ० श्रौ० ३।८।१) इत्यादि तत्कर्माङ्गम् । पञ्चमं विवृणोति—सिद्धिवशेनेति[4] । सिद्धिः संस्था, समाप्तिरित्यर्थः । उपक्रान्तस्य कर्मणः समाप्तिर्यथा भवति तथा प्रतिनिधयो ग्राह्या इत्यर्थः । यथा सोमेऽपहृते आदाराꣳश्च फाल्गुनानि चाभिषुणुयादिति (बौ० श्रौ० २४।१।१३) । तथोक्तमौपानुवाक्ये—अथ वै भवति, यस्य क्रीतमपहरेदिति । आदारान् क्षुद्रतृणानि । फाल्गुनानि हैमवतानि ।

प्रकारान्तरेण मन्त्रविनियोगज्ञानोपायमाह—चतुष्टयेन मन्त्रा वर्तन्ते—[5]श्रुत्या निर्दे-

---

१. '०नेनेति' इति कै० सं० । २. 'यथैतद' इति कै०सं० । ३. 'इत्येवं' इति कै०सं० ।

४. कर्मान्ते 'यथो एतत्संस्थावशेनेति०' (बौ० श्रौ० २४।१।१३) इतिं कै० सं० ।

५. 'स्तुत्या' इति कै० सं० । अत्र सूत्रे सायणीयव्याख्याने च 'स्तुत्या' इत्येव पाठो युक्तः प्रतीयते । तु०—शत० ब्रा० ६।३।३।२५।।

शेनाशिषा नैव 'श्रुत्या नाशिषा न निर्देशेनेति' (बौ० श्रौ० २४।१।१४)। चतुष्टयेनेति, चतुरवयवेन चतुर्धा मन्त्रा वर्तन्ते इत्यर्थः। श्रुत्या यथा—त्वमग्ने द्युभिः (तै० सं० ४।१।२।६) इत्ययं मन्त्रः, उखासम्भरणप्रकरणेऽश्वपदपरिलेखने विनियुक्तः, श्रुतिरेव तस्य प्रयोजिकेति श्रुत्या तत्र वर्तते। तथा निर्देशेन—अग्नये त्वा, अग्नीषोमाभ्यां (तै० सं० १।१।८।१) त्वेति पुरोडाशाभिमर्शने निर्देशेन विनियुक्तः। आशिषा तु—बर्हिषोऽहं''प्रजावान्भूयासम् (तै०सं० १।६।४।१) इत्येवमादयोऽनूयाजादिषु। श्रुत्यादित्रितयस्याऽप्यभावेन चतुर्थः प्रकारः, यथा हविरासादनादौ भूर्भुवः सुवरित्येवमादयः[१]। एवं बहुधा विप्रकीर्णा मन्त्रविनियोगज्ञानोपायाः। तान् यथायोगं संगृह्याऽनुष्ठेयकर्मविबोधनं कल्पेऽस्मिन्क्रियते।

तच्चानुष्ठेयं कर्म त्रिविधम्—नित्यं, नैमित्तिकं, काम्यमिति। नित्यमपि पाकयज्ञ-हविर्यज्ञ-सोमयज्ञभेदात् त्रिविधम्। तत्र पाकयज्ञाः—हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणम् अष्टकाहोम इति सप्तपाकयज्ञसंस्था इति गृह्ये निरूपिताः। अपरिमिता इति च कर्मान्ते। तद्यथा—कियत्यः पाकयज्ञसंस्थाः (बौ० श्रौ० २४।४।१) इत्युपक्रम्योक्तम्—अपरिमिता उ हैके ब्रुवते, यत्किञ्चान्यत्र विहाराद्ध्रूयते सर्वास्ताः पाकयज्ञसꣳस्था इति (बौ० श्रौ० २४।४।३,४)। विहारादन्यत्रेति, वैतानिकाग्निभ्योऽन्यत्रेत्यर्थः। हविर्यज्ञाः—अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः [४]कौण्डपायिनामयनमिति सप्त[५]। अन्ये तु कौण्डपायिनामयनस्य कदाचित्सोमानुबन्धत्वात्सौत्रामणीं सप्तमं हविर्यज्ञमाम-नन्ति[५]। अपरे तु दाक्षायणयज्ञस्य कदाचित्सोममिश्रत्वान्निरूढपशुबन्धं षष्ठमाहुः। सोमयज्ञास्तु—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रो ऽप्तोर्याम इति सप्त[६] इत्येते नित्याः। नैमित्तिकास्तु—पाकयज्ञरूपाः कूष्माण्डादयः, हविर्यज्ञरूपाः जातेष्ट्यादयः, सोमयज्ञरूपाः पुनः स्तोमादयः। काम्या अपि—पाकयज्ञरूपाः प्रजार्थिहोमादयः, हविर्यज्ञरूपा आयुष्कामेष्ट्यादयः, सोमयज्ञरूपा उद्भिदादयः। तत्र प्रत्यक्षश्रुतिमूलतया हविर्यज्ञेषु सर्वेष्टिप्रकृतितया मन्त्राम्नानात् कर्मानुरोधाच्च, प्रथमं दर्शपूर्णमासौ निरूपयति—आमावास्येन वेत्यादिना।

ननु सर्वक्रतूनामग्नयः सकृदाहिता इत्यग्न्याधानसंस्कारादेवाग्निसिद्धिः। तत्राऽपि नक्त गार्हपत्यमादधाति, अर्धोदिते सूर्य आहवनीयमादधाति (तै० ब्रा० १।१।४) इत्यादितदिति-कर्तव्यताविशेषादेवाऽऽहवनीयत्वादिसिद्धिः। तेनाधानमेवाग्न्युत्पादकम्। ते चाग्नयः सर्वक्रत्वङ्ग-भूताः, यथोपनयनसंस्कृताऽधीता मन्त्राः। अत एवानुष्ठानेऽप्याधानस्य प्राथम्यं नियतं, तत्कुतः तदतिक्रमेण दर्शपूर्णमासयोः प्रागभिधानम् इति? सत्यम्। तथाऽप्यग्न्याधानप्रभृतीन्याह वैतानिकानि, दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः, तन्त्रस्य तत्राम्नातत्वात् (आश्व० गृह्य० १।१।२,३) इति सम्भूयाग्निसाधकस्य पवमानेष्टितन्त्रस्य, तदुपदेशेऽनुपदिष्टस्य दर्शपूर्ण-मासयोराम्नातत्वात्, धर्मातिदेशं विना पवमानेष्ट्यनुष्ठानाऽयोगात्; दर्शपूर्णमासयोरेव प्रथम-मुपदेशो युक्तः। न च वाच्यं पूर्णाहुत्यन्तमग्न्याधेयमिति वचनादाधानमात्रादेवाग्निसिद्धिः;

१. द्र०—पृ० ३ टि० ५।
२. '०नेति चतुर्थम्' इति कै० सं०।
३. द्र०—तै० सं० १।६।१०॥
४. 'कौण्डपायिन्य' इति कै० सं०।
५. तु०—बौ० श्रौ० २४।४।५,६॥
६. तु०—बौ० श्रौ० २४।४।७,८॥

अग्निसंस्कारत्वं पवमानेष्ट्यादेरिति, अस्य सूत्रस्याहिताग्निव्रतप्रापणार्थत्वात् । अन्यथा आधानमिष्टिं चोक्त्वा आधानाद्द्वादशरात्रमजस्रा इति नोच्येत । उच्यते च तथा । ततोऽवगम्यते, यावता कर्मसमुदायेनाग्निसिद्धिर्भवति तावतः कर्मसमुदायस्याऽऽधानशब्दो वाचक इति । ततश्चान्यत्राऽप्यग्न्याधेयं पुनराधेयं चेत्यादौ, सेष्टिकस्यैवाधानशब्देनोपन्यासः । ततश्चाधानस्येष्टिसापेक्षत्वाद्, अनुष्ठानप्राथम्यमनादृत्य सर्वेष्टिप्रकृतित्वाद्, अन्यासां विकृतित्वाच्च दर्शपूर्णमासयोरेव पूर्वमभिधानं युक्तमिति ।

स च प्रकृतिविकृतिविचारः कर्मान्ते कृतः—कथमु खलु एतज्जानीयादियं पूर्वा ततिरियमुत्तरेति (बौ० श्रौ० २४।५।१)। पूर्वा प्रथमा कर्मान्तरोपदिष्टकर्तव्यतानपेक्षतया पूर्वमुपदेशात् । अत एव ततिः तन्यते विस्तार्यतेऽस्याम् इति ततिः, प्रकृतिरित्यर्थः । उत्तरा अन्याऽपेक्षत्वात्, ततिरित्यनुवर्तते । विकृतिरिति यावत् । इयं प्रकृतिरियं विकृतिरिति कथं ज्ञायते इत्यर्थः । उत्तरमाह—या प्रकृतिः सा पूर्वा ततिः, अथ यद्विदधाति सोत्तरा ततिः (बौ० श्रौ० २४।५।२,३) । यस्याः सम्बन्धिनो धर्माः कर्मान्तरे प्रक्रियन्ते, अतिदिश्यन्ते, सा प्रकृतिः । यत्र तु प्रधानमात्रं विधीयते न धर्मविशेषाः सोत्तरा ततिः, विकृतिरित्यर्थः । उदाहरति—अग्न्याधेयं पूर्वा ततिः, पुनराधेयमुत्तरा ततिः । दर्शपूर्णमासाविष्टीनां पूर्वा ततिः, सर्वा इष्टय उत्तरा ततिः (बौ० श्रौ० २४।५।४,५) इत्यादि । तत्सिद्धमेतद्दर्शपूर्णमासावेव प्रागुपदेष्टव्याविति । यद्यप्यथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्थावाचार्या ब्रुवते (बौ० श्रौ० २४।२०।१) इति वचनात्, पूर्णमासस्यैव प्रागुपदेशो युक्तः, तथापि मन्त्राम्नानक्रमानुरोधात् पौर्णमास्यां दाक्षायणपक्षे सान्नाय्यधर्मोपजीवनाच्च आमावास्यस्य प्रागुपदेश इति तदुच्यते ॥

आमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवति ॥१॥

स पुरस्तादेव हविरातञ्चनमुपकल्पयते ॥२॥

भव०—आमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवतीति । दर्शपूर्णमासारम्भो मन्त्रक्रमान्निरपेक्षत्वाद् आधानादीनां साङ्गानां समस्तविधानाभावादेतदपेक्षत्वाच्चानयोर्ज्ञानेन तेषां [1]गतकल्पत्वात् । इह पौर्णमासस्यादित्वेऽपि अमावास्यायाः प्रथमं ग्रहणं मन्त्रक्रमात् । दाक्षायणयज्ञादौ शाखाहरणाद्यारम्भस्य पौर्णमास्यामप्युपकारात् । पौर्णमासीधर्मारम्भे क्वचिदप्यामावास्यस्यानुपकारादसाधारणपदार्थस्य[2] ।

अथातो दर्शपूर्णमासौ व्याख्यास्याम इत्यप्रतिज्ञातमारम्भादेव गम्यत इति अथेत्यधिकाराकरणं तयोरेवारम्भात् । तद्धितश्च कालप्रकृतेः [3]तस्येदमिति (अष्टा० ४।३।१२०) भवार्थे (अष्टा० ४।३।५३) वा विध्यपेक्षः । एवं सति य इष्ट्या पशुना

१. 'ज्ञातकल्पत्वात्' इति घ-कोशे । २. '०कारासाधारणादिपदा०' इति कोशेषु ।
३. '०मिति वा' इति क-कोशे ।

सोमेनाग्रयणेन यक्ष्यमाणः सोऽमावस्यायां यजेतेत्यप्रसङ्गः। प्रयोजननिमित्ता संज्ञेत्येतस्य व्याख्यापनम्। एवं सति आग्नेयादीनां प्राधान्याद्दर्शपूर्णमासाभ्यां स्वर्गकामफलसम्बन्धत्वात्तन्निमित्तत्वेऽपि च ज्ञापिते सति निमित्ते नैमित्तिकेन भवितव्यमिति यावज्जीविताप्युक्ता भवति। तेषां च परस्परानपेक्षाणामुत्पत्तौ भेदप्रसङ्गेऽपि दर्शपूर्णमासाभ्यामिति द्विवचननिर्देशात् तत्कालसम्बन्धौ द्वौ समुदायौ, न प्रत्येकमाग्नेयादयः। तयोश्च समुदितयोः फलसम्बन्धात् समुदितौ फलमिति गम्यते। उभयोरत्रैकवचननिर्देशात् दर्शपूर्णमासाभ्यामिति सिद्धे न [1]समासकरणं भिन्नकालत्वात्। समुच्चयार्थो **वाशब्दः**। **वायुर्वा त्वेति** (तै० सं० १।७।७।२) यथा। सत्यपि समुच्चये प्रत्येकं यक्ष्यमाणसम्बन्धो भिन्नकालविधानात्। **अमावास्यां वा पौर्णमासीं वातिपादयेदिति** (तै० सं० २।२।२।१) लिङ्गात् न [2]संहतप्रसङ्गः। देवदत्तस्य यज्ञदत्तस्य च भुञ्जानस्य च दधि कर्त्तव्यमिति तयोर्निर्दिश्यमानत्वात् स्वकाल एव भुञ्जानयोरिति गम्यते। कर्तृविषयो वा विकल्पः। आमावास्येन यक्ष्यमाणो वा पौर्णमासेन यक्ष्यमाणो वेति कर्तृव्यापारस्य कादाचित्कत्वादुपपन्नो विकल्पः। एकेन सिद्ध्यतीति चेद् **दध्ना [वा] पयसा वा पात्नीवतम्** (बौ० श्रौ० २१।२३) इति यथा; न, क्वचित् मुख्यानुकल्पदर्शनात्, दशाहमाशौचम् (मनु० ५।६) इत्यादौ, पयसा भोजयेत्तक्रेण वेति च। ननु दध्ना पयसा वा पात्नीवत मति समत्वेऽपि दृष्टः। अत एवासन्देहार्थमुभावुक्तौ, **बैल्वो वा खादिरो वेति** यथा। हविषा साधनेन साध्यसमुदायो लक्ष्यते, घ्रायुर्घृतमिति यथा। समुदायनामधेयत्वाद् दर्शपौर्णमासयोरुक्तयोश्च प्रयोगाभावात् निर्वर्त्यं वक्तव्यम्। अन्यथाऽऽनर्थक्यं विशेषणस्य[3]। हविर्ग्रहणं विनापि सिद्धे हविर्मात्रेणाप्यशक्तौ कर्त्तव्याविव्येतद् व्यापारयति। अतिपत्तौ च प्रधानमात्रस्य प्रायश्चित्तविधानादपि वाप्येकदेशः स्यादित्येष न्यायः संगृहीतो भवति। कर्तृनिर्देशादेकवचनं यक्ष्यमाण इत्यवश्यकर्त्तव्यम्। हविषः उपकल्पनस्य करणत्वमाविज्ञापयति।

यो यक्ष्यमाणः स पुरस्तादेवेति ग्रहणस्यैतत् प्रयोजनम्—भवतेः सत्तार्थत्वाद् असतश्च प्रसङ्गाभावात्, सत एवाधिकारविशिष्टसत्तापरिग्रहार्थं वचनं सन्मात्रस्याधिकारः। अर्थिनः समर्थस्य शास्त्रेण वापर्युदस्तस्येति द्वयोराख्यातयोः परस्परेण सम्बन्धबोधनार्थं स इति ब्रुवन्नस्मदीयेनैव सिद्ध्यति कर्म न परकीयेनेति ज्ञापयति। ततश्च द्वादशाह एकस्य द्रव्येणापि साधारणयोगनिर्वृत्तौ सर्वेषामात्मीयत्वेन कर्त्तव्यमिति ज्ञापितं भवति। साधनस्य साध्यात्पूर्वकालत्वे सिद्धे पुरस्ताद्ग्रहणं कर्मारम्भात् पूर्वस्मिन् काले यथा स्यात्। इतरथा आरब्धे कर्मणि द्रव्यालाभे दोषः स्यात्। एतेनैव ज्ञापितत्वाद् अन्यत्राधानादिषु पुरस्ताद्-ग्रहणं न करोति। एवशब्दश्च न्यायादेव पूर्वकालत्वसिद्धे यस्याप्रतिबन्धेन द्रव्यं संभवति तस्य तस्मिन्निति

---

१. 'करणभिन्न०' इति क-कोशे।
२. 'सङ्गत०' इति कोशेषु। ३. 'अविशेषणस्य' इति कोशेषु।

काले ग्रहणे न दोष इति ज्ञापनार्थः। [1]तत्र पुरस्ताद्ग्रहणेन ज्ञापने सिद्धे इह वचनं प्रयत्नार्थम्। न यतः कुतश्चित्तस्मिन्काले उपादेयम्, शुद्धिकामत्वाद्देवानामिति। हविरातञ्चनग्रहणं प्रदर्शनार्थं सर्वद्रव्याणां पुरोडाशादीनाम् अनेनोपलक्षणात्, एकाहादीनां विशेषविवक्षया सहसोत्पादयितुमशक्यत्वाच्च, प्रदर्शनार्थमुभाभ्यां यक्ष्यमाण उपकल्पयत इति वचनाद् दधिग्रहणाल्लाघवेन सामान्यवचनम्। तदभावेऽन्यस्यापि उपकल्पनार्थं पुनस्तस्यापि नाशाशङ्कायां च। उपकल्पयत इति चौरादिकण्यन्तात्, हेतुमति च[2] कर्त्रभिप्राये क्रियाफले इति आत्मनेपदमुपकल्पयन्ति कर्मकरास्तानुपकल्पयन्ते इति भौवादिकात् [3]क्लृपेस्तथैवात्मनेपदम्। वाक्येन हि कारयन् भृत्यैरपि कारयन् करोत्येव यथा भक्तं ददतामिति ॥१,२॥

सा०—अत्र यो यक्ष्यमाणो भवति स उपकल्पयत इति वक्तव्ये यच्छब्दानुपादानस्यैतत्प्रयोजनं प्रक्रान्तप्रसिद्धार्थाऽनुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते इति न्यायेन विधिवत्कृताधानतया प्रक्रान्तो यथाधिकारी स्यादिति। आमावास्यसम्बन्धिना हविषा पौर्णमाससम्बन्धिना हविषा यक्ष्यमाणो यष्टुं प्रवृत्तः। अत्र कालहविषोर्निमित्तनैमित्तिकभावः सम्बन्धः। ततश्च प्रतिनिमित्तं नैमित्तिकमावर्तत इति यावज्जीवमनुष्ठेयत्वमौत्सर्गिकं सिध्यति। प्रव्रजितदीक्षितज्वराभिभूतादेर्मध्ये परित्यागस्त्वापवादिकः। ज्वराभिभूतस्य तु दर्शपूर्णमासतद्विकारादेरेव परित्यागो नाग्निहोत्रस्येति वक्ष्याम। हविषेत्येकवचननिर्देशादाग्नेयादीनां समुदितानामेकफलसम्बन्धं द्योतयति। तत्राऽपि समुदायद्वयापेक्षया कालप्रयोगभेदज्ञापनाय, आमावास्येन वा पौर्णमासेन वेति द्वयोः पृथङ्निर्देशः। यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेद् (तै० सं० २।२।२।१) इत्यादिलिङ्गदर्शनान्न संहतत्वमाशङ्क्येत। [4]यथा आशौचिनं पयसा भोजयेत्तक्रेण वेति। वाशब्दद्वयोपादाने तु न तथा बैल्वो वा खादिरो वा पालाशो वेत्यादौ। अपि वा जात्यभिप्रायमेकवचनम्। तेन च पञ्चसु हविराकारेष्वौषधाज्यपयसां ग्रहणम्।

पञ्चाऽपि हविःप्रकाराः कर्मान्ते दर्शिताः—अथेमे पञ्च हविराकारा औषधं पयः पशुः सोम आज्यमिति (बौ० श्रौ० २४।१।१५)। पञ्चविधत्वे कारणमाह—तेषां पृथक्पृथग्धर्माः० (बौ० श्रौ० २४।२।१) इति। तेषामौषधादीनां परस्परमसङ्कीर्णा धर्मा यत, अतः पञ्चविधा इत्यभिप्रायः। अथाऽपि ओषधिविकाराणामेवाऽवहननाऽऽदयो धर्मा.। ते चौषधयस्तण्डुलाः पिष्टानि फलीकरणाः पुरोडाशो यवागूः पृथुका लाजा धानाः सक्तव इत्येवमादयः। पयोधर्मा दोहनादयः, तद्विकारा दध्यामिक्षावाजिनादयः। पशुधर्मा

१. 'यत्र' इति कोशेषु।

२. सत्याप···चुरादिभ्यो णिच् (अष्टा० ३।१।२५) इति णिचि, कर्त्रभिप्राये क्रियाफले णिचश्च (अष्टा० १।३।७४) इति आत्मनेपदमित्यभिप्रायः।

३. हेतुमति च (अष्टा० ३।१।२६) इति णिचि, पूर्ववदात्मनेपदमित्यभिप्रायः।

४. भवस्वामिव्याख्यात्रानुसंधेया।

उपाकरणादयः, तद्विकारा वपात्वङ्मांसलोहितवसादयः। सोमधर्माः क्रयाभिषवादयः। आज्यधर्माः विलापनोत्पवनादय इति।

न केवलं धर्मभेदादेषां भेदः, निर्वर्तकभेदादपीत्याह—पृथगधिकरणानि (बौ० श्रौ० २४।२।१) इति। अधिक्रियन्ते यैरिति व्युत्पत्त्याऽधिकरणशब्दो हविर्निर्वर्तकवस्तुवाचकः। पृथक्पृथगधिकरणानि येषां तानि पृथगधिकरणानि। तद्यथा—पुरोडाशादयोऽवघातादिकमन्तरेण न सिध्यन्ति, नाऽपि विना दोहादिकं पयःप्रभृतय इति। सम्भवतामपि संस्कारकर्मणां व्यत्ययो विना वचनं न कार्य इत्याह तान्न मिथः संसादयेदनादेशाद् (बौ० श्रौ० २४।१।३) इति। यत्र त्वादेशस्तत्र कुर्यादेव। यथा सान्नाय्यधर्माः स्थाल्यधिश्रयणादयः पशाविति। निर्वर्तकानि यथा एवेत्याह – येन येन यद्धविः संसिध्येत्तेन तेन तत्कुर्यात्तस्याधिकरणम्, उक्तान्यधिकरणानि (बौ० श्रौ० २४।२।४,५) इति। हविरित्येकवचनस्यापि प्रयोजनमुक्तम्। आपदि येन केनापि हविषा प्रधानयागमात्रेऽप्यनुष्ठिते विधिफलसिद्धिर्भवतीति। अशक्तावेकदेशः स्यादिति न्यायात्। यक्ष्यमाण इत्येतद् वख्यातम्। भवतीति। तस्याप्रयोगेऽपि यक्ष्यमाण उपकल्पयत इत्येतावतैव कर्तृसामान्यं सिध्यति, तथापि भवतीति ग्रहणाद् अर्थी समर्थो विद्वानदुष्ट एवाधिकारी यजमानः स्याद् इति द्योतयति।

स उपकल्पयत इति, तच्छब्देन तादृशं यजमानं परामृशति। तेन च सत्रे न केवलं गृहपतिनैव यागसाधनद्रव्योपकल्पनं कर्त्तव्यम्, अपि तु सर्वैः, यजमानत्वस्याविशेषादिति द्योत्यते। पुरस्तादेवेत्यनेन यावता कालेन यागसाधनद्रव्यसम्पादनं कर्तुं शक्यते तावति काले सम्पादयेत्, न पूर्वक्षणमात्रे तस्याऽशक्यत्वादिति द्योतयति। एष एव न्यायः सर्वत्राऽनुसरणीय इति। सर्वत्राऽग्नीनाधास्यमानो भवतीति स उपकल्पयत (बौ० श्रौ० २।१२।१) इत्यादौ पुरस्ताद्ग्रहणं न करोत्याचार्यः। हविरातञ्चनमिति। हविष आतञ्चनार्थं द्रव्यम्। उपकल्पयते उपकल्पयन्ति परिकर्मिणः, तान्प्रयोजयेद् यजमान इत्यर्थः ॥१,२॥

एकाहेन वा द्व्यहेन वा यथर्तु ॥३॥ अथ वै ब्राह्मणं भवति—दध्नातनक्ति सेन्द्रत्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्यै [तै० सं० २।५।३।५,६] इति ॥४॥

भव०—यथर्त्वित्येव सिद्धे यावताह्ना विना न भवति तावतैव प्रदर्शनार्थं विप्रकर्षस्य। एवं सति प्राजापत्यानामङ्गानि यावता विप्रकर्षेण विना न सम्भवन्ति तावतैव विप्रकृष्टकालानीति। एको वाशब्दो विकल्पार्थः, द्वितीयोऽनियमार्थः। यथर्त्वेकाहेन द्व्यहेन वा इत्युक्ते ह्यत्रैवाश्रय-विकल्पः स्यात्[1]। द्वितीये पुनः वाशब्दे सति अयमपि नियमो नास्तीति। यथा सम्भवमापन्नकाले उपकल्पनं कर्त्तव्यं दृष्टार्थ-

१. 'यथर्त्विति सर्वत्रायमेव विकल्पो मा भूत् व्यवस्थितो यथा स्यात् ग्रीष्मेकाहेन हेमन्ते द्व्यहेनेति' इति कग-कोशयोः।

त्वादातञ्चनस्येति । उभयोः प्रकृतत्वेऽपि संनयत इति न वक्तव्यम् । प्रदर्शनार्थं यथा-सम्भवं सर्वद्रव्याणामित्युक्तत्वात् ॥३॥

**अथ वै भवति** इत्यवचनेऽपि ब्राह्मणत्वेऽवगतेऽन्यत्र **अथ वै भव**[ती]त्युक्ते ब्राह्मणं द्रष्टव्यमिति, यथा '**अथ वै भवत्यष्टावत्तः स्विष्टकृद् द्वादशावत्तेडा** (बौ०श्रौ० ६।११।१४) इत्यादौ । ब्राह्मणोक्तानां **यःपूतीकैः** [तै० सं० २।५।३।५] इत्यादानां दध्नोऽभावे सदृशद्रव्योपादानार्थम् । एवं सति तस्मिन् अविद्यमाने एतेषामेकेनातञ्च्यादिति तेषामप्यभावे सामान्यवचनेन अन्यस्योपसङ्ग्रहः । **दध्ना तनक्तीति** दधिनियमार्थम् । अग्निहोत्रोच्छेषण [स्य] उपादानं ब्राह्मणवाक्ये सम्बन्धत्वात् । **यज्ञस्य संतत्या** इत्यर्थवादात् सायंतनमिति गम्यते । तस्मिन् कालेऽविस्मरणार्थं च यथा दध्ना तथैवेत्यपरः । **स यदि[1] अग्निहोत्रोच्छेषणाद्** (बौ० श्रौ० २४।२३।६) इत्यादि अप्रमादार्थमेव नहि उभयार्थम् । अग्निहोत्रं प्रधानकर्मत्वान्नैव गौणार्थमावर्तयितुमर्हति । आवर्त्यमानमप्यग्निहोत्रमेव न स्यात्, अकालत्वात् ॥४॥

**सा०—अत्राऽऽतञ्चनद्रव्येषु दध्न एव मुख्यत्वात्तत्सम्पादनकालविकल्पमाह—**एकाहेन वा द्व्यहेन वा यथर्त्विति । **ग्रीष्मे एकाहेन हेमन्ते द्व्यहेन च । वाशब्दादनियमं द्योतयति । यावता कालेन दधि सम्पद्यते तावतः कालात्पुरस्तादेवेत्यर्थः ॥३॥**

**आतञ्चनद्रव्येषु मुख्यत्वे ब्राह्मण मुदाहरति—**अथ वै ब्राह्मणं भवतीति । दध्ना तनक्तीत्युदाहरणादेव **ब्राह्मणत्वेऽवगते यदुक्तमथ** वै ब्राह्मणं भवतीति, **तस्यैतत्प्रयोजनम् अन्यत्राप्यथ वै भवतीत्युक्ते ब्राह्मणोदाहरणप्रतिज्ञैव यथा स्यादिति ।** अग्निहोत्रोच्छेषणमभ्यातनक्तीत्येतद्दोहप्रकरणे **निरूपयिष्यामः ॥४॥**

## चन्द्रमसं वाऽनिर्ज्ञाय संपूर्णं वा विज्ञाय[2] ॥५॥

**भव०—चन्द्रमसं वाऽनिर्ज्ञायेति** । अनिर्गतं ज्ञात्वा नास्त्यद्येति बुध्वा सम्पूर्णं वा विज्ञाय सम्पूर्णो भविष्यतीति ज्ञात्वा शास्त्रादन्यतो वेति क्त्वाप्रत्ययोत्पत्तिः । वाशब्दाभ्यां दृश्यमानत्वेऽपि अपूर्णोऽपीति ज्ञापयतीति । दर्शपूर्णत्वयोः सर्वतिथिषु भावात् सर्वत्र प्रसङ्ग इति चेत् । न, आमावास्यपौर्णमासयोरेव विधानादेव तत्रैव द्वैविध्यं न सर्वत्र प्रसङ्गः । कथं तयोर्विधानम् ? आमावास्येन वेत्यत्रोक्तं कालनिमित्ता संज्ञेति कुतोऽन्यत्र प्रसङ्गः? ब्राह्मणे चोक्तम्—**यदाग्नेयोऽष्टाकपालः**(तै०सं० २।६।३।३) इत्येवमादि । **तस्मात् सदृशीनां रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्ते** (तै० सं० २।५।६।६) । **पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेत** (द्र०आप०यज्ञपरि० २।२०,१६)इति मन्त्रलिङ्गं **पञ्चदशीं ये प्रविष्टाः**(बौ०श्रौ०२०।१) इति **छन्दसा ब्राह्मणेन** (बौ० श्रौ० २४।१।१) इत्यभ्युपगमात् । प्रातरग्निहोत्रं हुत्वा

१. 'स यद्यु हाग्नि०' इति कै० सं० ।

२. अतोऽग्रे 'अग्नीनन्वादधाति' इति कै० सं० प्रदर्शितः सूत्रांशो व्याख्यानुरोधाद् अग्रिमे सूत्रे नीतः ।

**'इडा देवहूः'** (तै० सं० ३।३।२।१) इति जपित्वा **'देवा गातुविदः'** (तै०ब्रा० ३।७।४।१) इति च अग्नीन् पुनर्विहृत्य तूष्णीमन्वादधाति। **यो वै दधाति, 'यो वै देवताः पूर्वः परिगृह्णाति'** (तै०सं० १।६।७।१) इति वचनादग्निहोत्रानन्तरमेवेति गम्यते। आचार्याभिप्रायश्च **'पुरा प्रातरग्निहोत्रात् पिङ्ख्यानुपसादयेत्** (बौ० श्रौ० २४।२०।७)॥५॥

[उपवसथ इति। कथमु खलूपवसथं जानीयात्। सन्ध्यः स्विदेवोपपाद्योऽथाऽपूरि नादर्शीति। साधु खलु सन्ध्यः साधु सन्धेरुपपादनम्। ननु खलु सन्ध्यः सूपपाद्य[1] इव सर्वेषां त्वेव सन्ध्य इवेति। स ह स्माऽऽह बोधायनो[2] यत्रैतदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीभवन्निवोदियात्तमप्युपवसथं जानीयादिति। अत्रो ह स्माऽऽह शालीकिरतिपन्नः खल्वेष भवति। स सन्ध्यं वैवोपपादयिषेत्पूर्णं वाऽभियजेत। तस्य चेदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीभवन्निवोदियात् 'आरमताऽग्निहोत्रेण' इत्युक्त्वा पार्वणेन प्रक्रामेत्। सꣳस्थिते पार्वणेऽग्निहोत्रं जुहुयात्। इति नु खलु पौर्णमास्याम्। अथामावास्यायामिति। स ह स्माऽऽह बोधायनोऽदृश्यमान एवोपवसेन्न दृश्यमान इति। एवं चैव खलु कुर्यादिति शालीकिरस्ति त्वपि दृश्यमान उपवसथः। यत्रैतद्रात्रीभिरुपपन्नोऽणुश्चन्द्रमाः परिनक्षत्रमुपव्युषं भवति न स श्वो भूते दृश्यते तमप्युपवसथं जानीयादिति। (बौ० श्रौ० २०।१)

अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासꣳस्थावाचार्या ब्रुवते। तत्रोदाहरन्त्यूर्ध्वं मध्यरात्रात्पौर्णमास्यां चन्द्रमाः पूर्यते। स एतञ्चाऽपररात्रं पूर्णो भवति सर्वं चाऽहरुत्तरस्याश्च रात्रेरा मध्यरात्रात्। अथाऽमावास्याया उपवसथीयेऽह्न्यूर्ध्वं मध्यंदिनाच्चन्द्रमसमादित्यो लभते। स एतञ्चाऽपराह्णं लब्धो भवति सर्वाञ्च रात्रिमुत्तरस्य चाऽह्न आ मध्यंदिनात्। एनꣳसन्धिमभियजेतेति। रात्रिर्हि पौर्णमास्याꣳसन्धेया भवत्यहरमावास्यायाम्। द्वे पौर्णमास्यौ द्वे अमावास्ये। पूर्वां पूर्वां पौर्णमासीमुत्तरामुत्तराममावास्याम्। या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका। या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः। गायत्री वा अनुमतिस्त्रिष्टुब्राकेति पौर्णमास्यै नामधेये, जगती सिनीवाल्यनुष्टुप् कुहूरित्यमावास्यायै नामधेये। (बौ० श्रौ० २४।२०)

अथायं चन्द्रमाः षोडशकलः। तस्य पञ्चदशभिः पक्षोऽभिविहितो भवति। षोडशी त्वियं कला बहुधा विप्रविष्टा ब्राह्मणेष्वप्स्वोषधीषु वनस्पतिषु पशुष्विति। स यदेतानि यज्ञे क्रियन्ते तेनैषा संभ्रियते। अथोपवसथस्थानानि—चतुर्दशी, पञ्चदशी, षोडशी। न तु त्रयोदशी सप्तदशी भवतः। (बौ० श्रौ० २४।२१।१-६)

आमावास्यस्य कालात्पौर्णमासस्य कालो नातीयादापौर्णमासादामावास्यस्य। (बौ० श्रौ० २८।१२।६) ]

---

१. 'ꣳपादय' इति कै० सं०।
२. 'बौधा०' इति कै० सं०। अग्रेऽपि सूत्रोद्धरणेषु तथैव।

सा०—[1]'एवं व्यवस्थिते पत्र्ण्यग्न्यन्वाधानात्प्रागनुष्ठेयं कर्मान्ते दर्शितम्—सोऽयमाहिताग्निः [उपवसथीयेऽहन्] पुरा प्रातरग्निहोत्रात्पिङ्ख्यानुपसादयेदनुग्रहार्थान्[2] (बौ० श्रौ० २४।२१।७)। पिङ्ख्यान् स्थूलकाष्ठविशेषान्, अनुग्रहार्थान् अग्निरक्षणसमर्थान्देवतापरिग्रहणार्थान्, उपसादयेत् उप समीपे सादयेत् स्थापयेत्। अत्र केचिद् अग्निहोत्रविहरणात्प्रागेव काष्ठोपसादनविधानादग्निहोत्रदर्शपूर्णमासयोरेकमेव विहरणमिति मन्यन्ते। यदि विहरणभेदः स्यादग्निहोत्राऽनन्तरं स्थूलकाष्ठोपसादनं ब्रूयात्, न च तथा ब्रवीति, तन्मन्यामहे तन्त्रमेवैतद्विहरणमिति। अन्ये तु विहरणविकल्पं मन्यन्ते। यथाह भारद्वाजः—य [3]एवैषामग्निहोत्राय प्रणीतस्तं गृह्णीयादित्याश्मरथ्योऽन्यं [4]प्रणयेदित्यालेखनः (भार० श्रौ० ४।३।१) इति। तदेतदाचार्यस्याऽभिमतमित्येतदनुपपन्नम्, स्थूलकाष्ठानां समीपे स्थापनमात्रस्योक्तत्वात्। न चैतावता विहरणस्य तन्त्रत्वं श्रौतमार्थं वाऽवगम्यते, प्रतिकर्मप्रणयनं चाऽऽचार्यस्याभिमतम्। तथा च वक्ष्यति—उदश्वपदिकॅंसृजेद् (बौ० श्रौ० २।७।२६) इत्यादि।

व्रतोपायनीयं [5]पाचयति (बौ० श्रौ० २४।२१।८)। व्रतोपायनं व्रतोपगमनं तत्र हेतुभूतमन्नं परिकर्मिभिः पाचयति। तस्याशितौ भवतः (बौ० श्रौ० २४।२१।९) इत्यादिनाऽस्मिन्नेव काले भोजनं न विधीयते, द्वैधे कालान्तरग्रहणात्—व्रतोपायन इति। स ह स्माह बोधायनः। सङ्गवकाले वा व्रतमुपेयात्, धेनुषु वा दोह्यमानासु, प्रणीतासु वा प्रणेष्यत्सु, हविःषु वाऽऽसन्नेषु इति (बौ० श्रौ० २०।१)। प्रणेष्यत्सु प्रणीयमानास्वित्यर्थः। छान्दसो व्यत्ययः। तदेतत्कालद्वयं शालीकिमतेन पर्युदस्यति—अत्रो ह स्माह शालीकिः। पूर्वेद्युःकालं खलु व्रतोपायनं भवति। खलु शब्दोऽवधारणे। अत्रार्थे ब्राह्मणमुदाहरति—ब्राह्मणम्—बर्हिषा पूर्णमासे व्रतमुपैति। वत्सैरमावास्यायामिति। ब्राह्मणाभिप्रायमाह—[6]सङ्गवकाल एव व्रतमुपेयादिति। यतो बर्हिराहरणं वत्सापाकरणं सङ्गवकाले, ततो बर्हिर्वत्सशब्दौ तत्कालोपलक्षणार्थावित्यर्थः। पक्षान्तरमाह—अन्वाधानप्रभृतीत्यौपमन्यव इति। अन्वाधानानन्तरं चोदितेषु कालेषु अविरोधेन भोजनमित्यर्थः।

तमेवाविरोधं कर्मान्ते स्फुटयति—सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपिशितं, सर्वमेवैतदहः [7]कोशीधान्यं वर्जयेदन्यत्र तिलेभ्यः, तस्य ब्राह्मणं प्रतिपाद्याश्नीयात् (बौ० श्रौ० २४।२१।१०-१२)। अपिशितम् अमांसं, कोशीधान्यं शिम्बीधान्यं, फलोद्भवं मुद्गादिकमित्यर्थः। ब्राह्मणं प्रतिपाद्य भोजयित्वा तस्याऽश्नीयादित्यन्वयः। व्रतोपायनमन्नमश्नीयादित्यर्थः। नैतदहः शूद्रायोच्छिष्टं दद्यात् (बौ० श्रौ० २४।२१।१३)। उच्छिष्टमन्नं दातव्यं, जीर्णानि वसनानि चेति प्राप्तस्याऽस्मिन् विषये प्रतिषेधः। पत्न्या एवैतदहरुच्छिष्टं दद्यात् (बौ० श्रौ० २४।२१।१४)। अत्रैकवचनमविवक्षितम्। नाऽसन्द्यामॅंशयीत। आसन्दी खट्वा।

---

१. एतत्प्रकरणसंबद्धो बौधायनसूत्रपाठःपूर्वत्र प्रकोष्ठके उद्धृतः।
२. '०दन्वाधानार्थान्' इति कै० सं०। ३. 'एवैषोऽग्नि०' इति पुणे सं०।
४. 'प्रणीयेत्यालेखनः' इति पुणे सं०। ५. 'पाचयीत' इति कै० सं०।
६. 'स सङ्ग०' इति कै० सं०। ७. 'कौशी० इति कै० सं०।

न स्त्रियमुपेयात्। अशक्तश्चेत्—कामं त्वेवोपरि शयीत। स्त्रियं त्वेव नोपेयात्। अशक्तोऽपि—व्रतचारी त्वेव स्यादित्यनेन क्रोधरोदनादिपरित्यागोऽपि सगृहीतः। तथा च गोपालः—

अग्निहोत्रे हुते विप्रं भोजयित्वैव दम्पती।
आशितौ सर्पिषा दध्ना मिश्रमुच्छिष्टकं स्त्रियै॥

मांसेक्षुरसनिर्यासलवणाऽनृतमैथुनम्।
शूद्रायोच्छिष्टदानञ्च न कुर्यात्क्रोधरोदने॥ इति॥

कर्तव्यान्तरमाह—स यदि केशश्मश्रु वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा, लोमानि सꣳहृत्य, नखानि निकृन्तयीत, स्नायादभ्यञ्जीताऽऽञ्जीत, दीक्षायै रूपं कुर्वीत (बौ० श्रौ० २४।२१।१९-२१) इति। स यजमानो यदि वपनयोग्यकेशश्मश्रुतया तद्वपनेच्छावान्स्यात्तदा पर्वणि वापयीत। अतिसूक्ष्मत्वादवपने न दोष इति यदीत्यनेन द्योतयति। तथा च गोपालः—विकल्पो वपन इति। केशश्मश्रु वापयित्वेत्यत्र पाठक्रमो न विवक्षितः। तत्प्रकरणे श्मश्रुवपनस्यैव प्राथम्यविधानात्। श्मश्रूण्येवाऽग्रे वपतेऽथोपपक्षावथ केशान् (बौ० श्रौ० १७।४०।६) इति। स्नायादित्यत्र कर्माङ्गं स्नानान्तरं विदधाति न शुद्धयर्थं, तस्याऽन्यतः प्राप्तत्वात्। तथा चोपव्याहरणे वक्ष्यति—आदित एव तीर्थे स्नात्वोदेत्य (बौ० श्रौ० २।२।२४) इति। अभ्यञ्जीत नवनीतेनेति शेषः, अभ्यक्तो नवनीतेनेत्युक्तत्वात्। अञ्जनेनाऽऽञ्जीत। दीक्षायै रूपं कुर्वीतेति स्तुत्यर्थं, न तु तद्धर्मातिदेशार्थम्।

ननु पर्वणि च केशश्मश्रु वापयतेऽप्यल्पशो लोमानि वापयते (आप० श्रौ० ४।१।४-५) इति सूत्रे वपनस्य पाक्षिकत्वं न प्रतीयते। प्रत्युताऽप्यल्पश इत्यस्योभयत्राऽपि सम्बन्ध इति व्याख्यानपक्षे केशादीनामल्पत्वेऽपि वपनं विधीयते। तत्सूत्रविरोध इति चेन्नैवं, सूत्रार्थापरिज्ञानात्। एवं हि तद्भाष्ये व्याख्यातम्—'अर्थप्राप्तत्वाद्वपनस्य यदि विद्यते ततोऽस्मिन् काले नियम्यते। अत इष्टिवहुत्वेऽपि पुनःपुनर्न क्रियते। चशब्देनाऽन्यत्राऽप्यप्रतिषेधोऽनुमीयते। अप्यल्पशः, अल्पान्यपि लोमानि असमर्थान्यपि श्मश्रूणि' (धूर्त० भा०) इति। अस्य भाष्यस्य श्रीरामस्वामिव्याख्याने[1] यदि विद्यत इत्यस्य–यदि वर्षिष्ठाः केशाः विद्यन्ते इच्छा च विद्यते ततोऽस्मिन्काले नियमः इत्यर्थमभिधायाऽनन्तरमेवोक्तम्—अनिच्छायाञ्च केशभूयस्त्वे नियतं, मृता वा एषा त्वगमेध्या (तै० स० ६।१।१।२) इत्यादिलिङ्गात् (रामाग्निचितो भाष्यवृत्तौ) इति।

तदेतत्पूर्वापरविरुद्धं वचनम्, पूर्वम् इच्छाया निमित्तत्वमभ्युपगम्य समनन्तरमेव तन्निषेधात्। छेदनभेदनादिनिमितककर्मणामिव कादाचित्काङ्गत्वमिति वदता कथं नामेच्छानिमित्तकत्वं वपनस्योच्यते, नहि भवति नैमित्तिकमैच्छिकञ्चेति। इच्छाऽपि निमित्तमिति चेन्न, अनिच्छायाञ्च केशभूयस्त्वे नियतमिति व्याहन्येत। यच्चान्यदुक्तम्—पक्षद्वयेऽपि प्रतिपौण-

१. रामाग्निचित एव भाष्यवृत्तेरयं निर्देशः।

मासमेव वपनं न दर्शे, अधिकारिसंस्कारत्वादेकत्वाच्चाधिकारस्य (राम० भाष्यवृत्तौ ४।१।५) इति । एतदपि पूर्वापरानुसन्धानरहितमेव । यतः कर्मण्यप्रवृत्तोऽपि इच्छायां सत्यां कुर्यादिति केचिद् (रामा० भाष्यवृत्तौ ४।१।४) इत्युदाहृत्य न प्रत्याख्यातम् । अतः कर्मण्यप्रवृत्तश्च कथमधिकारी स्यात् ? किञ्च प्रकरणादेव कर्माङ्गत्वे सिद्धे, पर्वग्रहणात् कर्मणोऽनङ्गम् (तत्रैव) इति चोक्तेनैकतरपक्षपरिग्रहोऽपि । अपर्वकालेऽपि दर्शपूर्णमासप्रवृत्तौ कर्तव्यमिति केचिद् (तत्रैव) इत्युदाहृतपक्षोऽपि चशब्देनान्यत्राप्यप्रतिषेधोऽनुमीयत इति भाष्यसमानार्थः । तमप्यनादृत्य किमर्थं दर्शे वपननिषेधनिर्बन्धः कृत इति चिन्त्यमेतत् ।

किञ्चैतस्मिन्पक्षे सौत्रः पर्वशब्दः पूर्णमासवचनो न दर्शवचन इति वक्तव्यम् । न चात्र नियामकं किञ्दिस्ति । सत्त्वे वा चशब्दादन्यत्राऽनियमोऽनुमीयत इति व्याख्याय दर्शे तन्निषेधः स्ववचनविरुद्धः, दर्शस्य पूर्णमासादन्यत्वादिति । अत एवाभियुक्तैरन्यैः सूत्रमेवं व्याख्यातम्—ऐच्छिकत्वाद्वपनस्य पर्वणि पाक्षिकं सन्नियम्यते वापयत एव पवणीति (रुद्रदत्तवृत्तिः,आप०श्रौ०१।१ ४)। तेनाऽपर्वण्यनियमः । अत्र पर्वणि वापयत एवेति वपनाऽभावप्रतिषेधोऽवगम्यते । अतोऽस्यल्पभावादेव केशानां वपनानिच्छयैव पाक्षिकत्वमित्यस्मद्व्याख्यैकवाक्यता । उत्तरत्रापि—'तनरुहाण्यल्पान्यपि वापयितव्यानि केशश्मश्रु त्वल्पं सदुपेक्षणीयमिति भावः' (द्र० रुद्रदत्तवृत्तिः, आप० श्रौ० ४।१।५) इति निगमनाच्च पितृयज्ञवदनङ्गं स्वकालविधानादिति वदताप्यासवत्सर दर्शपूर्णमासानारम्भे ज्वराभिभवादिना तत्परित्यागे च पर्वणि वपनस्यावश्यकता द्योतितेति न दर्शे तन्निषेधशङ्काप्यवकाशमासादयेत् । प्रकरणावङ्गत्वपक्षेऽपि मृता वा एषा त्वग् (तै० सं० ६।१।१।२) इत्यादिलिङ्गाद् वपनयोग्यकेशादिसम्पत्तौ यज्ञियत्वापादनाय दर्शे च पूर्णमासे च सर्वथैव वपनं कर्तव्यमिति सिद्धम् ।

अयमत्र प्रयोगक्रमः—प्रातर्होमार्थं विहरणात्प्रागेव गार्हपत्यस्योत्तरतोऽन्वाधानार्थं स्थूलानि काष्ठान्यासाद्य, व्रतोपायनीयपाकाय समादिश्य, विहरणपक्षे विहृत्याग्निहोत्रानन्तरमग्निद्वयमपास्य, गोमयेनोपलिप्य, वापयीत । ततः सपत्नीकः, स्नात्वाऽहतं वासः परिधाय,यजमानो नवनीतेनाऽभ्यञ्जीताञ्जीत । लब्धब्राह्मणानुज्ञः पवनमन्त्राचमने कुर्यात् । तथा च परिभाषायाम्—ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वीत यत्कारी स्यात् समृद्धमेवास्य तदिनि (बौ० गृ०प० १।५) । यद्यत्कर्म करोति तद्ब्राह्मणानुज्ञापूर्वकं चेत्साङ्गं भवतीत्यर्थः । तदेव वेदकर्माणि प्रयोक्ष्यन्नादिन एव तीर्थे स्नात्वोदेत्याऽहतं वामः परिधाय एकविंशत्या दर्भपिञ्जूलैरात्मानं पवयित्वा,यस्य कुर्वन्भवति तं पवयति(बौ०गृ०प०१।३)। अध्वर्युरात्मानं पवयित्वा, यजमानं पवयतीत्यर्थः । तत्र एकविंशतिदर्भपिञ्जलैस्त्रेधा विभक्तैः सप्तभिः सप्तभिः कण्ठादुपर्युन्मृज्य नाभेरुपर्याऽऽकण्ठमुन्मृजेत् । सप्तभिर्गुल्फौ नाभेरधस्तादागुल्फमवमृजेत् ।

त्रेधा विभक्तानि समुच्चित्याद्भिरभ्युक्ष्योदङ्निरस्याऽप उपस्पृशेत्, निरसनादिषूदकस्पर्शनस्य धर्मे विधानात्—अङ्गमूपस्पृश्य सिचं वाऽप उपस्पृशेदिति (बौ० ध० १।१५।५) । सिचं वासः । एवं छेदनभेदनखननिरसनपित्र्यराक्षसनैर्ऋतरौद्राभिचरणीयेषु (बौ० ध० १।१५।६) इति । अथाऽप आचम्येति । तदपि द्वितीयमब्लिङ्गाभिस्त्रिः पिबेद्

व्याहृतिभिस्त्रिः परिमृजेत् । अपि वा व्याहृतिभिस्त्रिः पिबेदब्लिङ्गाभिस्त्रिः परिमृजेद् (बौ० प० सू० २-४) इति । तदपि द्वितीयमित्यनेन प्राथमिकं प्राकृतमाचमनं द्योतयति । अब्लिङ्गाभिरिति आपो हि ष्ठा मयोभुवः, यो वः शिवतमो रसः, तस्मा अरङ्गमामवः (ऋ० १०।९।१-३) इत्येताभिस्तिसृभिः प्रत्यृचमपः पीत्वा, व्याहृतिभिस्त्रिःपरिमृजेदिति । सप्रणवाभिः समुच्चिताभिरेकैकं मार्जनम् । तथा च धर्मे 'ओं भूर्भुवः सुवरित्येताभिर्व्याहृतिभिः सर्वाभिः सर्वपातकेष्वाचामेद् (बौ० ध० ४।३।२) इति । व्याहृतिभिः पानपक्षेऽपि समुच्चिताभिरेवाऽऽचामेदिति, अविशेषेण विधानात् पक्षद्वयेऽपि व्याहृतिभिरेव स्वान्यङ्गानि चोपस्पृशेत् ।

ततो मन्त्रप्रोक्षणं कुर्यात् । तदुक्तं धर्मे—अप आचम्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति (बौ० ध० २।७।२) इति । सुरभिमत्या दधिक्राव्णो ˙ रिषत्, आपो हि ष्ठा चनः (तै० सं० ७।४।१९।४), यच्चिद्धि ते ··प्रियासः (तै० सं० ३।४।११।६), हिरण्यवर्णाः शुचयः···निधत्त (तै० सं० ५।६।१।१), पवमानः सुवर्जनः ( तै० ब्रा० १।४।८।१) इत्येतेनाऽनुवाकेन, व्याहृतिभिः, अन्यैश्च पवित्रैः—शन्नो देवीः (ऋ०१०।९।४) इत्येवमादिभिः । पवनाऽऽचमनमन्त्रप्रोक्षणानि पत्नीनामृत्विजामपि समानानि । सर्वत्र कर्मान्तेष्वाचमनम् ।

ततो यजमानः पत्न्यश्च यथानुपूर्व्यमुत्कराऽऽहवनीययोरन्तरेण प्रपद्य जघनेन गार्हपत्यं प्रागग्रेषु दर्भेषु प्राङ्मुखा उपविशन्ति । उत्तरतः पतिर्दक्षिणतः पत्न्यः । ऋत्विजश्चैवं प्रपद्य गार्हपत्यस्योत्तरतः प्राङ्मुखा उपविशन्ति । अत्रोत्कराऽऽहवनीययोर्मध्यमेव तीर्थशब्दवाच्यम्, चात्वालाऽभावात् । सति तु चात्वाले अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् । तथा च धर्मे—अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् । अचात्वाले आहवनीयोत्करौ । ततः कर्तारः पत्नी यजमानश्च[2] प्रपद्यन्ते । संस्थिते । विसंस्थिते च सञ्चर उत्करदेशात् (बौ० ध० १।१५।१५-१६) । संस्थिते यज्ञसमाप्तौ यथाप्रपन्नं निष्क्रामेदिति चोदितः सञ्चरः । विसंस्थिते यज्ञाऽपरिसमाप्तौ चोदितोऽचोदितो वा सञ्चर इत्यर्थः । ततः सर्वैरपि प्राणायामः शुद्धचर्थो विधेयः । अस्य चाधिकारिसंस्कारतया कर्माङ्गत्वेऽप्येकाधिकारप्रवृत्तयोरपि दर्शपूर्णमासयोरादौ कर्तव्यताऽवसेया, प्रतिकर्मशुद्धेराकाङ्क्षितत्वात् । अत एव पत्नीनामप्यमन्त्रकः प्राप्तः । मन्त्रश्च धर्मे दर्शितः—

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ।। (बौ० ध० ४।१।२८)
निरोधाज्जायते वायुर्वायोरग्निर्हि जायते ।
तापेनाऽपो हि[3] जायन्ते ततोऽन्तः शुध्यते त्रिभिः ।। (बौ० ध० ४।१।२६) ।

---

१. 'ओंपूर्वाभिर्व्या०' इति ब० सं० ।
२. '०मानौ च प्रपद्येरन् । विसंस्थिते । संस्थिते च सञ्चरोनूत्करदेशात्' इति ब०सं० ।
३. 'धि' इति ब० सं० ।

ततो यज्ञाधिदैवतं विष्णुं ध्यायेत् । तथा च कर्मान्ते—क उ खलु यज्ञ इति, पुरुष इति (बौ० श्रौ० २४ २।८,६) । अत्र यज्ञस्य कर्मरूपत्वेनासन्दिग्धत्वान्न तत्स्वरूपविषयः प्रश्नः, किन्तु यज्ञाधिदैवतविषयः । अत एव पुरुष इत्युत्तरम् । पुरुष इति विष्णुरुच्यते, यतः स सर्वात्मा । तथा च परिभाषायाम्—पुरुषो वै यज्ञः यज्ञो वै विष्णुः पुरुषः । पुरुष एवेदꣳसर्वम् इति च । तदेतद्विष्णुध्यानं कर्मादावृत्विग्भिरपि कर्त्तव्यं, गोपालेनाऽध्वर्युकर्तृकत्वेनाऽभिधानस्योपलक्षणार्थत्वात्—'यज्ञाधिदैवतं विष्णुं ध्यात्वादौ पुरुषो ह्यसौ' इति । ततो यजमानो जपति—याः पुरस्तात् ···मारभे, देवा गातुविदो गातुं यज्ञाय···प्रयुज्यताम् (तै० ब्रा० ३।७।४।१) इति । अत्र जपचोदनात्स्वरनियमः । अन्यत्रैकश्रुत्यं, यज्ञकर्मण्यजपन्यूङ्खसामसु (अष्टा० १।२।३४) इति स्मरणात् । ततः श्रद्ध एहि, सत्येन त्वाह्वयामि (आप० श्रौ० ६।३।८) । जपति—आकूत्यै त्वा ··निविष्टम् (तै० ब्रा० २।५।३।२) ।

श्रीपरमेश्वरप्रीत्यर्थं स्वर्गकामः पौर्णमासेन हविषा यक्ष्ये, आमावास्येनेत्यमावास्यायां, त्रिरुपांशूक्त्वा त्रिरुच्चैर्ब्रूयात् । अस्य मन्त्रत्वाद्धुतानुमन्त्रणवदकामेनाऽपि स्वर्गकामपदं प्रयोक्तव्यमिति वक्ष्यामः । तन्म ऋध्य···काम इत्युक्त्वा ऋत्विग्भिः[1] तत्त ऋ···काम इत्युक्ते ओं तथेति ब्रूयात् । ततो देवताः सङ्कल्पयेत् । ततः प्राङ्मुखमासीनमध्वर्युं प्रत्यङ्मुख आसीनो यजमानः, अस्याभिष्टचासध्वर्युं त्वां वृण इति वृणीयात् । एवं ब्रह्माणं होतारम् आग्नीध्रञ्च । एवं वृतोऽध्वर्युः सूत्रमजिनं चोत्तरीयं यज्ञोपवीतं कृत्वा, आचम्य गार्हपत्यस्योत्तरत उपविश्य, इडा देवहूः···मदन्तु (तै० सं० ३।३।२ १) इति जपेत् । तथा चौपानुवाक्ये—आर्त्विज्यं[2] करिष्यन् शस्त्रं वा प्रतिगरिष्यन्निडादेवहूरिति (बौ० श्रौ० १४।११,२६) एतद्यजुर्जपेत् । एतद्यजुः सर्वर्त्विजां समानम् । अध्वर्युः ओं तथा इत्युक्त्वा, देवा गातुविदो गातुं यज्ञाय··· प्रयुज्यताम् (तै० ब्रा० ३।७।४।१) इति जपेत् । तथा च कर्मान्ते—क उ खलु यज्ञस्यारम्भः का प्रतिष्ठेति (बौ० श्रौ० २४।२।१५) । आरभते अनेन अध्वर्युरित्यारम्भः । स क इति प्रश्नः, प्रतिष्ठा समाप्तिहेतुश्च क इति प्रश्नः । उत्तरम्—वात एव यज्ञस्यारम्भो वातः प्रतिष्ठेति (बौ० श्रौ० २४।८।१७) । अत्र वातशब्देन देवा गातुविदः (तै० ब्रा० ३।७।४।१) इति यजुरुपलक्ष्यते । वाताद्यज्ञः प्रयुज्यतामिति वातशब्दश्रवणात् । यजमानकर्तृके त्वन्वाधाने यजमान एवैतद्यजुर्द्वयं जपेत् । उद्धरणपक्षे अन्वाहार्यपचनं स्वयोनित उत्पाद्य, गार्हपत्यादाहवनीयं प्रणीयाऽऽहवनीयात् सभ्यावसथ्यौ प्रणयेत् ॥५॥

अग्नीनन्वादधाति त्रीणि काष्ठानि गार्हपत्येऽभ्यादधा त
त्रीण्यन्वाहार्यपचने त्रीण्याहवनोये ॥६॥

भव०—त्रीणि काष्ठानीत्येव आरब्धव्येऽग्नीनन्वादधातीति एतस्य कर्मणः संज्ञात्वख्यापनार्थम् । तच्चाभ्युदितमग्न्याधानमित्येवमादिषु संव्यवहारार्थम् । त्रीणि काष्ठानि गार्हपत्येऽभ्यादधाति तूष्णीमिति गम्यते मन्त्रावचनात् । सूत्रमौपमन्यवी-

१. '०भिस्तु' इति मुद्रिते । २. '०ज्यं वा करि०' इति कै० सं० ।

**पुत्रस्य** (बौ० श्रौ० २०।१) इति भेदेन पक्षान्तरोपन्यासात्। अत्र केचिद् द्वैधकर्मान्तौ-पानुवाक्योक्ता विधयो मूलकल्पप्रकरणोक्तैर्विधिभिर्विकल्प्यन्ते इति ब्रुवते। अपरे विशेषोक्ता विशेषोक्तैर्विकल्प्यन्ते, अविशेषोक्तैर्विशेषोक्ता अनुक्ताश्च शेषत्वेन सम्बध्यन्त इति। विशेषोक्तास्तावदिह शाखाच्छेदन एको मन्त्रो द्वैधे (द्र०—बौ० श्रौ० २०।१) **पुरस्तात् प्रत्यञ्चमिति**। अविशेषोक्तास्तावदग्न्यन्वाधानादयः **अग्नीनन्वादधातीति** इहोक्तम्। **अङ्गुष्ठपर्वमात्राणि दैवतानि [अवदानानि भवन्ति ज्यायांसि सौविष्ट] कृतानि** (बौ० श्रौ० २४।२८।९) इत्यादि तत्र विशेषः। **पूर्वार्धादवदायेति** (बौ० श्रौ० १।१८।१४) इहोक्तं, **व्यतिषज्यैवाङ्गुलीरवद्येत्**। **अङ्गुष्ठपर्वमात्राणि** (बौ० श्रौ० २४।२८।८-९) तत्र। एवं प्रस्तरवेदिखननादिषु अनुक्तानाम्। **'अत्याक्रम्याान्वाह'[1] समिधो यज**(बौ०श्रौ० १।१६। ) इतीहोक्तम्। **अभिक्रामन्[2] जुहोति** (बौ०श्रौ०२०।१३) इति तत्रोक्तम्। **सर्वेणाभिक्रामेत्** (बौ० श्रौ० २०।१३) इत्यादिब्राह्मणोक्तास्तेषूप-संग्राह्याः, **छन्दसा ब्राह्मणेन** (बौ० श्रौ० २४।१।१) इति वचनात्। यथोपवेषचर्मादियो लिङ्गादिना तयोर्विशेषनिश्चयः।

अग्न्यन्वाधानं याजमानमिति केचित्, याजमाने समाम्नानात्। **उपकल्पयते स** इति प्रकृत्य **आदधातीति** वचनात् स एवाधत्त इति गम्यते। योऽग्नीनन्वाधाय व्रतमुपैतीति तेन समानकर्तृकत्वाच्च। व्रतं चासन्दिग्धं याजमानम्। आध्वर्यवं चेत्यन्ये, इह समाम्नानात्, **अथोपवसथीयेऽहन्** (बौ० श्रौ० ३।१५।१) इत्यत्राम्नानात्, परस्मैपदात्, **ममाग्ने वर्चो विहवेषु** (तै० सं० ४।७।१४।१) **इत्यध्वर्युरादधाति** [इति] शाखान्तरदर्शनान (द्र०—का० श्रौ० २।१।२-३)। वेदिं विमायाग्नीनन्वादधाति। वेदिमानादिसमानकर्तृकवचनाच्चान्यतरस्मिन् इतरलिङ्गानुगमः कर्त्तव्यः। आचार्य-स्योभयलिङ्गदर्शनादन्यतरानुगमे गौणप्रसङ्गाद् विकल्पोऽभिप्रेत इति गम्यते॥६॥

**सा०**–अग्नीनन्वादधाति त्रीणि काष्ठानि गार्हपत्येऽभ्यादधाति, त्रीण्यन्वाहार्यपचने, त्रीण्याहवनीय इति। अत्रान्वादधातीति वचनमन्वाधानसंज्ञाप्रख्यापनाय। तूष्णीमन्वाधानमुक्तम्। अग्नीनामन्वाधान इति। सूत्रमौपमन्यवीपुत्रस्य (बौ० श्रौ० २०।१) इति। भेदेन पक्षान्तरोपन्यासादुभत्रापि मन्त्रावचनाच्च। समन्त्रकान्वाधानविकल्पास्तु द्वैधे दर्शिताः। अत्रो ह स्माह बोधायनो विहव्याभिरग्नीनन्वादध्यात्तिसृभिस्तिसृभिरेकैकम् (बौ० श्रौ० २०।१) इति। विहव्या इति, ममाग्ने वर्चो विहवेष्वस्तु (ऋ० १०।१२८।१-९; तै० सं० ४।७।१४) इत्यनुवाकाम्नाता दशर्चः। तत्र तिसृभिः त्र्यृग्भिः प्रत्यृचमेकैकस्मिन्नग्नावेकैकां समिधमिति क्रमेण तिस्रस्तिस्रः समिध आदध्यात्। ये नव समामनेयुः (बौ० श्रौ० २०।१) इति। ये शाखिनो विहव्या नवैव ऋचः समामनन्ति तेषां दशम्यभावाद्वक्ष्यमाणोपस्थानाऽभावः।

---

१. '०भ्याश्राव्याह' इति कै० सं०।
२. '०क्रामं' इति कै० सं०।

पक्षान्तरमाह—अथ येऽष्टौ प्रथमां वोत्तमां वा द्विरभ्यावर्तयेयुः (बौ० श्रौ० २०।१) इति । ये शाखिनोऽष्टावेव विहव्या आमनन्ति तेषां पक्षे प्रथमामृचं [1]द्विरावर्त्य गार्हपत्याऽन्वाधाने मन्त्रत्रयं सम्पाद्यम्, उत्तमामष्टमीं वा द्विरावर्त्याऽऽहवनीयाऽन्वाधाने मन्त्रत्रयं सम्पाद्यमित्यर्थः ।

पक्षान्तरमाह—अथ ये दश तिसृभिस्तिसृभिरेकैकमन्वाधायोत्तरेणाऽऽहवनीयं तिष्ठन्दशमीं निगदेदिति (बौ० श्रौ० २०।१) । दशम्या ऋचाऽऽहवनीयमुपतिष्ठेदित्यर्थः । अत्रो ह स्माह शालोकिः—यो नु खलु गार्हपत्यः सकृदन्वाहितः एष भवति । ग्रामयोनिरन्वाहार्यपचनः । आहवनीयमेवैकं विहव्ययाऽन्वादध्यादथातिशिष्टा उत्तरेणाऽऽहवनीयं तिष्ठन्निगदेदिति (बौ० श्रौ० २०।१) । य एष गार्हपत्यः सकृदेव प्रथमदर्शपूर्णमासक्रम एव वा प्रतिकर्म वा सकृदमन्त्रकमेकया समिधाऽन्वाहितो भवति, अन्वाहार्यपचनोऽपि ग्रामयोनिः लौकिकाग्न्याहितः । एवं सति एकमेवाऽऽहवनीयं विहव्यया प्रथमयर्चाऽन्वादध्यात्, अतिशिष्टा ऋचः शाखाभेदेन सप्ताऽष्टौ नव वाऽऽहवनीयस्योत्तरतस्तिष्ठन्निगदेदिति । अत्रो ह स्माऽऽहौपमन्यवः—विहव्याभिरेवाग्नीनन्वादध्याद् (बौ० श्रौ० २०।१) इति । एवकारस्तूष्णीमन्वाधानं मन्त्रान्तरेण चाऽन्वाधानमपाकरोति ।

अत्र विशेषमाह—एकैकमेकैकया (बौ० श्रौ० २०।१) इति । एकैकया ऋचा एकैकमग्निमन्वादध्यात् । अथाऽतिशिष्टा उत्तरेणाऽऽहवनीयं तिष्ठन्निगदेदिति पूर्ववत् । अत्रो ह स्माऽऽह मौद्गल्यः—आहवनीयमेवैकमन्वादध्यान्ने[2]तरौ (बौ० श्रौ० २०।१) । मन्त्रतोऽपि विशेषमाह—अग्निं गृह्णामि सुरथं…अग्निर्हव्यवाडिह तानावहतु पौर्णमासं हविरिदमेषां मयि (तै० ब्रा० ३।७।४।३) इति पौर्णमास्याम् आमावास्यं हविरिदमेषां मयीत्यमावास्यायाम् । अत्रो ह स्माऽऽह मैत्रेयः—आहवनीयमेकं[3] विहव्ययाऽन्वादध्यात्तूष्णीमितरौ । अथाऽतिशिष्टा उत्तरेणाऽऽहवनीयं तिष्ठन्निगदेदिति । व्याहृतिभिरेवाग्नीनन्वादध्यादिति राथीतरः (बौ० श्रौ० २०।१) इति । अत्र समुदिताभिरेकैकमन्वादध्याद् व्यस्ताभिर्वा, प्रत्येकं समिधां त्रित्वमेकत्वं वेति द्रष्टव्यम् ।

सर्वेष्वपि विशेषः कर्मान्ते दर्शितः—अग्नीनन्वादध्यादुपस्थं कृत्वा गार्हपत्यम् ऊर्ध्वज्ञुरन्वाहार्यपचनं प्रह्व आहवनीयं तिष्ठन्दशमीन्निगदेदिति (बौ०श्रौ० २४।२१।१८)। क्रमात्स्वस्तिकासनस्थ उत्कटिकासनस्थः प्रह्वश्चेत्यर्थः ॥६॥

परिसमूहन्ति ॥७॥ उपवसथस्य रूपं कुर्वन्ति ॥८॥ अथास्य व्रतोपेतस्य पर्णशाखामाच्छैति प्राङ् वोदङ् वा वाचंयमो यत्र वा वेत्स्यन्मन्यते ॥९॥

भव०—परिसमूहनं–संमार्जनम् ॥७॥ उपवसथस्य रूपम् उपलेपनपुष्पोपहारः कर्त्तव्यः । यमनियमेषु प्रयत्नः कर्त्तव्यः । अत्रैव परिसमूहनस्यान्तर्भावेऽपि पृथग्-

---

१. 'द्विरभ्यस्य' इति क० ।
२. 'नेतरौ' इति कै० सं० नास्ति । ३. '०मेवैकं' इति कै० सं० ।

ग्रहणं परिसमूहनस्य उपसमाहितेऽग्नौ अन्यत्रापि परिसमूहनपर्युक्षणपरिस्तरण-नियमख्यापनार्थम् । उपवसथरूपापरिज्ञानाद्वा परिसमूहनाद्युपवसथरूपमिति ॥८॥ अथाशितस्य व्रतोपेतस्येति नोक्तम् । उभयथा दर्शनाद् व्रतोपायनीयमशित्वेतीह प्राप्नोतीति **तस्य ब्राह्मणं प्रतिपाद्याश्नीयात्** (बौ० श्रौ० २४।२१।१३) इति प्रस्तुत्या-ग्न्यन्वाधानवचनात् प्राप्नोति । **नासन्द्यां शयीत** (बौ० श्रौ० २४।२१।१६) इति वचनं न व्य[व]धायकमिति । आरम्भे सङ्कल्पयितव्यं व्रतमिति । तथान्यत्रापि उक्तम्—**अशनमग्न्यन्वाधानं व्रतोपायनमग्नावाधानशमनं व्रतोपायनमिति ।**

**अथ-शब्दः** पूर्वेषां व्यवच्छेदार्थः । तच्चैतदूर्ध्वं संनयतो बर्हिःप्रतिपदेवेति विभागार्थम् । तथा सत्यग्न्यन्वाधानमुभयत्र सिद्धं भवति । आतञ्चनं चास्य न भवतीत्यर्थवलीयस्त्वात् । अस्येति चाभेदनिर्देशाच्च ऊर्ध्वमाध्वर्यवमेवेति ज्ञापयति । **व्रतोपेतस्य** व्रतोपायनमात्रत्यनिवृत्तिसङ्कल्पः, कृतपयस्वतीसमिदाधानस्येत्यर्थः । आभिमुख्येन पर्णशाखाम् **आच्छैति** गच्छति आप्तुं वा । आकारः प्रमादपाठ इति केचित् । आभिमुख्यार्थत्वादाच्छैतीत्याप्त्यर्थत्वादाभिमुख्येनाप्तुं गच्छतीत्यर्थः । बर्हिरच्छैत्यादिषु नोभयं विवक्षितम् । मर्यादार्थो वा, आ शाखाया गन्तव्यमित्यर्थः । प्राप्यमिति छेदने दूरत्वेऽपि न प्रतिनिधिरिति । **प्राङ् वोदङ् वा** इति शब्दद्वयम् एकेन सिद्धे तुल्यविकल्पार्थम् । अन्यत्र लभमानोऽपि ईषत् प्राचीमुदीचीं वा गत्वा यथार्थं गच्छेदित्येवमर्थं च । तथान्यत्र **त्रीन्वा चतुरो वा प्राञ्च**[1] (बौ० श्रौ० २०।२) इति । विदिर्लभार्थः, मन्यतेः पृथगुपन्यासात् ॥६॥

**सा०**—परिसमूहन्ति । अध्वर्युर्यजमानः पत्न्यश्चाग्न्यायतनं परिसमूहन्ति ॥७॥ उपवसथस्य रूपं कुर्वन्ति । उपवसथशब्दः परिसमूहनादिकर्मसमूहवाचकः । तस्योपवसथस्य रूपं यैः कर्मविशेषैर्भवति, तानि कर्माणि कुर्वन्तीत्यर्थः । तथा च गोपालः—

परिसमूहनवारिसमुक्षणे हुतभुजां शकृदा परिलेपनम् ।
कुसुमकाष्ठसमाहरणं व्रतं वदति रूपमिहौपवसथ्यकम् ॥ इति

उपवसथाऽन्तर्गतस्याऽपि परिसमूहनस्य पृथगभिधानं कर्मान्तरेष्वपि परिस्तरणा-दिवन्नियतत्वंख्यापनार्थं परिसमूहनादिकत्वञ्चोपवसथस्य स्थापयितुमिति ॥८॥ अथास्य व्रतोपेतस्येति । अस्य यजमानस्य व्रतोपेतस्याऽऽव्रत्यनिवृत्तिसङ्कल्पवतः पयस्वतीरोषधयः …संसृज (तै० सं० १।५।१०।२) इत्यभिमन्त्रितापः पीत्वाऽऽचान्तस्य समन्त्रकं पानमाचमना-ऽन्तर्गतम् । तदनन्तर्गतमिति केचित् । अग्ने व्रतपते (तै० ब्रा० ३।७।४।७) इत्यादिभिश्चतुर्भि-र्मन्त्रैः कृतसमिदाधानस्य यजमानस्याध्वर्युः पर्णशाखामाच्छैति, पर्णशाखामाभिमुख्येन गच्छति । मर्यादायां वाऽऽङ् । पर्णशाखापर्यन्तं गच्छतीत्यर्थः । गमने दिङ्नियममाह प्राग्वोदग्वा[2] । वाशब्दद्वयेन प्रागुदग्दिशोः समतुलितत्वं द्योतयति । वाचंयम इत्यनेन द्वैधोक्तं विशेषमुपलक्ष-यति—आच्छायन इति । स ह स्माऽऽह वोधायनः—वाचंयम एव शाखामाच्छेयात्,

---

१. 'प्राचः' इति कै० सं० । २. 'प्राङ्०' इति कै० सं० ।

वाचंयम एवाऽऽहरेत् । एवं वर्हिरित्येवं चैव खलु कुर्यादिति शालीकिः । ब्राह्मणेन च यथार्थमन्तर्हसन्नेव सम्भाषीत, नाऽब्राह्मणेनेति (बौ० श्रौ० २०।१) । अन्तर्हसन्त्सम्भाषणं धर्मे स्पष्टीकृतम्—तत्र 'मौनयुक्तस्त्रैविद्यवृद्धैराचार्यैर्मुनिभिरन्यै.' सर्वाश्रमिभिर्वहुश्रुतैर्दन्तैर्दन्तान्सन्धायाऽन्तर्मुख एव यावदर्थं सम्भाषेत' न यन्त्रलोपो भवति इति विज्ञायते (बौ० ध० २।१८।१९) । यन्त्रलोपो नियमलोपः । यत्र वा वेत्स्यन्मन्यते यस्यां दिशि शाखालाभं निश्चिनुयात्तां दिशं गच्छेदित्यर्थः । अनेनैव वचनेन सिद्धेऽपि प्राग्वोदग्वेति वचनं दिगन्तरे शाखालाभेऽपि प्रथमं प्रागुदग्वा गमननियमार्थम् ॥९॥

सा या प्राची वोदीची वा बहुपर्णा बहुशाखाप्रतिशुष्काग्रा भवति तामाच्छिनत्ति—इषे त्वोर्जे त्वा (तै० सं १।१।१।१) इति ॥१०॥ तया वत्सानपाकरोति—वायव स्थोपायव स्थ (तै० सं० १।१।१।१)इति ॥११॥ अथैषां मातॄः प्रेरयति—देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आ प्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माऽघशंसो रुद्रस्य हेतिः परि वो वृणक्तु (तै० सं० १।१।१।१) इति ॥१२॥ ध्रुवा अस्मिन्गोपतौ स्यात बह्वीः (तै० सं० १।१।१।१) इति यजमानमीक्षते ॥१३॥

भव०—प्राचीमुदीचीं वा वृक्षस्य प्रागग्रतो वा । वा शब्दात् प्रागुदीची वेति ब्राह्मणे विस्पष्टमुक्तत्वाद् (तै० ब्रा० ३।२।१।३) गम्यत इत्यनयोरर्थवादेनाभेदसंस्तुतत्वात्तदभावाशङ्कानिवृत्त्यर्थं वा तयोरेवोपन्यासः । शम्युपसंग्रहार्थो वा वाशब्दः । शाखान्तरे (द्र०—का० श्रौ० ४।२।१) समाम्नातत्वात् । इहासमाम्नातमिति तु चेसिद्धग्रहणेन प्रदर्शितत्वान् न दोषः । बहुपर्णादिग्रहणं प्राचीनिन्दिताऽपर्णादिनिवृत्त्यर्थम् । इषे त्वोर्जे त्वा इति छेदने विनियुक्तत्वात् प्रकाशकत्वाच्च मन्त्राणाम्, अन्यथाऽसामर्थ्यात् छिनद्मीति केचिदध्याहरन्ति (द्र०—का०श्रौ०४।२।२) । तदयुक्तम्, पाठसामर्थ्याद् विना शब्देन स्मर्तव्यम् । इमां प्राचीमुदीचीम् (तै० ब्रा० ३।७।४।८) इति लिङ्गात् प्रागुदीच्यपि पक्षे प्रयोक्तव्यम् । विभज्य सर्वत्रेत्यपरे ॥१०॥ वत्सानिति सम्भवापेक्ष एकशेषः । वायव स्थेत्यन्यनिगदत्वादनूहः ॥११॥ प्रेरणं पृथक्करणम् ॥१२॥ यजमानेक्षणं मनसा स्मरणम्, परोक्षेऽपोष्टत्वात् । चक्षुर्व्यापारे हि परोक्षनिवृत्तिः स्यात् । तत्र नित्यवदाम्नातं बाध्येत । पाठस्य केचित्प्रयोजनमाहुः—मन्त्रेण गवां प्राधान्याद् यजमानस्यासंस्पर्शनात् । गोपतौ इति शब्देन ऋषभ एवेष्यते । तत्र तासां ध्रुवत्वाशासने एकमन्त्रताप्यस्तीति ॥१३॥

---

१. 'मौने यु०' इति बनारस सं० ।

२. 'रन्यैर्वाश्रमि०' इति बनारस सं० । ३. 'सम्भाषीत न यत्रलोपो' बनारस सं० ।

सा०—सा या प्राची वोदीची वा बहुपर्णा बहुशाखाऽप्रतिशुष्काऽग्रा भवति तामाच्छिनत्तीषे त्वोर्जे त्वेति। वृक्षस्य प्राची प्रागदेशस्था, एवमुदीची। वाशब्दाभ्यां प्रागुदग्देशप्रसृताऽपि शाखा समुच्चीयते। तथा च ब्राह्मणम्--प्राचीमुदीचीमाहरतीति (तै० ब्रा० ३ २।१।३)। शाखान्तरविहितशमीसङ्ग्रहार्थो वा द्वितीयो वाशब्दः। बहुपर्णादिविशेषणोपादानं निन्दिताऽपर्णादिनिवृत्त्यर्थम्। तामसिदेनाच्छिनत्ति।

अत्र विशेषो द्वैधे—शाखाया आच्छेदन इति। स ह स्माऽऽह बोधायनः इषेत्वेति शाखामाछिन्द्यादूर्जेत्वेत्यनुमृज्यादन्वीक्षेत[1] वा। अन्वीक्षेतैवेति शालीकिः (बौ० श्रौ० २०।१) ॥१०॥ तया वत्सानपाकरोति वायव स्थोपायव स्थेति। तया शाखया वत्सान् मातृसकाशाद् व्यावर्तयति। प्रतिवत्सं मन्त्रावृत्तिः। बहूनां मातृसङ्गतानाम् एकप्रयत्नेनापाकरणस्याऽशक्यत्वात् मन्त्रगतं बहुवचनं समुदायापेक्षम्। उपरवखननादिमन्त्रवदेकाऽपाकरणेऽपि नोहः। द्वैधे च विशेषः—वत्साऽपाकरण इति। स ह स्माऽऽह बोधायनः, वायव स्थेति पुंस[2] उपायव स्थेति स्त्रियोऽथ यद्यन्यतरे स्युर्नैव मन्त्रं परिजह्यात्। संसृष्टेनैवेति शालीकिः (बौ० श्रौ० २०।१)। मन्त्रभेदपक्षे क्रमात्पुंविषयत्वेन स्त्रीविषयत्वेन च नियतौ, यद्यन्यतरे एव पुंसः स्त्रियो वा वत्साः स्युस्तदाऽपि मन्त्रद्वयं न जह्यात्। शालीकिपक्षे तु स्त्रीपुंवत्ससंसृष्ट एव विषये मन्त्रद्वयं विनियोजयेत्। अन्यतरपक्षे त्वेक एव मन्त्र इत्यर्थः ॥११॥ अथैषां मातॄः प्रेरयति,पृथक्करोति,गोचराय प्रस्थापयति-देवो वः सविता··वृणक्त्विति।॥१२॥ ध्रुवा अस्मिन् ··बह्वीरिति यजमानमीक्षते। अत्र यजमानेक्षणं मनसा स्मरणं, प्रोषिते यजमाने चक्षुर्व्यापारस्याऽसम्भवात्। मन्त्रेण चानेन यजमानस्मरणं नित्यम्। अस्य मन्त्रस्य पूर्वमन्त्रैकवाक्यतापक्षमपि द्योतयितुं कर्मोपदेशात्पूर्वं मन्त्रपाठः। गोपतिशब्दश्च यजमानवचन इत्येकः पक्षः। अस्य मन्त्रस्य पूर्वमन्त्रैकवाक्यतापक्षे गोपतिशब्दो वृषभवचनः। अमन्त्रकञ्च यजमानस्मरणमिति विवेकः ॥१३॥

अथैतां शाखामग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमग्निष्ठेऽनस्युत्तरार्धे वाग्न्यगारस्योद्गूहति—यजमानस्य पशून् पाहि (तै० सं० १।१।१।१) इति ॥१४॥ नु यदि संनयति। १५॥ यद्यु वै न संनयति बर्हिःप्रतिपदेव भवति ॥१६॥

भव०—शाखामित्येव सिद्धे एतामिति न पर्णशाखैव, शाखामात्रमिति। ततश्च शाखान्तरे पठितशम्याद्यस्तीति बोधयति अग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारेति गार्हपत्यस्यैव शाला नेतरयोरिति, इतरथा[3] अग्रेणाहवनीयागार इति ब्रूयात्। अग्निष्ठे शकट इति। वाशब्दाभावादेष मुख्यः कल्पः। उत्तरार्धे वा शालायामित्यनुकल्पः। तथा च वक्ष्यति—यद्यु वै नानो भवति (बौ० श्रौ० १।५।६) इति। उद्गूहति

---

१. '०मृज्याद्वान्वी०' इति कै० सं०।

२. 'पुंस एवापाकुर्यादुपा०' इति कै० सं०। ३ 'इतरथा' इति ख-कोशमात्रे।

इत्युभयार्थः। न पर्णशाखार्थं एवेति ॥१४॥ इति नु यदि संनयति। पाहीत्यत्र नास्ति क्वचिद्विना प्रयोगदर्शनात्, उतेमनंनमुः (बौ० श्रौ० ७.४।३) इति। अथवोभाभ्यां सम्बध्यते एवं सन्नयत इत्यर्थः। पूर्वेणैव वा सम्बन्धः। नु शब्द एवमित्येतस्मिन्नर्थे, विध्यन्तरेऽपि दुग्धं लभमानस्येति मन्त्रनिवृत्त्यर्थम्। अर्थाभावे मा निवर्तय इति एतदेव ज्ञापयति अन्यत्रार्थाभावे निवृत्तिरिति प्रयाजानुयाजाभावे जौहवाज्यादिनिवृत्तिः ख्यापिता भवति ॥१५॥ असन्नयतो बर्हिरारम्भ एव भवति। अथेत्यत आरभ्या एतस्मात् सन्नयतो व्रतोपायनानन्तरं बर्हिः प्रतिपत्। आतञ्चनाग्न्यन्वाधानयोर्यथोक्तम् ॥१६॥

॥ इति प्रथमोऽध्यायः समाप्तः ॥

—:०:—

सा०—अथैताᳬशाखामग्रेणाऽऽहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमग्निष्ठेऽनस्युत्तरार्धे वाऽन्यगारस्योद्गूहति[1], यजमानस्य पशून्पाहीति। शाखामुपगूहतीत्येतावतैव सिद्धेऽप्येतामिति वचनं शाखान्तरविहितशमीशाखादेरपि ज्ञापनार्थम्। आहवनीयस्याऽप्रदेशं परीत्य, वेद्युत्करयोर्मध्यावाहृत्य, गार्हपत्यागारस्य पूर्वया द्वारा प्रपाद्य, जघनेन गार्हपत्यमित्येकस्यैवाऽगारकल्पनापक्षं[2] द्योतयति। सर्वेषामप्यगारपक्षे पूर्वया द्वारा प्रपाद्याऽग्रेणाऽऽहवनीयं पर्याहृत्येत्यन्वयः। अग्निष्ठेऽनसि, प्रवासादिष्वग्निस्तिष्ठत्यस्मिन्नित्यग्निष्ठमनः शकटं, तस्मिन्नुत्तरार्धे उद्गूहति ऊर्ध्वं गोपायति आसञ्जयति, अनधः सादयति (तै० ब्रा० ३।२।१।५) इति वचनात्। अन्यगारस्योत्तरार्धे वेत्यानुकल्पिकः पक्षः। अनसोऽभावे ऽयमेव मुख्य इति। द्वैधे विशेषः—शाखायै सञ्चर इति। अग्रेणाऽऽहवनीयं सञ्चारयेदिति बोधायनः। जघनेन गार्हपत्यमिति शालीकि.। एष सर्वकल्पे शाखायै सञ्चरः पयसां चाऽन्यत्र प्रावर्गिकादित्युभयोरेवाऽपरेण प्रावर्गिकं सञ्चारयेदित्यौपमन्यवः (बौ० श्रौ० २०।२)। शाखायाः सञ्चरेऽपि विषये इत्युक्तेन प्रकारेण पूर्वकल्पे बोधायनो यदवोचद् अग्रेणाऽऽहवनीयमित्यादि स एकः पक्षः। जघनेन गार्हपत्यं सञ्चर इति शालीकिः। औपमन्यवं पक्षमाह—एष शाखाया सञ्चरः पयसां सर्वकल्पे च। पयसां सर्वानुष्ठानविनियोगे च। शाखासञ्चरश्च पश्वादिशाखास्वप्यवगन्तव्यः, अन्यत्र प्रावर्गिकात्पयसः। प्रवर्ग्यार्थे पयसि शाखासञ्चरानुविधानं नास्ति। उभयोरपि पक्षयोः शाखासञ्चरणमार्गविषययोर्बोधायनशालीकिपक्षयोरपरेण सञ्चारयेदित्यौपमन्यवः ॥१४॥ नु यदि सन्नयति। यद्यु वै न सन्नयति बर्हिःप्रतिपदेव भवति। नु शब्दोऽवधारणे। यदि सन्नयत्येव तर्हि शाखाछेदनादिकः प्रयोगः। यदि न सन्नयति तर्हि बर्हिरादिकः प्रयोगक्रम इत्यर्थः ॥१५-१६॥

---

१. '०ोद्गूहयति' इति मद्र सं०।

२. '०गारकल्पनापक्षे' इति क-कोशे।

अत्राऽयं प्रयोगक्रमः—उक्तक्रमेण पिङ्क्त्योपसादनाऽग्निहोत्र-वपन-स्नानाऽभ्यञ्जनाऽञ्जन-पवनमन्त्राचमन-प्रोक्षण-प्राणायाम-श्रद्धाह्वानाऽकूत्यावेदनोपव्याहरणर्त्विग्वरणाऽनन्तरमध्वर्युर्यज्ञोपवीत्याचम्य, गार्हपत्यस्योत्तरतः प्राङ्मुख उपविश्य, प्राणानायम्येडा देवहूरिति यजुर्जपित्वा देवा गातुविदं इति जपेत्। ततो विष्णुं ध्यात्वा, विहरणपक्षेऽन्वाहार्यपचनं स्वयोनित उत्पाद्य, गार्हपत्यादाहवनीयं प्रणीय, ततः सभ्यावसथ्यौ प्रणयेत्। जघनेन गार्हपत्यं स्वस्तिकासनेनोपविश्यासादितानि तीर्थप्रपन्नान्यन्यानि काष्ठानि कमण्डलुजलैः प्रोक्ष्य, ममाऽग्ने० मम देवा० मयि देवा० इति प्रत्यृचमेकैकं काष्ठं गार्हपत्येऽन्वाधायाऽन्वाहार्यस्य पश्चात् उत्कटिकासनस्थः मह्यं यजन्तु०, देवीः षडुर्वीः०, अग्निर्मन्युं० इति प्रत्यृचमेकैकं काष्ठमत्राऽप्यन्वाधाय, यथेतमेत्योत्तरेणाऽऽहवनीयं प्रह्वस्तिष्ठन्—धाता धातॄणां०, उरुव्यचा नो०, ये नः सपत्ना० इति प्रत्यृचमेकैकं काष्ठमन्वाधायात्रैव तिष्ठन्—अर्वाञ्चमिन्द्र इति जपेत्।

अध्वर्युर्यजमानपत्न्यः अग्न्यगारं परिसमुह्य पर्युक्ष्यायतनानि शकृदोपलिप्य पुष्पाक्षतैरलङ्कुर्वन्ति। यजमानोऽग्रेणाऽऽहवनीयं परीत्य दक्षिणत उदङ्मुख उपविश्य, पवित्रपाणिः 'पयस्वतीः संसृज' इति अप आचम्य, स्मार्ताचमनं कृत्वा, अग्ने व्रतपते···राध्यतां स्वाहा, वायो०, आदित्य, व्रतानां० राध्यातां स्वाहा एताभिः सस्वाहाकाराभिरस्वाहाकाराभिर्वा प्रत्यृचमेकैकां समिधमादधाति। अमावास्या चेत्सन्नयतो यजमानस्याऽध्वर्युरसिदमादाय वेद्युत्करयोरन्तरेणोपनिष्क्रम्य, वाचंयमः प्राचीमुदीचीं वा प्रागुदीचीं वा दिशं गत्वा, बहुपर्णादिगुणविशिष्टां शाखामाच्छिनत्ति इषे त्वोर्जे त्वा इति। अप उपस्पृश्य,तया षडवमान्वत्सान्मातृभ्यः पृथक्करोति, वायव स्थोपायव स्थ इति। प्रतिवत्सं मन्त्रावृत्तिः। यजमानो ब्राह्मणं भोजयित्वा, सर्पिर्दधिमिश्रं हविष्यमश्नीयात्। उच्छिष्टञ्च पत्नीभ्यो दद्यात्। अध्वर्युर्गाः प्रस्थापयति देवो वः सविता प्रा० वृणक्तु इति। ध्रुवा० बह्वीः इति यजमानमीक्षते। प्रोषिते यजमाने एतं मन्त्रमुक्त्वा तं ध्यायेत्। अग्रेणाऽऽहवनीयं शाखामाहृत्याऽग्न्यगारस्योत्तरार्धे उद्गूहति यजमानस्य पशून्पाहि इति। सान्नाय्याऽभावे, पौर्णमास्याञ्च बर्हिराहरणकाले प्रत्याशनम्॥ इति प्रथमे प्रश्ने प्रथमोऽध्यायः॥

॥ इति प्रथमोऽध्यायः समाप्तः॥

—:०:—

# द्वितीयोऽध्यायः

अथ जघनेन गार्हपत्यं तिष्ठन्नसिदं वाश्वपर्शुं वादत्ते—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे (तै० ब्रा० ३।२।२।१) इति ॥१॥ आदायाभिमन्त्रयते—यज्ञस्य घोषदसि (तै० सं० १।१।२।१) इति ॥२॥ गार्हपत्ये प्रतितपति—प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः (तै० सं० १।१।२।१) इति त्रिः ॥३॥ अथाहवनीयमभिप्रैति—प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा। त आवहन्ति कवयः पुरस्ताद् देवेभ्यो जुष्टम् (तै० सं० १।१।२।१) इति ॥४॥ इह बर्हिरासदे (तै० सं० १।१।२।१) इति वेदिं प्रत्यवेक्षते ॥५॥ अथ तां दिशमेति यत्र बर्हिर्वेत्स्यन् मन्यते ॥६॥ दर्भस्तम्बं परिगृह्णाति यावन्तमलं प्रस्तराय मन्यते—देवानां परिषूतमसि (तै० सं० १।१।२।१) इति ॥७॥ अथैनमूर्ध्वमुन्मार्ष्टि—वर्षवृद्धमसि (तै० सं० १।१।२।१) इति ॥८॥ असिदेनोपयच्छति—देवबर्हिर्मा त्वान्वङ् मा तिर्यक् पर्व ते राध्यासम् (तै० सं० १।१।२।१) इति ॥९॥ आच्छिनत्ति—आच्छेत्ता ते मा रिषम् (तै० सं० १।१।२।१) इति ॥१०॥ आच्छेदनान्यभिमृशति—देवबर्हिः शतवल्शं विरोह (तै० सं० १।१।२।१) इति ॥११॥ सहस्रवल्शा वि वय रुहेम (तै० सं० १।१।२।२) इत्यात्मानं प्रत्यभिमृशते ॥१२॥ सर्वश एवैनं स्तम्बं लुनोति ॥१३॥ कृत्वा प्रस्तरं निदधाति—पृथिव्याः संपृचः पाहि (तै० सं० १।१।२।२) इति ॥१४॥

भव०—अथेति शाखानिधानानन्तर्यार्थः संनयतः। असंनयतो व्रतानन्तर्यार्थः। असिदं वाश्वपर्शुं वेति शब्दौ समानविकल्पार्थौ पमान[1] व्रीहि पशुरिति स्वशाखानाम्नानाच्च असिदस्य समानधर्मत्वं न स्यादिति तन्निवृत्त्यर्थम्। एतदेव ज्ञापयति शाखान्तरोक्तविधिसंग्रहोऽस्तीति॥१॥ परिग्रहो दर्भस्तम्बस्य असिदासिना परिलेखनम्। त्रिः कर्म (बौ० श्रौ० २०।२) इति दर्शनात्, मनसा परिग्रहोऽप्येवं न स्यादिह सकृदेव मन्त्रः कर्म च। यावन्तमिति प्रस्तरविकल्पार्थम् ॥७॥ छेदनादिषूपस्पर्शनं धर्मशास्त्रादिति केचित्।

१. '०माम व्रीहि पशु०' इति यथाकोशं पाठः ?

अन्ये तु निरसनादिषु विधानादन्यत्रानियम इति। अपरे क्वचिद्विधानं वैदिकप्रायश्चित्तार्थम्, उपस्पर्शनं तु नित्यमेवेति। अपरे यत्र विधानं तत्र नित्यमेवेति। एतस्मादेव लिङ्गादन्यत्र विकल्प इति ज्ञापकं च। वास्तुहोमे आत्मानं प्रत्यभिमृश्याथोदकं स्पृशेदिति। आचार्यदर्शनमिति ब्रुवन् शालीकेर्नास्तीति वचनमाच्छेदनाभिमर्शनं सकृदाच्छिन्नमिति केचित्। अनन्तरं सर्वंश एवैनं स्तम्बमिति वचनाद् अन्ये सवस्तम्बं छित्वेति। आशासनस्याविशेषात् लुनोतिः स्वादिषु द्रष्टव्यः। कृत्वेत्यसन्देहार्थम्। वध्वेत्यर्थः, करोतेरनेकार्थत्वात्॥११-१४॥

सा०—अथ जघनेन गार्हपत्यं तिष्ठन्नसिदं वाऽश्वपर्शुं वाऽऽदत्ते–'देवस्य त्वा··· हस्ताभ्यामाददे' इति। अथेति सन्नयतः शाखानिधानाऽऽनन्तर्यार्थः,असन्नयतो व्रताऽऽनन्तर्यार्थः। असिदः लवनसाधनं दात्रम्। अश्वपर्शुम् अश्वस्य पार्श्वास्थि यद्वङ्क्रिरिति प्रसिद्धम्, इध्माबर्हिषोरुपकल्पनार्थमादत्ते। अत्र काल-विकल्पो द्वैधे दर्शितः—इध्माबर्हिषोरुपकल्पन इति। सूत्रमाचार्ययोः। अपराह्णे पितृभ्यो दत्वेध्माबर्हिः सन्नह्येदित्याञ्जीगविः। श्वो भूते हविष्कृदन्ते इत्यौपमन्यवः (बौ० श्रौ० २०१२) इति। पूर्वकल्पोक्त एव काल इति बोधायनस्य शालीकेश्च मतम्। पितृभ्यो दत्वेति पिण्डपितृयज्ञानन्तरमित्यर्थः। हविष्कृदिति हविष्कृदेहि (बौ० श्रौ० १।५।१२) इति प्रैषमुपलक्षयति, तदनन्तरं वा इत्यर्थः॥१॥ आदायाभिमन्त्रते—'यज्ञस्य घोषदसि' इति। अभिमन्त्रणं आभिमुख्येनेक्षणम्। स्पृष्ट्वा जप इत्यन्ये। तत्र गार्हपत्यमभिमन्त्रयत इत्यादौ कथमग्निस्पर्शनं स्यादिति चिन्त्यम्। अभिमर्शनाऽभिमन्त्रणयोश्च को विशेषः स्यात्, अतोऽभिमन्त्रणमवेक्ष्य जपः। अभिमर्शनं स्पृष्ट्वा जपः। अनुमन्त्रणं स्मृत्वा जप इति विवेक्तव्यम्॥२॥ गार्हपत्ये प्रतितपति—'प्रत्युष्टं··· अरातयः' इति त्रिः। अविशेषविधानादुभयोरपि प्रतितापोऽवगन्तव्यः। द्वैधे विशेषः—असिदस्य प्रतितपन इति। स ह स्माऽऽह बोधायनः प्रतितपेदेवाऽसिदमेवमश्वपर्शुं रक्षांपहननायेति। अत्रो ह स्माऽऽह शालीकिर्नं तेजसि तेजः प्रतितपेदश्वपर्श्वां खल्वेते मन्त्रा दृष्टा भवन्ति इति। सोऽश्वपर्शुमेव प्रतितपेन्नासिदं क्रूरापहननायेति (बौ० श्रौ० २०१२)। असिदपक्षेऽपि पर्शुप्रतिपादकोऽपि मन्त्रो लिङ्गाऽविवक्षया योजनीयः। तद्यथा—अथाऽऽहवनीयमभिप्रैति—'प्रेयमगाद्धिषणा···जुष्टाम्' इति। धिषणात्व-मनुनाकृतत्वादयो ह्यसिदेऽपि समानाः। स्वशाखानाम्नातोऽप्यसिदः तदाम्नाततया पर्श्वा समतुल्य उपात्तः। तस्यैतत्प्रयोजनम् अन्यत्राप्येतच्छाखाऽनाम्नातः शाखान्तरमूलतया संगृहीतः समतुलित एवेति ज्ञापनम्॥४॥ 'इह बर्हिरासदे' इति वेदिं प्रत्यवेक्षते। आहवनीयसन्निधौ स्थित्वा दक्षिणतः परिवृत्य वेदिमवलोकयेत्॥५॥ अथ तां दिशमेति यत्र बर्हिर्वेत्स्यन्मन्यते। अथशब्दार्थो द्वैधे स्पष्टीकृतः—प्रक्रमेष्विति। स ह स्माऽऽह बोधायनः, आहवनीयादेवाग्रे त्रीन्वा चतुरो वा प्राचः प्रक्रमान् प्रक्रम्याऽथ तां दिशमभिप्रव्रजेद्यत्र बर्हिर्वेत्स्यन्मन्येत इति। आहवनीयादेव यथार्थं गच्छेन्नतु दक्षिणया द्वारेति शालीकिः (बौ० श्रौ० २०१२) प्रक्रमेषु कृतेषु यस्यां दिशि बर्हिर्लाभो निश्चितः तां दिशमनियमेन गच्छेत्। अनेन दक्षिणया

द्वाराऽपि गमनमनुमतं बोधायनस्येत्यर्थः। शालीकिपक्षे तु आहवनीयात्पुरस्तात्प्रक्रमा अपि नाङ्गीकृताः, दक्षिणया द्वाराऽनुगमनमङ्गीकृतमित्यर्थः ॥६॥ दर्भस्तम्बं परिगृह्णाति, यावन्तमलं प्रस्तराय मन्यते—'देवानां परिषूतमसि' इति। एक मूलप्रभवो दर्भसमूहः स्तम्बः। तमसिदेन वा हस्तेन वा मनसा वा परिगृह्णाति प्रस्तरायैतावत्परिमाणं छिनद्मीति, यावन्नुपरिमाणः स्तम्बः प्रस्तरपर्याप्त इति मन्यते। ते च परिमाणविकल्पाः कर्मान्ते दर्शिताः—सन्नखमात्रो ग्रहीतव्य इत्येकेषाम्। विशारुको ग्रहीतव्य इत्येकेषाम्। 'स्रुवदण्डमात्रो ग्रहीतव्य इत्येकेषाम्। 'स्रुग्दण्डमात्रो ग्रहीतव्य इत्येकेषाम्। उर्वस्थिमात्रो ग्रहीतव्य इत्येकेषाम्। अङ्गुष्ठपरुषा सम्मितो ग्रहीतव्य इत्येकेषाम्। अपरिमितो ग्रहीतव्य इत्येकेषाम् (बौ० श्रौ० २४।२५।१-७) इति। सन्नखमात्रः, सङ्गताङ्गुल्यङ्गुष्ठनखमात्रः। अङ्गुष्ठाङ्गुलिनखयोः सङ्गत्या यावत्परिमण्डलं भवति तावत्परिमाणो दर्भस्तम्बः सन्नखमात्रः। विशारुकः विशरणदेशः छेदनप्रदेशः मूलमित्यर्थः। स्रुक्स्रुवदण्डयोः स्थौल्याऽविशेषेऽपि आचार्यभेदोदाहरणाय द्वयोरुपादानम्। ऊरोरस्थि, उर्वस्थि, छान्दसो ह्रस्वः। अङ्गुष्ठस्य परुः पर्व परुषा सम्मितः, अङ्गुष्ठपर्वपरिमाण इत्यर्थः। अपरिमितग्रहणपक्षो यावन्तमलं प्रस्तराय मन्यते इत्यनेन समानार्थः। दैर्घ्यपरिमाणन्तु स्रुगायामसम्मितम्। ततः प्रादेशाऽरत्निबाहूनामायामोऽन्यतमः स्रुचामिति वचनात्[3] तदानुगुण्येन तद्दैर्घ्यविकल्पः। अत्र परिग्रहे द्वैधे विशेषः—परिषवण इति। स ह स्माऽऽह बोधायनस्त्रिरेव मन्त्रं ब्रूयात् त्रिः कर्माऽऽवर्तयेत्। एवं यूपावटस्य परिलेखने एवं सोमक्रयण्यै पदे एवम् औदम्बर्या अवटे एवमुपरवेष्विति। सकृदेव मन्त्रं ब्रूयात् त्रिः कर्माऽऽवर्तयेदिति शालीकिः(बौ०श्रौ०२०।२)इति। अत्र परिषवणम् असिदेन परिलेखनं,मनसा चेत्परिग्रहमात्रम्। अत एव नाऽत्र मन्त्रकर्मणोरावृत्तिः ॥७॥ अथैनमूर्ध्वमुन्मार्ष्टि—'वर्षवृद्धमसि' इति। उन्मार्ष्टि ऊर्ध्वं मार्ष्टि, पुनरूर्ध्वग्रहणात् मूलादारभ्याग्रं मार्जनं द्योतयति। असिदेनेति सामर्थ्यादवगम्यते ॥८॥ असिदेनोपयच्छति—'देवबर्हिर्मा······राध्यासम्' इति। पर्वसूपयच्छति अधिनिदधाति ॥९॥ आच्छिनत्ति–'आच्छेत्ता ते मारिषम्' इति। छित्वाऽप उपस्पृशेत्। धर्मे तथा प्रतिपादितमित्युदाहृतमस्माभिः तुषनिरसनादिषूपस्पर्शनविधानात् (द्र० पृ० १३)। अन्यत्र विकल्प इति केचित्। अन्ये तु धर्मशास्त्रात्सामान्यतः सिद्धे निरसनादिषूपस्पर्शनस्य पुनर्विधानं तद्भ्रेषे वैदिकप्रायश्चित्तविधानार्थमेव, न त्वन्यत्र विकल्पार्थमित्याहुः ॥१०॥ आच्छेदनान्यभिमृशति—'देवबर्हिः···रोह' इति। आच्छिद्यते बर्हिरित्याच्छेदनानि, आच्छिन्ना मूलप्रदेशा इत्यर्थः ॥११॥ 'सहस्रव······रुहेम' इत्यात्मानं प्रत्यभिमृशते। अत्राऽऽत्मा शरीरमुच्यते, तत्राप्युरः। अन्यत्र उरः प्रत्यात्मानं प्रत्यभिमृशति (बौ० गृ० १।२।२५) इति दर्शनात्। अत्र द्वैधे विशेषः–आच्छेदनेष्विति। सूत्रं बोधायनस्य। प्रत्यगाशीः खल्वेष मन्त्रो दृष्टो भवति। मन्त्रप्रत्यभिमर्शनमेवैतत्स्यादिति शालीकिः (बौ० श्रौ० २०।२)।

---

१. 'स्रुग्दण्ड०' इति कै० सं०। २. 'स्रुवदण्ड०' इति कै० सं०।

३. गोपालकारिकायामिति शेषः।

यत एष मन्त्रः प्रत्यगाशीर्दृष्ट आत्माऽऽशीर्वचनतया दृष्टः, अत आच्छेदनेषु कृतेषु आत्माभिमर्शने विनियुक्तोऽयं मन्त्र इति बोधायनः, आच्छेदनानामेवाऽनेन मन्त्रेण प्रत्यभिमर्शनमिति शालीकिः॥१२॥ सर्वश एवैनं स्तम्बं लुनोति। यः परिगृहीतः स्तम्बस्तं निरवशेषं छिनत्ति। तदेतदमन्त्रकं द्वितीयं लवनमुक्तं, सकृदाच्छिन्नस्य पित्र्यत्वात्। द्वितीयलवनाऽनन्तरमात्माभिमर्शनमुदकस्पर्शनमिति केचित्। अन्ये तूदकस्पर्शनं प्रतिनिमित्तमावर्तत इत्याहुः॥१३॥ कृत्वा प्रस्तरं निदधाति—'पृथिव्याः सम्पृचः पाहि' इति। प्रस्तरं कृत्वेति दर्भमुष्ट्यन्तरवैलक्षण्येन कृत्वेत्यर्थः॥१४॥

तूष्णीमत ऊर्ध्वमयुजो मुष्टीन् लुनोति॥१५॥ त्रीन्वा पञ्च वा सप्त वा नव वैकादश वा यावतो वालं मन्यते॥१६॥ अथ त्रिरन्वाहितं शुल्बं कृत्वापसलैरावेष्टयति—अदित्यै रास्नासि (तै०सं० १।१।२।२)इति॥१७॥ तदुदीचीनाग्रं निधाय॥१८॥ तस्मिन् प्रस्तरमभिसंभरति—सुसंभृता त्वा संभरामि (तै०सं० १।१।२।२) इति॥१९॥ संनह्यति—इन्द्राण्यै संनहनम् (तै० सं० १।१।२।२) इति॥२०॥ ग्रन्थिं करोति—पूषा ते ग्रन्थिं ग्रथ्नातु (तै०सं० १।१।२।२) इति॥२१॥ स ते माऽऽस्थात् (तै० सं० १।१।२।२) इति पश्चात्प्राञ्चमुपगूहति॥२२॥ अथैनदुद्यच्छते—इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे (तै० सं० १।१।२।२) इति॥२३॥ शीर्षन्नधिनिधत्ते—बृहस्पतेर्मूर्ध्ना हरामि (१।१।२।२) इति॥२४॥ ऐति—उर्वन्तरिक्षमन्विहि (तै० सं० १।१।२।२) इति॥२५॥ एत्योत्तरेण गार्हपत्यमनधः सादयति—देवं गममसि (तै० सं० १।१।२।२) इति॥२६॥ तदुपरीव निदधाति यत्र गुप्तं मन्यते॥२७॥ तूष्णीं परिभोजनीयानि लुनोति॥२८॥ सकृदाच्छिन्नं पितृभ्य आच्छिनत्ति॥२९॥

भव०—तूष्णीं शब्दस्य वागिन्द्रियव्यापारनिवृत्तिविषयत्वात् मन्त्रमात्रं निवर्तते। परिग्रहाद्यावृतः सर्वाः परिगृह्यन्ते, अयं चाभिप्रायः, आधाने तूष्णीमग्निहोत्रे सर्वावृत् वचनात्। अन्ये तूष्णींग्रहणादावृतोऽपि निवृत्तिमिच्छन्ति। अत्र न शब्दार्थो न च लिङ्गं दृश्यते। अयुज इत्येतस्य विशेषणं त्रीन्वेत्यादि। अत ऊर्ध्वमिति। अत ऊर्ध्वं प्रस्तरनिवृत्त्यर्थम्॥१५॥ सर्वत्र वा वचनम् पूर्वपूर्वापर्याप्तौ उत्तरोत्तरपरिग्रहार्थम्। यावतो वेत्येषामन्यतरपरिग्रहे वाशब्दः समर्थितः स्यात्। तस्मात् स्तरितव्यवशादेतैरपर्याप्तत्वे उपर्युपरि संग्रहार्थम्॥१६॥ पूर्वं प्रदक्षिणं कृत्वा पश्चादपसव्यं मन्त्रेण आवेष्टयति। अन्ये मन्त्रो निधानार्थमिति, तन्न सम्यक्,

तच्छब्देन व्यवायात् । अदित्यै रास्नासीत्युदीचीनाग्रे निधाय इत्येवं सिद्धयति ॥१७-१८॥ तस्मिन्निति शुल्बस्याधिकरणनिर्देशात् प्रस्तरं पूर्वं सम्भरतीति गम्यते। पाठक्रमाच्च संग्रहणात् । समश्चैकीभावार्थात् क्रमाच्चोपरि मुष्टिरिति गम्यते। मन्त्रविपर्यासः पाठक्रमादर्थक्रमबलीयस्त्वाद् अग्निहोत्रदोहनहोमवत् ॥१९॥ तूष्णीं परिभोजनीयानीति यद्यपीहोक्तं तथापि लवनकाल एव द्रष्टव्यम्, न पुनर्निधाय गत्वा। पुनस्तूष्णींग्रहणस्य प्रयोजनम्—पूर्वेषां याजुषपक्षेऽप्यावृत्तिनं निवर्तते ॥२८॥

सा०—तूष्णीमत ऊर्ध्वमयुजो मुष्टीन्लुनोति । ओङ्कारश्छान्दसः । त्रीन्वा पञ्च वा सप्त वा नव वैकादश वा यावतो वाऽलं मन्यते । तूष्णीमिति मन्त्रोच्चारणमात्रं निवर्तयति, न तु परिग्रहादिक्रियाविशेषम् । अत ऊर्ध्वं प्रस्तरादनन्तरम्, अयुजः अयुग्मान् । एतस्यैवोपव्याख्यानं त्रीन्वेत्यादि । अत्राऽयुक्सङ्ख्याविकल्पा वेदिविस्तरापेक्षया व्यवस्थिताः, अनतिदृश्नं स्तृणाति (तै० सं० २।३।५।२) इति दर्शनात्। अत एवोक्तं यावतो वाऽलं मन्यत इति । यत्र तु एकविधं त्रिविधं पञ्चविधमित्यादिको वाचनिकः सङ्ख्यानियमः, तत्र अनतिदृश्नं स्तृणाति इत्येतदपोदितं द्रष्टव्यम् । अन्ये त्वत्र तूष्णींग्रहणान्मन्त्रनिवृत्तिवत्परिग्रहादिक्रियानिवृत्तिमपीच्छन्ति । तदनुपपन्नम्, आधाने तूष्णीमग्निहोत्रेऽपि क्रियानिवृत्तिप्रसङ्गात् ॥ द्वैधे तु विशेषः—प्रस्तरस्य सन्नहन इति । स ह स्माऽऽह बोधायनोऽभ्यर्धाच्चैनं सन्नह्येदन्यत्र चैतस्मादयुग्माऽयुग्मं निधनानि कुर्यादिति । अत्रो ह स्माऽऽह शालीकिः प्रस्तरस्य खलु मन्त्रप्रतिलाभात्सर्वं बर्हिर्मन्त्रं लभते । न चैनमभ्यर्धात्सन्नह्येदेतच्चैवाऽयुग्मतमं स्यादिति (बौ० श्रौ० २०।१२) । प्रस्तरस्य सन्नहने विषय एवं बोधायन आह स्म एनं प्रस्तरमभ्यर्धाच्चार्धादुपरि च सन्नह्येद् अर्धं सन्नह्य, उपर्यर्धमपि सह सन्नह्येत् । तदेतदयुग्माऽयुग्मं भवति इत्याशयः । एतद्वैलक्षण्यं मुष्ट्यन्तरेषु दर्शयति—अन्यत्र चैतस्मादयुग्मायुग्मं निधनानि कुर्यादिति । एतस्मात्प्रस्तरादन्यत्र मुष्टिषु युग्माऽयुग्मं न भवतीत्ययुग्मायुग्मं निधनानि कृत्वा प्रस्तरवैलक्षण्येनैकध्यं प्रतिमुष्ट्याबध्नातीति निधनानि कुर्यात् । शालीकिस्त्वेवमाह—प्रस्तरवत्सर्वमुष्टिष्वपि मन्त्राऽऽवृत्तिः । एनं प्रस्तरं चार्धादुपरि सन्नह्येत् । तत्र हेतुमाह—एतच्चैवाऽयुग्मतमं स्यादिति । एतत्साधारणं प्रस्तरसन्नहनमेव अयुग्मतमं युग्मतमञ्च स्यादिति । अयञ्च पक्षो ब्राह्मणेऽप्यनुमतः—अयुङ्गायुङ्गान्मुष्टीन्लुनोति (तै० ब्रा० ३।२।२।६) इति ॥१५-१६॥ अथ त्रिरन्वाहितं शुल्बं कृत्वाऽपसलैरावेष्टयति—'अदित्यै रास्नाऽसि' इति । त्रिसन्धिभिः सन्धिमेकसरं प्रदक्षिणं शुल्बं कृत्वा द्विगुणीकृत्य, अप्रदक्षिणमावेष्टयति । अत्र सन्धित्रयाभिधानात् सन्धिमतां चतुष्टयं, त्रयाणां वा सन्ध्यभिधानात् सन्धिमतां त्रित्वमिति । तथा च द्वैधे—शुल्बस्य करण इति । अधिकरणं चतुर्थं स्यादिति बोधायनः । अधिकरणमेव तृतीयमिति शालीकिः (बौ० श्रौ० २०।१२) इति । अत्र 'अदित्यै रास्नासि' इत्ययं मन्त्रः शुल्बनिधानेनोत्तरवाक्येन वाऽन्वेति । एवञ्चाऽऽवेष्टनस्याऽऽस्तरणस्य वा तूष्णीं क्रिया । तदेतत्पक्षद्वयमप्याचार्यस्याऽनु-

मतम्। तथा च कर्मान्ते—स्थानाद्वा स्थानं [1]प्रतिहासीत (बौ० श्रौ० २४।५।७)। अस्य विवरणं—स्थानाद्वा स्थानमिति यदवोचाम योऽनन्तरो मन्त्र आम्नातः स्यात्तेनैनं सह कल्पयेत्। पूर्वकालेन वोत्तरकालेन वेति (बौ०श्रौ० २४।५।८,९)। स्वयमाम्नातस्थानात्तस्य विनियोगस्थानं प्रत्यासत्त्या प्रहातुमिच्छेत्। प्रत्यासत्तिः सन्निकर्षः कर्ममन्त्रयोः। स चैकस्यैकेन चेन्न सन्देहः। यदि त्वाचार्येण कर्मद्वयमध्ये मन्त्र एक आम्नातः, तस्य पूर्वोत्तराभ्यां कर्मभ्यां वैकल्पिकः सम्बन्धः। तत्रान्यतरत्कर्माऽमन्त्रकं भवतीत्यर्थः। तत्प्रत्यासन्नमन्त्राऽन्तराऽभावादित्याशयः॥१७॥ तदुदीचीनाग्रं निधाय। तत्समन्त्रकममन्त्रकं वा शुल्बमुदीचीनाग्रं निधाय॥१८॥ तस्मिन्प्रस्तरमभिसंभरति - 'सुसम्भृता त्वा सम्भरामि' इति। तस्मिन्निति शुल्बस्य प्रस्तराऽधिकरणत्वं द्योतयति। तेन च पूर्वं प्रस्तरं सम्भृत्य पश्चान्मुष्टचन्तरसम्भरणमिति गम्यते। अयं चार्थो द्वैधे विकल्पितः—बर्हिषः सम्भरण इति। स ह स्माऽऽह बोधायनो यान्यन्यानि याजुषान्निधनानि तानि पूर्वाणि मन्त्रेण सम्भृत्याऽथोपरिष्टाद्याजुषं मन्त्रेणैव सम्भरेदिति। अत्रो ह स्माऽऽह शालीकिः—यान्यन्यानि याजुषान्निधनानि तानि पूर्वाणि तूष्णीं सम्भृत्याऽथोपरिष्टाद्याजुषं मन्त्रेणैव सम्भरेदिति। अत्रो ह स्माऽऽहौपमन्यवो य एवाऽऽदिर्लवने ससम्भरणे सयाजुषमेवाऽग्रे मन्त्रेण सम्भृत्य तूष्णीमितराणि सम्भृत्य विपरिकृष्य ग्रन्थिं कुर्यादिति (बौ० श्रौ० २०।१२)। बर्हिषः सम्भरणमेवंप्रकारम्। स बोधायन आह स्म याजुषात्, यजुषा लूनात्प्रस्तरात्, अन्यानि निधनानि अमन्त्रलूना मुष्टयः, तानि प्रथमं मन्त्रेण सम्भृत्य मन्त्रेण प्रस्तरस्य पश्चात्सम्भरणम्। शालीकिमते तु—प्रस्तरादन्येषां मुष्टीनां प्रथमं तूष्णीं सम्भरणम्, प्रस्तरस्यैव समन्त्रकमिति। औपमन्यवस्तु—समन्त्रकं लूनस्य प्रस्तरस्यैव प्राक्समन्त्रकं सम्भरणं पश्चात्तूष्णीमितरेषामिति॥१९॥ सन्नह्यति—'इन्द्राण्यै सन्नहनम्' इति। सन्नह्यति, आवेष्टयति॥२०॥ ग्रन्थिं करोति—'पूषा ते ग्रन्थिं ग्रथ्नातु' इति। द्वैधे विशेष उक्तः—ग्रन्थिकरण इति। सूत्रं बोधायनस्य। समायच्छन्नेव[2] मन्त्रं जपेदिति शालीकिः। ग्रन्थिकरणे मन्त्र जपेदिति बोधायनः। शालीकिस्तु ग्रन्थ्यर्थं रज्वन्तौ समायच्छन्नेव मन्त्रं जपेदित्याह॥२१॥ 'स ते माऽऽस्थाद्' इति पश्चात्प्राञ्चमुपगूहति। तदधः पश्चाद्भागेन प्राञ्च ग्रन्थिं गमयति। द्वैधे विकल्पः—पश्चात्प्राञ्चमुपगूहतीति। सूत्रं बोधायनस्य। पुरस्तात्प्रत्यञ्चमिति शालीकिः (बौ० श्रौ० २०।१३) इति। ग्रन्थ्युपगूहने पक्षद्वयमिति॥२२॥ अथैनदुद्यच्छते—'इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे' इति। एतत्सम्भूय ग्रथितं बाहुभ्यामुद्यच्छ इति मन्त्रलिङ्गादवगम्यते॥२३॥ शीर्षन्नधि निधत्ते 'बृहस्पतेर्मूर्ध्ना हरामि' इति। शीर्षन् शिरसि। एतावतैव पर्याप्ते यदधिग्रहणं करोति तेनाऽवगम्यते तृणवस्त्रादि यत्किञ्चिद् व्यवधायेति॥२४॥ ऐति—'उर्वन्तरिक्षमन्विहि' इति। ऐति आगच्छति॥२५॥ एत्योत्तरेण गार्हपत्यमनधः सादयति—'देवं गममसि' इति। तदुपरीव निदधाति यत्र गुप्तं मन्यते। एत्य तीर्थेन प्रपद्य, अनधः स्पयं वा शकलं वाऽन्तर्धाय, मन्त्रेणाऽसाद्य, तत उपरि गुप्तस्थानेऽमन्त्रकं निदध्यात्। उपरिस्थापनं समन्त्रकं, अनधः सादनं वाप्यमन्त्रकं, कर्मद्वयमध्ये मन्त्राम्नानात्।

---

१. 'प्रजिज्ञासीत' इति कै० सं०। २. 'न्नेवैतं म०' इति कै० सं०।

तथा च द्वैधे-बर्हिषो निधान इति । स ह स्माऽऽह बोधायनः स्फ्यं वा शकलं वाऽन्तर्वेदि निधाय तस्मिन्मन्त्रेण प्रतिष्ठाप्य ततो यथासुष्ठु निदध्यदिति । यत्रैव निधास्यन्स्यात्त-न्मत्रेणैव निदध्यादिति शालीकिः (बौ०श्रौ० २०।३) ॥२६-२७॥ तूष्णीं परिभोजनीयानि लुनोति । परिभोजनीयानि सर्वत्रोपभोगार्हाणि, परिस्तरणवेद-पृष्ठचास्तरण-ऋत्विगासनानां तत्सम्पाद्यत्वात् । केचित्तु वेदार्थं पृथगाच्छेदनमिच्छन्ति ॥२८॥ सकृदाच्छिन्नं पितृभ्य आच्छिनत्ति । पितृभ्य इति पिण्डपितृयज्ञमुपलक्षयति । यद्यप्येतल्लवनं प्रस्तरादिलवनकाल एव कार्यम्, तथाऽप्यत्राऽभिधानात् [1]परिभोगादिक्रियानिवृत्तिमपि द्योतयति । परिभोजनीयानीति नपुंसकलिङ्गनिर्देशेन तृणमात्रं यज्ञियमनुक्रान्तं भवति । अयज्ञियतृणानि तु प्रायश्चित्तकाण्डे (बौ० श्रौ० २८।१३) दर्शितानि । [2]शुक्रशुम्बनलवल्वजक्रृष्णतूलतृणवर्जं कुशादीनि याज्ञिकप्रसिद्धानि ग्राह्याणीति दर्शयिष्यते ॥२९॥

अथ तथैव त्रिरन्वाहितं शुल्बं कृत्वैकविꣳशतिदारुमिध्मं सनह्यति—यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् · ततस्त्वामेकविंशतिधा संभरामि सुसंभृता (तै० ब्रा० ३ ७ ४।८) इति ॥३०॥

भव०—अथ तथैव इत्यथ शब्दः पौर्णमास्यां-बर्हिर्निधानानन्तर्यार्थः । तथैवेति सिद्धे त्रिरन्वाहितग्रहणं मन्त्रनिवृत्त्यर्थम् । एकविंशति ग्रहणं नित्यत्वात सम्भरणस्य प्रकारान्तराभावाद् दारुप्रकरणार्थो वा । अनित्यापरिमितपक्षे कृतार्थत्वात् । तन्नै-मित्तिकेषु त्रींस्त्रीन्वा ननु ब्रूयाद् इत्येवमादिषु काम्यनैमित्तिकानां नित्यविकारत्वा-दूहः । अपरिमितपक्षे पदलोपः । मन्त्रनिवृत्तौ च प्रकृतिवद् भावादसामर्थ्यादूहे च दोषश्रवणात्, अपरिमितयेत्युच्यमाने प्रकारस्याभावादप्रकृतिवत् स्यात् । प्रकृतौ च उपात्तेध्मसंख्याप्रकाशनात् । अत्र च यावन्त इध्मा उपात्तास्तत्संख्या अभिधातव्या । याः पुरस्तात् प्रस्रवन्ति (तै० ब्रा० ३।७।४।१) इत्यादय आच्छेद्रका मन्त्रा यथालिङ्गं प्रणीताप्रणयनादौ द्रष्टव्याः, छन्दसा ब्राह्मणेन (बौ० श्रौ० २४।१।१) इति । अथापि मन्त्र एव (बौ०श्रौ० २४।१।३) इति च परिभाषावशेनाप्राकरणिकार्था एव परिभाषा, प्राकरणिकानां विशेषविनियोगवचनात् । प्रकरणे चाम्नानाद्विकल्पो विशेषवचनं निवृत्त्यर्थम् । यथा यत्कृष्णो रूपम् (तै० ब्रा० ३।७।४।८), त्रिवृत् पलाशे दर्भः (तै० ब्रा० ३।७।४।११) इत्येवमादीनामनभ्यास इति विशेषे प्रकरणे आम्नानं युक्तम् । प्रकरण आम्नातानामाहत्योक्तानां च नित्यत्वमितरेषां विकल्प इत्येष विशेषः ॥३०॥

सा०—अथ तथैव त्रिरन्वाहितं शुल्बं कृत्वैकविंशतिदारुमिध्मं सन्नह्यति—'यत्कृष्णो ' सुसंभृता' इति । अथ बर्हिर्निधानानन्तरं, तथैव बर्हिःसम्भरणार्थशुल्बवदेव, अनेन मन्त्रस्याऽपि प्रसक्तत्वात् त्रिरन्वाहितमिति विशेषाऽभ्यनुज्ञानस्य शेषनिषेधविषयत्वान्मन्त्रनिवृत्तिः। अत्रेध्मशब्दः समित्समुदायवाचकः, दारुशब्दोऽपि सामर्थ्यात्समित्परः । एकविंशतिर्दारूणि यस्मि-

---

१. 'परिग्रहादि०' इति क-कोशे । २. 'शुष्कशुण्ठि०' इति कै० सं० ।

न्निध्मे स एकविंशतिदारुरिध्मः, तमनेन मन्त्रेण सन्नह्यति। अत्रैकविंशतिधेति मन्त्रलिङ्गादेव सङ्ख्याविशेषे सिद्धे तत्सङ्ख्यानिर्देशस्यैतत्प्रयोजनं यत्रैकविंशतिदारुरिध्मः तत्रायं मन्त्रो यथाम्नातः। प्रकृतौ अपरिमितादिदारुपक्षे तु मन्त्रलोपः, सङ्ख्यावाचकपदलोपो वा। विकृतिषु तु यथार्थमूहो यथा स्यादिति। तथा च सूत्रं—न प्रकृतावूहो विद्यते विकृतिषु तु यथार्थमूहः (आप० श्रौ० परिभाषाप्रकरणे) इति। अत्र अविशेषेण दारुशब्दोपादानात्सर्वेषां समित्परिधीनां एकदारुसम्भवत्वं द्योतयति। तथा च वक्ष्यति—पालाशः खादिरो वेध्मः (बौ० श्रौ० २८।१३।१४) इत्यादि। अत्र द्वैधे विशेषः—परिधीनां करण इति। स ह स्माऽऽह बोधायन उरःसम्मितो मध्यमः स्यादथेतरौ बाहुमात्रौ स्यातामिति। सर्व एव बाहुमात्राः स्युरिति शालीकिः। इध्मस्य करण इति। अनुसामिधेनीध्मं कुर्यादिति बोधायनः। अपरिमितमिति शालीकिः (बौ० श्रौ० २०।३)। उरोबाह्वोर्मध्यम्, अनुसामिधेनि, सामिधेनीसङ्ख्यानुगुण्येन समित्सङ्ख्यानियमः। शालीकिपक्षे तु—समिधां सङ्ख्यानियमो नाऽस्ति। काष्ठाऽन्तरमनपेक्ष्य हविर्यावतीभिर्हुतं भवति, तावतीः समिधः परिधिभिः सह सन्नह्येदित्यर्थः। समिधाऽऽयामप्रमाणन्तु कर्मान्ते—इयतीर्भवन्तीति समिधां वदति, प्रादेशमात्रीरेवैता उक्ता भवन्ति, अनेन सम्मिताः कार्या इत्याहुः (बौ० श्रौ० २४।२५।८-१०) इति। इयतीर्भवन्तीति सामान्यशब्दत्वे प्रादेशमात्रीः। यत्र परिमाणविशेषाऽनुपादानेन समिधां विनियोगं दर्शयति, तत्र प्रादेशमात्र्य एवोक्ता भवन्ति। यत्र त्वाचार्या अनेन सम्मिताः कार्या इत्याहुः, यथोरःसम्मिता बाहुसम्मिता इत्यादि तत्र तत्परिमाणा ग्राह्या इत्यर्थः। अत्र केचित् प्रयोक्तारो द्विप्रादेशसम्मिता अपि समिधो ग्राह्या इत्याहुस्तेषां किं मूलम् इति चिन्त्यम्। भारद्वाजोदाहृतन्तु पक्षान्तरं द्विप्रादेशो बैलङ्कि रिध्म इति। बैलंकिराचार्यः। तत्कर्मान्तशेषविरुद्धम्। तच्छेषे च विशेषो दर्शितः—अरत्निमात्राः परिधयः शुष्का आर्द्रा वा सत्वक्काः। प्रादेशमात्राण्येकविंशतिरिध्मदारूणि भवन्तीति (बौ० गृ० शे० १।१।४-५)। कर्मान्ते पलाशविषये विशेषः—अथेध्मानि त्रीणि पलाशजातानि भवन्ति। श्लक्ष्णको लोमशको व्रततिरिति। लोमशकस्यैवैषा छेत्तव्या भवति। यावन्मात्रे गौनिकर्षेते[1] न तत ऊर्ध्वं छिन्द्यादपशव्याऽत ऊर्ध्वं स्यात् (बौ० श्रौ० २४।२३।५-८)। पलाशजातित्रैविध्यादिध्मत्रैविध्यम्। तत्राऽपि लोमशको मुख्यः। एषा समिद् गोसम्मितादेशादूर्ध्वं न छिन्द्यादित्यर्थः। श्लक्ष्णकः, अलोमशत्वात्स्निग्धतरः। वल्लीरूपः पलाशो व्रततिः। उपलक्षणञ्चैतत्। प्रायश्चित्तकाण्डे यज्ञियवृक्षमात्राऽभ्यनुज्ञानात्। पालाशः खादिरो वेध्मः। तयोरलाभे याज्ञिकानां वा वृक्षाणामन्यतमस्तेषामनाभेऽररु-कपित्थ-कोविदार-शाल्मलि-श्लेष्मातक-नीप-निम्ब-तिलक-बाधक-बिभीतक-राजवृक्ष-करञ्ज-पलाण्डुवर्जम्। सर्ववनस्पतीनामिध्मो भवतीत्येके (बौ० श्रौ० २८।१३।१४-१६)। अत्र समिधः परिधयश्च सत्वक्का असुषिरा अक्रिमिदष्टा अवह्निदूषिता आर्द्रशुष्कमिश्रणरहिता ग्राह्याः। अत्रेध्मप्रव्रश्चनानां सङ्ग्रहणं बर्हिषामिव निधानान्तं कर्मेति याज्ञिकोपदेशः ॥३०॥

---

१. '०कर्षेत' इति कै० सं०।

वेदं करोति वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृतं तेजस्कामस्योर्ध्वाग्रं स्वर्गकामस्य ॥३१॥ वेदिं करोति प्रागुत्तरात्परिग्राहात् ॥३२॥ अथापराह्णे पिण्डपितृयज्ञेन चरति ॥३३॥

भव०—वेदार्थो मुष्टिः बर्हिर्लवनकाल एव ग्रहीतव्यः परिभोजनीयेभ्यो वा। वत्सज्ञुं शयितवत्सजानुसदृशम्। मूतकार्यं[1] मूले बद्ध्वा त्रिशिरस्वत् त्रिवृद् ऊर्ध्वाग्रं मूले बद्ध्वा छिन्नम् कल्पान्तरस्यानुपादानादित एव नित्यार्थेऽपि नित्य एव काम्या-[दि]ष्विति खादिरादिष्विति वा। आचार्याभिप्रायश्च द्वैधे,एतेषामेवाचार्यभेदेनाकामसम्बन्धेन वचनात् ॥३१॥ वेदिकरणम् **अथ वेदमादत्त** (बौ० श्रौ० १।१०।१५) इत्यारभ्य **ब्रह्मन्नुत्तरम्** (बौ० श्रौ० १।११।२६) इत्येतस्मात् प्राक्। पुनर्हविरभिवासनोत्तरकालं समाम्नातानामामावास्येन पौर्णमासेन वेति विपर्यासेन समाम्नातम्। पूर्वोक्तस्य पूर्वं वेदिकरणम् इतरदितरस्य यथा स्यादिति ॥३२॥ अनन्तरं पिण्डपितृयज्ञाम्नानात्। पुनरपि दोहोपक्रमादितरत्र चौपधानन्तरं समाम्नानात्, शाखान्तरे चामावास्यायां **पूर्वेद्युर्वेदिं करोतीति**। शाखान्तरे चामावास्या[या]मपराह्णे (तु०—का० श्रौ० ४।१।१) इति वचनाद्वाक्यशेषे **सोऽमावास्यां प्रत्यागच्छत्** (तै० ब्रा० १।२।१०।१) इति चामावास्या[या]मपराह्णे इति गम्यते ॥३३॥

**॥ इति द्वितीयोऽध्यायः समाप्तः ॥**

—:o:—

सा०—वेदं करोति वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृतं तेजस्कामस्योर्ध्वाग्रं स्वर्गकामस्येति। शयितवत्सजानुसदृशो वेदो वत्सज्ञुः। धान्यनिधानार्थस्तृणपुञ्जसंनिवेशविशेषो मूतः, तद्वत्कार्यो मूतकार्यः। त्रिवृतं, त्रिगुणशिरसं त्रिशिरसं वा 'त्रिशाखो गदितस्तु वेद' इति वचनात्। ऊर्ध्वाग्रः मूले बद्ध्वा छिन्नः। वेदस्य करण इति। वत्सज्ञुं कुर्यादिति बोधायनः। मूतकार्यमिति शालीकिः। त्रिवृतमित्यौपमन्यवः। ऊर्ध्वाग्रमित्यौपमन्यवीपुत्रः (बौ० श्रौ० २०।३) इति। अन्नाद्यम् अन्नादिकं, भोजनशक्तिर्वा। सर्वत्र कामनाश्रवणेऽप्यकामनापक्षाऽश्रवणात्प्रकारचतुष्टयस्याऽपि नित्यत्वम्। द्वैधे कामनाश्रवणाच्च। सर्वत्र बन्धनशुल्बादुपरि प्रादेशमात्रमवशिष्य छिन्द्यात्। छिन्नानि चाऽग्राणि वेदपरिवासनानि भवन्ति ॥३१॥ वेदिं करोति, प्रागुत्तरात्परिग्राहात्कृत्वेति[2]। अत्र वेदिं करोतीति समान्यशब्देन सर्वमपि वेदिकरणं प्राप्तम्। तस्याऽवयुत्याऽनुवादः प्रागुत्तरात्परिग्राहात्कृत्वेति[2]। उत्तरत्राप्येतत्समन्त्रकं पुनराम्नायते। एवं सति दर्शपूर्णमासयोरौपवसथ्ययजनीयाऽहर्द्वयेऽप्यस्याऽवृत्ति-

१. धान्यनिधानार्थस्तृणनिर्मितो भाजनविशेषो मूतः।
२. 'कृत्वा' इति कै० सं० नास्ति।

रिति प्रतीयते। यदि मन्येत कृतस्य करणाऽभाव इति स्यादप्येवं, पौर्णमास्यामप्यौपवसथीयेऽहनि प्रागुत्तरात्परिग्राहात्कर्तव्यं स्यादविशेषविधानादितीमामाशङ्कामपाकुर्वन्नेवाऽऽह—प्रागुत्तरात्परिग्राहात्कृत्वा ॥३२॥ अथाऽपराह्णे पिण्डपितृयज्ञेन चरति। अत्र कृत्वा श्रुत्यैवाऽऽनन्तर्ये सिद्धेऽपि, नियताऽऽनन्तर्यद्योतनाय पुनरथशब्दः प्रयुक्त इति। तदयमर्थः—यत्रौपवसथीयेऽहनि प्रागुत्तरात्परिग्राहात्कर्म करोति, तदव्यवहित एवाऽपराह्णे पिण्डपितृयज्ञ इति। न पौर्णमास्यां तत्प्रसङ्गः। अभियुक्तास्त्वाऽऽमावास्येन वा पौर्णमासेन वा (बौ० श्रौ० १।१।१) इति पाठक्रमानुरोधेन पूर्वोपदिष्टयोर्वेदिकरणयोर्व्यवस्थितोऽन्वय इत्याहुः। एतेनैतदपि प्रयुक्तं मन्ये अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति, तदहः पिण्डपितृयज्ञं [1]कुरुते (आप० श्रौ० १।१।६८) इत्यस्य सूत्रस्य चन्द्राऽदर्शनोपलक्षितमेवाहः पिण्डपितृयज्ञस्य नियतः कालः, न तु दृष्टचन्द्रा सिनीवालीत्यर्थं मन्यमानैश्चतुर्दशीमिश्रणेन पूर्वेद्युश्चन्द्रदर्शने सत्युत्तरेद्युः पूर्वाह्णे पर्वसन्धौ तदपराह्ण एव प्रयोग इति। एवञ्च सौत्रममावास्याग्रहणमतन्त्रं स्यात्। दिनद्वये चन्द्राऽदर्शने प्रतिपदपराह्णनिवृत्तिपरमिति चेत्, अमावास्यायामपराह्णे पिण्डपितृयज्ञ इति सूत्रश्रुतिव्याकोपः। दिनद्वयेऽपि चन्द्रादर्शने, तस्मात् पितृभ्यः पूर्वेद्युः क्रियत इत्यादिभिरेव प्रतिपदपराह्णनिवृत्तौ सौत्रममावास्याग्रहणमनर्थकमेव स्यादिति। तस्मात्प्रतिपदपराह्णनिवृत्त्यर्थमेवाऽमावास्याग्रहणमिति युक्तम् ॥३३॥

अत्रायं प्रयोगक्रमः—सन्नयतः शाखाऽऽसादनानन्तरम् असन्नयतस्तु व्रत्याऽशनानन्तरम् अध्वर्युर्गार्हपत्यस्य पश्चात्तिष्ठन्तदुत्तरतो निहितं लवनसाधनं दात्रमादत्ते—'देवस्य त्वा…दद' इति। तमभिमन्त्रयते—'यज्ञस्य…सि' इति। गार्हपत्ये प्रतितपति—'प्रत्युष्टं…तय' इति। आहवनीयाऽऽभिमुख्येन गच्छति—'प्रेयमगा…जुष्टम्' इति। आहवनीयसन्निधौ स्थित्वा दक्षिणत परिवृत्य वेदिमवलोकयेत्—'इह व…सद' इति, आहवनीयस्य पुरस्तात्त्रीन्वा चतुरो वा प्राचः प्रक्रमान्प्रक्रम्य यस्यां दिशि बर्हिर्लाभो निश्चितस्तां दिशमनियमेन गच्छेत्। प्रस्तरपर्याप्तं दर्भस्तम्बं असिदेन परिगृह्णाति—'देवा…मसि' इति, असिदेनोर्ध्वमुन्मार्ष्टि—'वर्षवृद्धमसि' इति। असिदेन पर्वसूपयच्छति—'देवबर्हि सम्' इति। आच्छिनत्ति—'आच्छेत्ता ते मारिषम्' इति। अप उपस्पृश्य, छिन्नावशिष्टान्मूलप्रदेशानभिमृशति—'देवबर्हिः…विरोह' इति। आत्मानं प्रत्यभिमृशति—'सहस्र…रुहेम' इति। अप उपस्पृश्य, निरवशेषं स्तम्बं छित्वाऽप उपस्पृश्य, तूष्णीं सन्नखमात्रं प्रस्तरमधः सन्नह्योपर्यर्धमपि सन्नह्य भूमौ निदधाति 'पृथिव्याः…पाहि' इति। मन्त्रवर्जं प्रस्तरस्याऽऽवृताऽयुजो मुष्टीन् लुनोति त्रीन्वा पञ्च वा सप्त वेत्यादयः।

त्रिसन्धिना सन्धिमतामेकसरं शुल्बं कृत्वा द्विगुणीकृत्य सव्येनापसव्यमावेष्टयति—'अदित्यै…सि' इति। तदुदीचीनाऽग्रं निधाय, तस्मिन्प्रस्तरप्रमाणानयुजो मुष्टीन्निधाय, तेषूपरि प्रस्तरं निदधाति—'सुसम्भृ…मि' इति। शुल्बेन सन्नह्यति—'इन्द्रा…नम्' इति। ग्रन्थि करोति—'पूषा…तु' इति। पश्चात्प्राञ्चमुपगूहति—'स ते मास्थात्' इति। एतस्मिन्

१. 'कुर्वते' इति मैसूरसंस्करणे पाठः।

काले परिभोजनीयार्थं पित्र्यञ्च सकृदाच्छिन्नं मुष्टिम् आवृह्य तूष्णीं लुनोति। बर्हिरुद्यच्छते— 'इन्द्रस्य ''च्छे' इति। शिरसि तृणं निधाय बर्हिर्निदधाति— 'बृहस्पते'''हरामि' इति। गच्छति—'उर्व'''हि' इति। उत्तरेण गार्हपत्यमन्तर्वेदि वा स्फ्यं काष्ठं वा निधायोपरि बर्हिर्निदधाति—'देवंगममसि' इति। तत उद्धृत्य यत्र गुप्तं मन्यते तत्र तूष्णीं निदधाति। अमन्त्रकं पूर्ववच्छुल्वं कृत्वोदगग्रं निधाय तेनोक्तलक्षणमेकविंशतिदारुमिध्मं संनह्यति 'यत्कृष्णो''' सुसम्भृता' इति। इध्मप्रव्रश्चनान्यपि सम्भृत्य, बर्हिषामिव निधानान्तं कर्म तूष्णीं करोति। पूर्वमेवाऽऽहृतेषु बर्हिरिध्मेषु यजुष्करणमात्रं वा, आहृतं वा यजुषा करोति (बौ० श्रौ० २। १६।२) इत्युक्तत्वात्। लौगाक्षिरपि—

छिन्ने पिष्टे तथा लूने सान्नाय्ये मार्त्तिके तथा।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥ इति ॥

शयानस्य वत्सस्य जानुर दृशं वेदं करोति। शुल्वात्प्रादेशे परिवास्य वेदपरिवासनानि निदधाति। वेदिकरणप्रयोगन्तूत्तरत्र वक्ष्यामः। यद्यपि पिण्डपितृयज्ञप्रयोगमुत्तरत्र (बौ० श्रौ० ३।१०,११) वक्ष्यामः, तथाप्यनुष्ठानक्रमानुरोधेनाऽत्रैव तत्प्रयोगो निरूप्यते।

अमावास्यायामपराह्णे 'पिण्डपितृयज्ञं करिष्ये' इति सङ्कल्प्य, अनन्वाहितेऽपि क्रियमाणेऽन्वाहार्यपचनं स्वयं नित उत्पाद्य, परिसमुह्य, पर्युक्ष्य, दक्षिणाग्रैः प्रागग्रैश्च परिभोजनीयदर्भैरन्वाहार्यपचनं परिस्तीर्य, उत्तरेणाग्निं वेद्यां प्रागग्रान्दर्भान् संस्तीर्य—

तेष्वेरकोपबर्हणे चाऽञ्जनाऽभ्यञ्जने तथा।
स्फ्यं दशामुदकुम्भञ्च चरुस्थालीं समेक्षणाम् ॥
आज्यस्थालीं स्रुवं चर्म शूर्पोलूखलमेव च।
मुसलं प्रोक्षणीपात्रमेतान्येकैकशो न्यसेत् ॥

प्राचीनावीती, पवित्रं कृत्वाऽन्वाहार्यस्य पश्चादुपविश्य पवित्रवत्याऽग्निहोत्रहवण्या चरुस्थाल्यां व्रीहीन्निर्वपति—'पितृभ्यो वो जुष्टं निर्वपामि' इति वा तूष्णीं वा। उपर्यद्धां स्थालीं कृत्वा, प्रोक्षण्यां तूष्णीं संस्कृताभिरद्भिः 'पितृभ्यो वो जुष्टं प्रोक्षामि' इति वा तूष्णीं वा व्रीहीन्सकृत्प्रोक्ष्य पात्राण्युत्तानानि कृत्वाऽवशिष्टाभिः सकृदेव प्रोक्षति। जघनेनाऽन्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिने उलूखलमुसले निधाय, व्रीहीनोप्य, सकृदेव दक्षिणामुखोऽवहत्य, शूर्पेण वितुषीकृत्य, पवित्रवत्यां चरुस्थाल्यामप आनीयाऽधिश्रित्य, तस्मिंस्तिरःपवित्रं तण्डुलानोप्याऽऽज्यं निरुप्याऽधिश्रित्य, स्मार्तवत्संस्कृत्योभयं पर्यग्निकृत्वोदगुद्वास्योत्पूय, मेक्षणं स्रुवञ्च सम्मृज्य, चरुं श्रपयित्वाऽभिघार्योदञ्चमुद्वास्य, यज्ञोपवीतं कृत्वा, मेक्षणेनोपहत्य तिस्र आहुतीर्जुहोति—"सोमाय पितृपीताय स्वधा नमः (तै० ब्रा० १।३।१०।२) स्वाहा, सोमाय पितृपीतायेदं न मम। यमायाऽङ्गिरस्वते पितृमते स्वधा नमः स्वाहा (बौ०ध० २।१४।७) यमायाऽङ्गिरस्वते पितृमत इदं०। अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहा (बौ० ध० २।१४।७), अग्नये कव्यवाहनाय स्विष्टकृत इदं०"।

मेक्षणमग्नौ प्रहृत्य, प्राचीनावीतं कृत्वा, दक्षिणेनाऽन्वाहार्यपचनं स्फ्येन सकृदेव दक्षिणाऽपवर्गमुद्धन्ति—'अपहता···गतं मन' इति । उद्धतदेशमद्भिरवोक्षति—'उदीरता··· हवेषु' (तै० सं० २।६।१२।३) इति । तस्मिन्देशे दक्षिणाग्रं सकृदाच्छिन्नं बर्हिस्स्तृणाति— 'सकृदाच्छिन्नं बर्हि···नुगैः सह' (तै० ब्रा० ३।७।४।१०) इति ।

दक्षिणामुखः स्थित्वा पितॄनावाहयति—'उदीराणाः···मावीरः प्र मा युनक्' । सकृदाच्छिन्नस्य दक्षिणतः पुरस्ताद्वा तेभ्य एरकोपबर्हणे निवेदयते—"आसनं शयनञ्चेमे··· शङ्करा' इति । उदकुम्भेन सकृदाच्छिन्ने दक्षिणापवर्गं त्रिषु स्थानेषु मार्जयति—'मार्जयन्तां··· महा' इति । चरुशेषेण त्रीन्पिण्डान्कृत्वा, यजमानः प्रतिपिण्डं स्वहस्त उपस्तीर्याऽभिघार्य मार्जनप्रदेशेषु पिण्डान्ददाति—'एतत्ते तत विष्णुशर्मन् ये च त्वामनु··· । एतत्ते पितामह नारायणशर्मन् ये च त्वामनु ·· । एतत्ते प्रपितामह यज्ञशर्मन् ये च त्वामनु···' । पिण्डानां पित्रादयो देवताः । यस्य पिता जीवति स येभ्यः पिता ददाति तेभ्यो दद्यात् । अत्र पितरो यथाभागं मन्दध्वम्' इत्युक्त्वा, उदङ् पर्यावृत्याऽऽस्ते यावदूष्मसमाप्तिः ।

परिक्रमिणा व्यावृत्त ऊष्मेत्युक्ते पुनः पर्यावृत्य स्थाल्याश्चरुशेषं किञ्चिदादायाऽवजिघ्रति —'ये समाना··· ये सजाता···' इति द्वाभ्याम् । यज्ञोपवीत्याचम्य, पुनः प्राचीनावीतं कृत्वा मार्जयति पिण्डसमीपे—'मार्जयन्ताम्' इत्यादिभिः । अञ्जनं ददाति—'आञ्जतां पितरः, आञ्जतां पितामहाः, आञ्जतां प्रपितामहाः' इति । अभ्यञ्जनं ददाति— अभ्यञ्जतां पितरः, अभ्यञ्जतां पितामहाः, अभ्यञ्जतां प्रपितामहाः' इति । वाससो दशाऽच्छित्वा पिण्डेषु निदधाति—'एतानि वः पितरो वासांसि, एतानि वः पितमहा वासांसि, एतानि व. प्रपितामहा वासांसि' इति । षट्षष्टिभ्यश्च वर्षेभ्य अष्टाभ्यश्च मासेभ्य ऊर्ध्वं स्वहस्त-लोम छित्वा एतैरेव मन्त्रैः पिण्डेषु निदधाति । दक्षिणामुखः प्रह्वः कृताञ्जलिरुपतिष्ठते—'नमो वः पितरो रसाय···शुष्माय···जीवाय···स्वधायै···मन्यवे··· घोराय···' इति षड्भिः पर्यायैः । 'पितरो नमो वः' इति सर्वत्राऽनुषज्यते ।

अथ वीरं याचते—'वीरम्मे पितरो···पितामहा···प्रपितामहा ·· भूयारत' इति सर्वत्रानुषज्यते । मनसा पितॄनुत्थापयति—'उत्तिष्ठत··· देवतासु' इति । मनसाऽनुगम्य पितॄन्स्वस्थानं नयति—'यन्तु पितरो यथालोकं··· जवेन । परेत पितरः···मदन्ति' इति । अनुगतं मन आह्वयति—'मनोऽन्वाहुवामहे··· आ न एतु··· पुनर्नः पितरो···' इति तिसृभिः । पिण्डान् सह बर्हिषाऽग्नावनुप्रहरति । स्फ्यादीनि पितृयज्ञानन्तरं द्वन्द्वमुदाहरन्ति, उद्वासयन्ति । अथ यज्ञोपवीती गार्हपत्यमुपतिष्ठते—'प्रजापते न त्वत्·· रयीणाम्' इति । अत्र द्वितीयां जपति—'यदन्तरिक्षम्···' इति च ।। इति प्रथमे प्रश्ने द्वितीयोऽध्यायः ।।

।। इति द्वितीयोऽध्यायः समाप्तः ।।

---

# तृतीयोऽध्यायः

अथैतस्यै शाखायै पर्णानि प्रच्छिद्याग्रेण गार्हपत्यं निवपति ॥१॥ अथैनामधस्तात्परिवास्य जघनेन गार्हपत्यं स्थविमदुपवेषाय निदधाति ॥२॥ अथास्याः प्रादेशमात्रं प्रमाय दर्भनाडीः प्रवेष्टच तत्त्रिवृच्छाखापवित्रं करोति—त्रिवृत्पलाशे दर्भ इयान् प्रादेशसम्मितः। यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे (तै० ब्रा० ३।७।४।११) इति ॥३॥

भव०—एतस्या इति पर्णशाखाया मुख्यत्वख्यापनार्थम्। पर्णानीति सत्सरुकाणि द्रष्टव्यानि। पर्णत्सरूणामिति विनियोगे सत्सरुदर्शनात् ॥१॥ एनामिति शाखायाः प्राधान्यार्थम्। प्रयोजिका शाखा अप्रयोजक उपवेष इति ख्यापितं भवति। परिवास्य मूलतः छित्वा। स्थविमत् स्थूलम्। उपवेषाय निदधाति ॥२॥ अस्या इति पर्णशाखायाः प्रकृतत्वादन्यस्यापि ग्रहणं यथा स्यादिति सामन्यवचनम्। प्रादेशमात्रं मीत्वा प्रादेशमात्रमिति नात्र शाखापरिमाणम्। प्रादेशमात्रं दर्भनाडीः प्रवेष्टच्येति च सम्बन्धः। शाखायामधिकरणत्वेन श्रवणात् त्रिवृत् पलाश इति, त्रिवृत्पलाशशाखायामिति च। उपवेषमपास्य शेषस्यैकदेशं प्रादेशमात्रं दर्भैस्त्रिवृतं करोति। छित्त्वाग्रहणे मध्यस्य विनियोगवचनासत्त्वे चाधारत्वं गौणं स्यात्। दर्भगुणाभ्यां शाखया सह त्रिवृतं करोति ॥३॥

सा०—अथैतस्यै शाखायै पर्णानि प्रच्छिद्याऽग्रेण गार्हपत्यं निवपति इति। अत्र शाखाया मूलप्रदेशे छेद्यानां पर्णानां त्सरुसङ्ख्यापेक्षया त्रित्वं विवक्षितम्। तथा च द्वैधे—'पर्णत्सरूकाणां[1] निवपन इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनस्तृतीयमग्न्यगार उद्वपेत्तृतीयमन्तर्वेदि निवपेत्तृतीयेन वत्सानां धूननं कुर्यात्। एवमिव हि पशूनां नेदीयान्भवतीति (बौ० श्रौ० २०।३)। नेदीयान्सन्निहितः अवियुक्त इति यावत् ॥१॥ अथैनामधस्तात्परिवास्य जघनेन गार्हपत्यं स्थविमदुपवेषाय निदधाति इति। एनां शाखां मूलप्रदेशे छित्वा, स्थविमत् स्थूलं, उपवेषाय अग्निप्रेरणकाष्ठत्वाय। अत्र एनामित्यनेन शाखायाः प्राधान्यं द्योतयति। तेन च शाखायाः प्रयोजकत्वं गम्यते। एतदुक्तं भवति, शाखामूलप्रदेशे सत्युपवेषच्छेदनपर्याप्ते तत्परिवासनं कार्यम्। अन्यथाऽन्यत्काष्ठं सम्पादनीयम्। नह्यप्रयोजकं प्रयुङ्क्त इति। अत एव असन्नयतश्च पौर्णमास्यां चोपवेषार्थं न शाखाहरणम्। अत एव पौर्णमास्यामुपवेषो द्वैधे विकल्पितः—पौर्णमास्यामुपवेषकरण इति। कुर्यादिति बोधायनः। न कुर्यादिति शालीकिः (बौ० श्रौ० २०।३) इति ॥२॥ अथा-

१. 'पर्णत्सरूणां' इति कै० सं०।

ऽस्याः प्रादेशमात्रं प्रमाय दर्भनाडीः प्रवेष्टच तत् त्रिवृच्छाखापवित्रं करोति—'त्रिवृत्पलाशे ''करोतु म' इति। अस्याः शाखया मूले प्रादेशमात्रं मीत्वा, तत्र दर्भनाडीभिः सहाऽधस्तादाबध्य, ताश्च दर्भनाडीर्द्वेधा कृत्वा, शाखया सह त्रिगुणीकृत्य, त्रिवृत्पवित्रं करोति। दर्भबहुत्वं शाब्दमेव। तादृशीनामपि समसङ्ख्यात्वज्ञापनार्थम्, द्वेधाविभागवचनात्। अत्र द्वैधे विशेषः—दोहनपवित्रस्य करण इति। स ह स्माऽऽह बोधायनो मूले मूलानि बध्वा द्विगुणां रज्जुं सम्प्रसार्याऽग्रे निग्रथ्नीयात्। एवमस्याऽग्रमग्रैरभिसम्पन्नं भवतीति। अत्रो ह स्माऽऽह शालीकिर्मूले मूलानि बध्वा द्विगुणां रज्जुं सम्प्रसार्य मूले परिहृत्य त्रिगुणां [रज्जुं] संप्रासार्याग्रे निग्रथ्नीयात्। एवमस्याऽग्रमग्रैरभिसम्पन्नं भवतीति (बौ० श्रौ० २०।३)। सम्प्रसार्य सम्यक् श्लिष्टं कृत्वा, मूले परिहृत्य परितो हृत्वा आवेष्टचेत्यर्थः ॥३॥

अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु चतुष्टयं संसादयति दोहनं पवित्रं सांनाय्यतपन्यौ स्थाल्याविति ॥४॥ अथैनान्यद्भिः प्रोक्षति – 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' (तै० सं० १।१।३।१) इति त्रिः ॥५॥ अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति—मातरिश्वनो घर्मोऽसि (तै० सं० १।१।३।१) इति।६॥ तेषु सांनाय्यतपनीमधिश्रयति—'द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना। दृंहस्व मा ह्वाः' (तै० सं० १।१।३।१) इति ॥७॥ तस्यां प्राचीनाग्रं शाखापवित्रं निदधाति—'वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्' (तै० सं० १।१।३।१) इति।८॥ तदन्वारभ्य वाचंयम आस्ते ॥९॥ अथ गा आयतीः प्रतीक्षते—'एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः। बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गावः (तै० ब्रा० ३।७।४।१४-१५) इति। 'महेन्द्र' इति वा यदि महेन्द्रयाजी भवति ॥१०॥

भव०—चतुष्टयग्रहणं प्रदर्शनार्थं रज्ज्वादीनां प्रोक्षणलिङ्गमन्त्रे दर्शनादिति केचिद् नियमार्थमित्यपरे। लिङ्गप्राप्तस्य विशेषानुक्रमणं सादनक्रमनियमार्थम्। प्रोक्षणस्य प्राधान्यात् संख्या प्रोक्षणेन सम्बध्यते[१]। मन्त्रः सकृदेवाभ्यासकार्याभावात् ॥४॥ गोरमणं प्रति परार्थत्वादनूहाशङ्का निवृत्त्यर्थम् महेन्द्र इति वा यदि महेन्द्रयाजी भवतीति, तस्य सम्प्रदानत्वाद्रमणमन्त्रार्थमेवेति प्राधान्यादिन्द्रस्य नैमित्तिकादूहितम्। यदि शब्दाद् 'गतश्रियोऽपि संवत्सरमिन्द्रेज्यास्तीति बोधयति। वाशब्दाद् गतश्रियोऽपि संवत्सरादूर्ध्वमनियम इति ॥१०॥

१. द्र०—तै० सं० २।५।४।४॥

सा०—अथ सायं हुतेऽग्निहोत्र उत्तरेण गार्हपत्य तृणानि संस्तीर्य तेषु चतुष्टयं-संसादयति दाहनं पवित्रं सान्नाय्यतपन्यौ स्थाल्याविति। अत्र सायं हुतेऽग्निहोत्र इति हवनप्रतीक्षणादग्निहोत्रस्याऽन्यकर्तृकत्वं प्रतीयते,स चाऽन्यो यजमान एव,स्वयं पर्वणि जुहुयात् (आप० श्रौ० २।४।२) इति वचनात्। चतुष्टयग्रहणं नियमार्थम्। रज्ज्वादीनामपि प्रोक्षणपक्षे प्रदर्शनार्थं वा पाठक्रमादासादनक्रमः, 'तान्येवमेव द्वन्द्वम्' (बौ०श्रौ० १।४।६)इति परिभाषया-ऽत्राऽपि लब्धाऽवसरत्वात् ॥४॥ अथैनान्यद्भिः प्रोक्षति—'शुन्धध्वं यज्यायै' इति त्रिः। अत्र त्रिरावृत्तिः प्रोक्षणस्यैव न मन्त्रस्य। प्रोक्षणञ्च तूष्णीं संस्कृताभिरद्भिर्वा कमण्डलुगताभि-रद्भिर्वा। अत्र द्वैधे विशेषः—सान्नाय्यपात्राणां प्रोक्षण इति। तूष्णीं संस्कृताभिरद्भिः प्रोक्षेदिति बोधायनः। कमण्डलुगताभिरिति शालीकिः (बौ० श्रौ० २०।४) ॥५॥ अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति—'मातरिश्वनो घर्मोऽसि' इति। अत्र कर्मावसाने प्रत्यूह्याऽङ्गारानिति अनभिधानाद् गार्हपत्यादबहिर्भावोऽङ्गाराणामिति गम्यते। एवं सर्वत्रावगन्तव्यम् ॥६॥ तेषु सान्नाय्यतपनीमधिश्रयति—'द्यौरसि'' मा ह्वाः' इति। सान्नाय्यस्यैतत्कर्मार्थं दुग्धस्य पयसस्तपनी तपनसाधनभूता स्थाली। द्वैधे विशेषः—अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहतीति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनस्तूष्णीमङ्गारान्निरूहेत्। सर्व एवैषोऽधिश्रयणमन्त्रः स्यादिति (बौ० श्रौ० २०।४) ॥७॥ तस्यां प्राचीनाग्रं शाखापवित्रं निदधाति—'वसूनां धारम्' इति। द्वैधे विशेषः—दोहनपवित्रस्याऽधान इति। मन्त्रेण कृत्वा मन्त्रेण स्थाल्यामादध्यादिति बोधायनः। तूष्णीं कृत्वा मन्त्रेण स्थाल्यामादध्यादिति शालीकिः। अर्धेन कृत्वाऽर्धेन स्थाल्यामादध्यादित्यौपमन्यवः (बौ० श्रौ० २०।४)। मन्त्रेण 'वसूनां पवित्रमसि इत्यादिना, शाखापवित्रं कृत्वा तेनैव मन्त्रेण स्थाल्यां निदधातीत्येकः पक्षः। तूष्णीं कृत्वा मन्त्रेण निदधातीत्यन्यः। अर्धेन 'वसूनां पवित्रमसि' इत्येतावता मन्त्राऽर्धेन शाखापवित्रं कृत्वा 'शतधारम्' इत्येतावता मन्त्रार्धेन स्थाल्यां निदधातीत्यपरः पक्षः ॥८॥ तदन्वारभ्य वाचंयम आस्ते। तच्छाखापवित्रं दक्षिणेन हस्तेनाऽन्वारभ्य वाचंयमः कर्मोपयुक्तमन्त्रातिरिक्तवाङ्-निवृत्तिसङ्कल्पवानाऽऽस्ते, यावद्वाग्विसर्गविधानमित्यर्थः ॥९॥ अथ गा आयतीः प्रतीक्षते—'एता आचरन्ति······रमयतु गावः' इति। महेन्द्र इति वा यदि महेन्द्रयाजी भवति इति। न चाऽत्रेन्द्रस्य गोरमणं प्रति पारार्थ्यादनूहाशङ्का, तस्य सम्प्रदानत्वे प्राधान्यात् अपारार्थ्यादूहो युक्त इत्याशयः। यदीत्यनेन 'गतश्रियोऽपि संवत्सरमिन्द्रयागं सूचयति। वा शब्दोऽन्यस्याऽपि संवत्सरादूर्ध्वं महेन्द्रयागविकल्पं द्योतयति ॥१०॥

अथाह 'उपसृष्टां मे प्रब्रूतात्' (श० ब्रा० १।७।१।१०) इति ॥११॥ उपसृष्टां प्राहु ॥१२॥ दोह्यमानामनुमन्त्रयते—'हुत स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्' (तै० सं० १।१।३।१) इति ॥१३॥

---

१. तु०—तै० सं० २।५।४।४॥

अथ पुरस्तात्प्रत्यगानयन्तं पृच्छति—'कामधुक्षः' (तै० ब्रा० ३।७।४।१६) इति ॥१४॥ अमूमितीतरः प्रत्याह ॥१५॥ तामनुमन्त्रयते—'सा विश्वायुः (तै० सं० १।१।३।१) इति ॥१६॥ द्वितीयमानयन्तं पृच्छति—'कामधुक्षः' (तै० ब्रा० ३।७।४।१६) इति ॥१७॥ अमूमित्येवेतरः प्रत्याह ॥१८॥ तामनुमन्त्रयते—'सा विश्वव्यचाः' (तै० सं० १।१।३।१) इति ॥१९॥ तृतीयमानयन्तं पृच्छति—'कामधुक्षः' (तै० ब्रा० ३।७।४।१६) इति ॥२०॥ अमूमित्येवेतरः प्रत्याह ॥२१॥ तामनुमन्त्रयते—'सा विश्वकर्मा' (तै० सं० १।१।३।१) इति ॥२२॥

**भव०—दोह्यमानमिति** प्रकृतिशब्देनाभेदेन विकारावगमात् द्रप्सा एवोच्यन्ते अन्यस्य कर्मणश्च्युतत्वात् । गोरेव हि कर्मत्वे स्तोकानामनुमन्त्रणमिति दुर्गमं स्याद् ब्राह्मणे च मन्त्रस्य स्तोकहोमार्थत्वदर्शनात् ॥१३॥ आनयति स्थालीम्, आनयन्तं स्थाल्यां सिञ्चन्तमित्यर्थः । **आहराप आनय** (बौ० श्रौ० १।६।२) इति भेदेन निर्देशाद् आहरणादन्यो नयत्यर्थो यथोक्त इति गम्यते । तथा च अप्रमत्तः सन्ततमानय, **दोहनेऽप आनीय संक्षालनमानयति** (बौ० श्रौ० १।१।२५). **तावदानयति** (बौ० श्रौ० १।१।२७) इति च । **कामधुक्ष** इति एतावान् मन्त्रः ॥१४॥ **अमूमिति** च नामवचनमात्रम् । महेन्द्राय इत्यवचनादच्छिद्रकाणां समस्तपाठाद् ब्राह्मणे च **'अमूमिति नाम गृह्णाति'** (तै० ब्रा० ३।२।३।७) इति वचनात् प्रतीकेन मन्त्रोपदेशे विशेषः । अन्ये उभयोर्मन्त्रयोः प्रतीकग्रहणमित्याहुः । महेन्द्रायेति (तै० सं० २।५।४।४) वचनमितरेषां प्रदर्शनार्थत्वात्तेषु वचनमिन्द्रशब्दस्य पठितत्वाद् वचनमुपपद्यते । अभिधानवैचित्र्यादसमस्तपाठाद् ब्राह्मणे च मन्त्रस्य रूपादेव प्राप्तत्वान्नामग्रहणमेव विधीयते । **भद्रमेवासां कर्माविष्करोति** (तै० ब्रा० ३।२।३।७) इति प्रतीकपक्षे उपपद्यते । प्रैषाभ्यासे वक्तव्येऽवचनप्रयोजनमापद्यकविग्रहे निवृत्त्यर्थं प्रश्नाद्युपक्रमश्चास्य निवृत्त्यर्थमिति केचित् । अन्येषां प्रश्नाद्यावृत्तिवचनं बहुत्वपक्षे प्रदर्शनार्थम् । प्रैषाभ्यासावचनं च एकत्वपक्षे प्रश्नाद्यनभ्यासार्थमिति ॥१५-२२॥

**सा०—अथाऽऽह—**उपसृष्टां मे प्रब्रूतात् इति । अध्वर्युर्दोग्धारमाह, उपसृष्टा उपगतवत्सा, तां मे प्रब्रूतात्॥११॥ उपसृष्टां प्राहुः । परिकर्मिणो दोग्धा वा प्राहुरिति बहुवचनमविवक्षितम् । उपसृष्टेति प्रतिवचनम् ॥१२॥ दोह्यमानामनुमन्त्रयते—'हुत स्तोको…पृथिवीभ्याम्' इति । दोह्यमाना गौः, दोह्यमानामित्यनेन द्रप्सान्लक्षयति । प्रकृतिविकारयोरभेदविवक्षया वा ब्राह्मणान्तरानुसाराद्वेति[1] । तथा च द्वैधे—धेनूनामनुमन्त्रण इति । स ह स्माऽऽह बोधायन एकैकामेवाऽऽसामनुमन्त्रयेताऽथाऽऽसामेकैकां दोहयेदिति । अत्रो ह स्माऽऽह शालीकिः

१. ब्राह्मणान्तरानु०' इति मद्र० सं० ।

सकृदेवैनाः सर्वा अनुमन्त्रयेताऽथाऽऽसामेकैकां दोहयेदिति। अत्रो ह स्माऽऽहौपमन्यवः सकृदेवैनाः सर्वा अनुमन्त्रयेत, सकृच्चैना दोहयेदत्र चैव स्तोकान्परिनिस्तिष्ठेदिति। एकैकामेवाऽऽसां सर्वेण सर्वेण कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः (बौ० श्रौ० २०।४)। स्तोकानामनुमन्त्रण इति। सूत्रं शालीकेः। आख्यातमौपमन्यवस्य। अत्रो ह स्माऽऽह बोधायन आतच्यैव स्तोकाननुमन्त्रयेत। अत्रैव हि स्तोकानामन्तो भवति इति (बौ० श्रौ० २०।४)। अयं मन्त्रो धेनूनामनुमन्त्रणे विनियुक्त इति बोधायनः। तत्राऽपि आसां गवां मध्ये एकैकामनुमन्त्रयेत, अनुमन्त्रितामेकैकां दोहयेदिति। प्रतिधेनु दोहनमन्त्रावृत्तिरित्यर्थः। शालीकिमते तु सर्वासां गवाम् एकधैवाऽनुमन्त्रणं,ततः क्रमेण दोह इति। औपमन्यवस्तु सकृदेवाऽनुमन्त्रणं, दोहश्च सकृदेवेत्याह। स च बहुकर्तृकः, एतदेवाऽभिसन्धायोक्तम्—उपसृष्टां प्राहुरिति। एवमस्य मन्त्रस्य दोह्यमानाऽनुमन्त्रणे मतभेदाः। द्रप्साऽनुमन्त्रणविषये मतभेदानाह—अत्र चैव स्तोकानित्यादिना। अत्र चैव स्तोकानभिमन्त्रणीयान् निश्चिनुयादिति। आसां गवां मध्ये एकैकामेव सर्वेण कर्मणा वत्सप्रेरणादिना परिनिस्तिष्ठेत्। दुग्धां दुग्धां निश्चिनुयादित्यौपमन्यवीपुत्रस्य मतम्। शालीकेस्तु मते स्तोकानुमन्त्रण एवाऽयं विनियुक्तो मन्त्रः। सर्वमन्यत्समानम्। एतदेवौपमन्यवस्याऽपि समानम्। बोधायनमते तु आतञ्चनाऽनन्तरमनेन मन्त्रेण स्तोकाऽनुमन्त्रणम् अन्यथाऽत्रैव हि स्तोकाऽनुमन्त्रो भवतीति। हि यस्मात्कारणाद्दोहनकाल एव ये स्तोकास्तानेवाऽनु तेषामेवानुमन्त्रणार्थम् अयं मन्त्रो भवति न त्वातञ्चनस्तोकानुमन्त्रणे, तत्र चेत्सर्वस्तोकाऽनुमन्त्रणं भवतीत्यर्थः ॥१३॥ अथ पुरस्तात् प्रत्यगानयन्तं पृच्छति—'कामधुक्षः' इति। पुरस्तात् प्रत्यङ्मुखः सन् यो दुग्धमानयति कुम्भ्यामासिञ्चति तमानयन्तं पृच्छति। अत्राऽऽनयनम् आसेचनं न प्रापणम्, आहराप आनय (बौ० श्रौ० १।१२), अप्रमत्तः सन्ततमानय (बौ० श्रौ० १०।५४।४), दोहने अप आनीय सङ्क्षालनमानयति (बौ० श्रौ० १।३।२५) इत्यादिषु चाऽऽनयनस्याऽऽसेचनवाचित्वदर्शनात्। 'कामधुक्षः' इत्येतावानेव मन्त्र इति केचित्,प्रश्नार्थस्यैतावतैव समाप्तत्वात्। क्वचिदप्यऽच्छिद्रकाणां मन्त्राणां प्रतीकग्रहणदर्शनात् [1]प्रतीकग्रहणपाठं विना महेन्द्रायेत्यूहानुपपत्तेः, एवममूमिति प्रतिवचनेऽपि अमूमिति नाम गृह्णाति (तै०ब्रा० ३।२।३।७) इति ब्राह्मणे नामग्रहणमात्रविधानात्। अन्ये प्रतीकग्रहणमित्याहुः। आचार्यस्योपदेशवैचित्र्यान्नाऽत्र समस्तमन्त्रपाठः। अन्यत्रेन्द्रपदस्थाने महेन्द्रपदप्रयोगवशादत्राप्यूह इत्युपदेशवैचित्र्यद्योतनायैवेति। एवं पक्षद्वये समानेऽपि प्रतीकपक्ष एव ज्यायान्, भद्रमेवासां कर्माऽऽविष्करोति (तै० ब्रा० ३।२।३।७) इति ब्राह्मणात् न हि नाममात्रवचने भवत्यासां भद्रं कर्माऽऽविष्कृतमिति। नाम गृह्णाति इति विधानं तु, अमूमिति यथाश्रुतपदपर्युदासायेति युक्तमुत्पश्यामः। अतः 'कामधुक्षः प्र णो ब्रूहि महेन्द्राय (तु०—तै० ब्रा० ३।७।४।१६) इति तद्याजिनः ॥१४॥ अमूमितीतरः प्रत्याह। ततो दोग्धा प्रतिवक्ति—'गङ्गां यस्यां देवानां हितं मनु (तु०—तै० ब्रा० ३।७।४।१६) इति ॥१५॥ तामनुमन्त्रयते—'सा विश्वायुः' इति। एवमुत्तरत्राऽपि ॥१६॥ द्वितीयमानयन्तं पृच्छति—'कामधुक्षः' इति॥१७॥ अमूम् इत्येवेतरः प्रत्याह ॥१८॥ तामनुमन्त्रयते—'सा विश्वव्यचाः' इति ॥ ६॥ तृतीयमानयन्तं पृच्छति

१. 'प्रतीकग्रहणे पाठं' इति मद्र० सं०।

—'कामधुक्षः' इति ॥२०॥ अमूमित्येवेतरः प्रत्याह ॥२१॥ तामनुमन्त्रयते —'सा विश्वकर्मा' इति । द्वितीयायास्तृतीयायाश्चोपसृष्टां मे प्रब्रूतादिति समानमभ्युपगम्य प्रश्नप्रतिवचनाऽनुमन्त्रणयोर्विशेषो दर्शितः । यदि तामसूमेवेति अमूमित्येवेति प्रतिवचनं गवां नामसङ्कीर्तने विशेषो न स्यात् प्रैषावृत्त्यवचनवत्प्रश्नाद्यावृत्तिमपि नाऽकरिष्यत् । अतस्तत्करणं तद्विशेषविवक्षयेत्यवगच्छाम । न हि विशेषाऽऽकाङ्क्षाभावे प्रश्नावृत्तिरपीति । प्रैषाद्यावृत्तिरपि किमर्थं न कृतवानिति चेत्, आपद्येकगोर्देहि तन्निवृत्त्यर्थमिति ब्रूमः । अस्तु वा तत्राऽपि प्रैषाऽऽवृत्तिरिति केचित् । प्रैषप्रश्नाऽवृत्त्यकरणस्य च प्रयोजनं गोरेकत्वपक्षे प्रश्नाऽनावृत्त्यर्थमित्यपरे । तदेतत्सर्वं कर्मान्ते स्पष्टीकृतम्—अथेमाः सान्नाय्यदुहः षडवमाः समाम्नाता भवन्ति । ताश्चेत्तिस्र एव स्युः प्रथमां वोत्तमां वा चतुर्विगृह्णीयात् । अथ चेद्द्वे एव स्यातामितरेतरां त्रिस्त्रिर्विगृह्णीयात् । अथ चेदेकैव स्यात्तामेव षट्कृत्वो विगृह्णीयात् (बौ० श्रौ० २४।२३। १०-१३)। षडवमा षट्सङ्ख्याया अनूनाः, उपर्यनियमः । आपदि तु ता गावस्तिस्र एव यदि स्युः प्रथमां वोत्तमां वा चतुर्वार विगृह्य गृह्णीयात् । त्रिर्मन्त्रेण त्रिस्तूष्णीमित्येतत्सर्वत्र समानम् । प्रथमायाश्चतुर्विग्रहणे प्राथमिकं त्रितयं समन्त्रकं, प्रथमायाश्चतुर्विग्रहणेन सह इतरयोर्द्वे विग्रहणे चेति त्रितयममन्त्रकम् । एवमुत्तमायाश्चतुर्विग्रहणे प्राथमिकयोर्द्वे विग्रहणे उत्तमायाश्च प्राथमिकं विग्रहणमिति त्रितयं समन्त्रकम् । एवं द्वित्वपक्षेऽपि प्रथमाया विग्रहणत्रयं समन्त्रकं, द्वितीयायास्त्वमन्त्रकमिति । एवमेकत्वेऽपि । उपलक्षणञ्चैतत् । यदि पञ्चैव स्युः प्रथमां वोत्तमां वा द्विर्विगृह्णीयात् । चतुष्ट्वे तु प्रथमां वोत्तमां वा त्रिर्विगृह्णीयादिति योज्यम् ॥२२॥

तिसृषु दुग्धासु वाचं विसृजते—'बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पताम्' (तै० ब्रा० ३।७।४।१७) इति । महेन्द्रायेति वा यदि महेन्द्रयाजी भवति ॥२३॥ विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयित्वा॥२४॥ दोहनेऽप आनीय संक्षालनमानयति —'संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा । मन्द्रा धनस्य सातय (तै०सं० १।१।३।१) इति ॥२५॥ अथैनत् तप्त्वोदगुद्वास्य शीतीकृत्वा तिरःपवित्रं दध्नातनक्ति—'सोमेन त्वातनच्मीन्द्राय दधि' (तै० सं० १।१ ३।१) इति । महेन्द्रायेति वा यदि महेन्द्रायाजो भवति ॥२६॥ यावता मूर्च्छयिष्यन्मन्यते तावदानयति ॥२७॥

भव०—बहु दुग्धीति सकृदेव त्रित्ववचनस्य मन्त्रोत्तरविषयत्वात्, त्रिभिर्वा प्रत्येकमनुक्रान्ताभिसम्बन्धात्, बहु दुग्धीति चैकवचनस्य गोविषयस्यैवमर्थत्वात्तिसृषु दुग्धास्विति च । इतरथा वाचं विसृजत इत्येव वक्ष्यते तेनास्य विकल्पः । ब्राह्मण उक्तत्वादिहावचनम् । प्रत्यक्षविहितेन अनारभ्याधीतस्यानुमानिकस्य विकल्पस्य न्याय्यत्वाद् विकृतौ निवेशे प्राप्त आचार्यस्य वचनं श्रुत्यन्तरमनुमीयते । नह्येकस्मात्

प्रमाणादाचार्यो ब्रवीति । बहु दुग्धीति प्रैषासम्भवात् त्रिरिति अवचनाच्च सकृदेव मन्त्र इत्यपरम् । मन्त्रो विकृतौ न प्रवर्तते पुनराप्यायनप्रयोजनाभावात्, उत्तरवाक्ये च पुनः शब्दस्य पुनरुपादानत्वात् । हव्यमिति स्वार्थिकतद्धितस्य प्रकृत्यन्तरस्य प्रतीकोपादानादेक एव मन्त्र इत्यपरे । एतस्मिन् दर्शनेऽभ्यसितव्यो ब्राह्मणवचनात् ॥२३॥ तूष्णीं ग्रहणाद् वागिन्द्रियव्यापारनिवृत्तौ, आवृत्प्रसङ्गे अनन्वारभ्येत्यावृन्निवृत्त्यर्थम् । 'षडवमाः (बौ० श्रौ० २४।२३।१०)इति न परिसंख्यार्थम् । एवमपरिमितार्थवद उपपद्यते ॥२४॥ तृतीये स्रुवे 'चतुर्थे स्रुवे (तु०—बौ०श्रौ० २०।४) इति नित्यवत् कृत्वा संख्याविकल्पवचनात् स्रुवेणातञ्चनं तयोः स्रुवनियमः । इह तु [3]प्रकरणान्तरमपि संभवति, येन केनचित् सकृदेव यावता मूर्च्छयिष्यन्निति[4] वचनात् ॥२७॥

सा०—तिसृषु दुग्धासु वाचं विसृजते—'बहु दुग्धीन्द्राय···कल्पताम्' इति, महेन्द्रायेति वा यदि महेन्द्रयाजी भवति । समन्त्रकदोहत्रयानन्तरं वाचं विसृजते इति पाठे नियमं जहाति । तत्रायं मन्त्रः—बहु दुग्धीत्यादिकः । स तु सकृदेव वक्तव्यः, ब्राह्मणोक्तस्य त्रिराह (तै० ब्रा० ३।२।३।८) इति त्रिर्वचनस्य दोह्यमानाऽनुमन्त्रणविषयत्वात् । ब्राह्मणस्यैतन्मन्त्रविषयत्वपक्षे त्रिर्वा भवतु, अनुक्रान्तानां गवां मन्त्रेण प्रत्येकमभिसम्बन्धात् । अत एव प्रत्येकगोविषयं बहु दुग्धीत्येकवचनमुपपन्नं भवति । अत एव तिसृषु दुग्धास्वित्युक्तम् । इतरथा वाचं विसृजत इत्येतावदेवाऽवक्ष्यत्, न तु तिसृषु दुग्धास्विति । अतस्त्रिर्वा सकृद्वेति वैकल्पिकत्वेऽप्याचार्येण तथाऽनभिधानं प्रत्यक्षाऽनुमितश्रुत्योः समतुलितत्वाऽभावद्योतनाय । कथं तर्हि विकल्पः स्यादिति चेत्, त्रिराह (तै० ब्रा० ३।२।३।८) इत्यस्य विषयाऽनियमात्, तथाऽपि बहु दुग्धीति प्रैषस्य गोविषयस्याऽसम्भावितत्वात् । त्रिरित्याचार्येणाऽवचनाच्च सकृदेव बहु दुग्धीति वाग्विसर्ग इति युक्तम् । प्रकृताऽनुष्ठानाऽनुपयुक्तत्वाच्चाऽस्य मन्त्रस्य वाग्विसर्जनरूपता । अत एवाऽयं मन्त्रो विकृतौ न प्रवर्तते, अनुपयोगात् । न हि विकृतौ दुग्धाया गोः पुनर्हव्याप्यायनं प्रसक्तं प्रकृतिवत् पुनः पुनरननुष्ठानादिति ॥२३॥ अस्य मन्त्रस्य वाग्विसर्गरूपतामेव द्रढयन्नाह —विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयित्वा इति । बहु दुग्धीति विसृष्टवाक् शाखापवित्रमनन्वारभ्य तूष्णीमित्यनेन वाङ्नियमाऽभावेऽपि कर्मणि यथेच्छमभिभाषणं निवर्तयति । मन्त्रस्त्वनाम्नानादेव निवृत्तः । अत्र द्वैधे विशेषः—उत्तरासां दोहन इति । विसृष्टवागनन्वारभ्योत्तरा दोहयेदिति बोधायन. । आनीयमान[5] एवाऽनु चाऽऽरभेत वाचञ्च यच्छेदिति कात्यः (बौ० श्रौ० २०।४) । अन्वारभेत वाचञ्च यच्छेतेत्यन्वयः । आनीयमान आसिच्यमाने कुम्भ्यामासेचनकाल एव पवित्राऽन्वारम्भणं वाङ्नियमनञ्चेति कात्यस्य मतमि-

१. 'अवमान' 'पवमान' इति कोशेषु ।
२. 'चतुर्थ चतुरत्र इति नित्यवत्कृत्वेति चरत्रुभ नित्यवत्' इति कोशेषु ।
३. 'पक्षान्तरं०' ग-कोशे ।
४. 'ष्यन्तीह' इति कोशेषु ।
५. आनीयमान आनीयमान एवान्वा०' इति ख-कोशे ।

त्यर्थः। आवृत्प्रसङ्गोऽन्वारम्भणायत्तः। उत्तरा इति त्रित्वे पर्यवसानम्, षट्कृत्वो विग्रहण-नियमात्। षडवमा इत्यनेन उत्तरास्वनियमपक्षोऽपि सूचितः। तथा च कर्मान्ते—विसृष्टवाग-न्वारभ्योत्तरा दोहयेदित्यपरिमितानामेवैतदुक्तं भवति (बौ० श्रौ० २४।२३।१४) इति। एवमपरिमितपक्षाश्रयणेन गोसङ्ख्यानियमनिवृत्तौ आपदि गोरलाभेऽपि याचनादिलब्धपयस्कस्य यजमानस्याऽपि अनुष्ठानसिद्धिरवगन्तव्या। तथा च द्वैधे—दुग्धं लभमानस्येति। वत्सापा-करणप्रभृतीन्मन्त्रान्साधयेदिति बोधायनः। आसेचनप्रभृतीनिति शालीकिः (बौ० श्रौ० २०।४)। दुग्धमेव लभमानः, न तु दोहनक्रियां, गोरलाभादित्यर्थः। आसेचनप्र-भृतीन् कामधुक्ष इत्यादिकान्। एतस्मिन्पक्षे शाखाछेदनमात्रं समन्त्रकम्। अन्यत्क्रियाजातम-मन्त्रकम् इति ॥२४॥ दोहनेऽप आनीय सङ्क्षालनमानयति—'सम्पृच्यध्वं···सातये' इति। सङ्क्षाल्यते अनेन दोहनमिति सङ्क्षालनम्। तत् कुम्भ्यामासिञ्चति ॥२५॥ अथै-नत्तप्त्वोदगुद्वास्य शीतीकृत्वा तिरःपवित्रं दध्नाऽऽतनक्ति—'सोमेन त्वाऽऽतनच्मी-न्द्राय दधि' इति, महेन्द्रायेति वा यदि महेन्द्रायाजी भवति ॥२६॥ यावता मूर्च्छ-यिष्यन्मन्यते तावदानयति। मूर्च्छयिष्यन् दधिभावमापत्स्यत इति निश्चिनोति तावद्दध्यान-यति, यदाऽऽतञ्चनार्थमुपकल्पितम्। अत्र दध्यासेचनसाधनं दधिपरिमाणं चाऽनियतमित्यवग-म्यते। द्वैधे तु नियम उक्तः—आतञ्चन इति। चतुर्थे स्रुव आनयेद्यावता मूर्च्छयिष्यन्म-न्येतेति बोधायनः। तृतीये स्रुव आनयेद्यावता मूर्च्छयिष्यन्मन्येतेति शालीकिः (बौ० श्रौ० २०।४) इति। अत्र स्रुवेण चतुर्वारमातञ्चनं तत् त्रिवारं वा। चतुर्थे तृतीये वा स्रुवेणाऽऽतञ्चने सति यावता मूर्च्छयिष्यन् मन्यते तावदानयेदित्यर्थः। स्रुवेणाऽऽतञ्चनपक्षे तस्यासादनप्रोक्षणे अपि इति केचित्। अत्र दध्नोऽभावे पूतिकाद्यातञ्चनद्रव्याणां विकल्पः॥२७॥

अग्निहोत्रोच्छेषणमभ्यातनक्ति—'यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमि' (तै० ब्रा० ३।७।४।१७) इति ॥२८॥ अथैनदुदन्वता कंसेन वा चमसेन वापिदधाति—'अदस्तमसि विष्णवे त्वा यज्ञायापिदधा-म्यहम्। अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते (तै० ब्रा० ३।७।४।१७) इति ॥२९॥ तदुपरीव निदधाति यत्र गुप्तं मन्यते—'विष्णो हव्यं रक्षस्व' (तै० सं० १।१।३।१) इति ॥३०॥

भव०—आपः प्रोक्षणीशेषाः पवित्रमति नीता आपो धारय(तै०ब्रा०३।७।४।१४) इति लिङ्गाद् धारणस्यान्याप्रयोजनादिह वचनादित्येके। तदनुपपन्नम्। इह प्रोक्षणीनां मन्त्रानाम्नानात्, देवेन सवित्रा (तै० ब्रा० ३।७।४।१४) इत्यसम्भवः। अवचनाच्च, इहस्थानां च इह स्थानादाप्तिलिङ्गान्मन्त्रानाम्नानाच्च पुरोडाशीय प्रोक्षणीषु स्थानाच्च लिङ्गं बलीयः। अयं चाचार्यस्याभिप्राय इति गम्यते अति शिष्टाः प्रोक्षणीर्निधाय (बौ० श्रौ० १।६।६)इति वचनात्। आहरन्त्येताः प्रोक्षणीरभि-

पूर्य (बौ० श्रौ० १।११।३०) इति च धारणं देवेन सवित्रोत्पूता (तै० ब्रा० ३।७।४।१४) इति वचनं तत्रोपपद्यते। तस्मात्तत्र युक्तो मन्त्रः, प्रैषवचनाच्च याजमानमेवं च मन्त्रार्थवाद उपपन्नो भवति । तस्मादुदकमात्रस्य ग्रहणम् । अद्भिररिक्तेन इत्युपपद्यते, इमौ पर्णं च (तै० ब्रा० ३।७।४।१८) इति पवित्रमपिधाने निदध्यात्। कमण्डलुभिरित्यादौ 'पूता' इति उपपन्नं भवतीति अनियमः । प्रोक्षणीशेषपक्षे हव्यं हि रक्षसीत्यागम्यपेक्षमपि संभवतीति ॥२९, ३०॥

सा०—अग्निहोत्रोच्छेषणमभ्यातनक्ति—यज्ञस्य सन्ततिरसि'''सन्तनोमि' इति। अत्र पयोव्यतिरिक्तद्रव्येणाऽग्निहोत्रे प्रक्रान्ते सन्नयन् पयसैवाऽग्निहोत्रमस्यां रात्रौ हुत्वा तच्छेषमभ्यातनक्तीत्येकः पक्षः। येन द्रव्येण जुहुयात्तच्छेषेणातच्यादित्यन्यः। पक्षद्वयेऽपि अग्निहोत्रोच्छेषणप्रमादे पुनरग्निहोत्रं हुत्वा तच्छेषं सम्पादयेदेव शेषप्रतिपत्तिमात्रत्वानभ्युपगमात्, अन्यथा न प्रतिपत्तिः। प्रतिपाद्यं प्रयुङ्क्त इति न्यायविरोधः स्यात्। अग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य सन्तत्यै (तै० सं २।५।३।६) इति फलश्रवणाच्च। तदेतद् द्वैधकर्मान्तयोः स्पष्टीकृतम्—अग्निहोत्रोच्छेषणस्य करण इति। स ह स्माऽऽह बोधायनो यद्यस्याऽऽज्येन वौषधेन वा प्रक्रान्तं स्यात् पयसैव तां रात्रिं जुहुयात्पयस एवाऽग्निहोत्रोच्छेषणं कुर्यादिति। अत्रो ह स्माऽऽह शालीकिर्नाऽसमाप्ते काम आवर्तयेत् । यद्यस्याऽऽज्येन वौषधेन वा प्रक्रान्तं स्यात्तस्य हुत्वा तस्यैवाऽग्निहोत्रोच्छेषणं कुर्यादिति (बौ० श्रौ० २०।४)। कामेऽसमाप्ते आज्येन जुहुयात्तेजस्कामस्य (तै० ब्रा० २।१।५।५) इत्यादिकेऽपरिपूर्णेनाऽऽवर्तयेत् द्रव्यव्यत्ययं न कुर्यात्। तथा कर्मान्ते च स यद्य् हाऽग्निहोत्रोच्छेषणात्प्रमाद्येत्पुनरेवाऽग्निहोत्रं जुहुयात् (बौ० श्रौ० २४।२३।६)। वध्यग्निहोत्रोच्छेषणयोर्हविरातञ्चने पौर्वापर्यविकल्पो द्वैधे दर्शितः—अग्निहोत्रोच्छेषणमभ्यातनक्तीति । सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनोऽग्निहोत्रोच्छेषणमानीय हविरातञ्चनमानयेदेवमस्योभयमभ्यातक्तं भवतीति (बौ० श्रौ० २०।४)। उभयं सान्नाय्यमग्निहोत्रोच्छेषणञ्च, आतक्तं कृताऽऽतञ्चनम् ॥२८॥ अथैनदुदन्वता कंसेन वा च सेन वाऽपिदधाति—'अदस्तमसि'''परिशेरते' इति। उदन्वतेत्यनेन प्रोक्षणीशेषोदकपूर्णत्वं विवक्षितम्। तिरःपवित्रमति नीता आपो धारय (तै० ब्रा० ३।७।४।१४) इति लिङ्गात्। धारणस्य प्रयोजनाऽन्तराऽभावाद् अपिधाने पूरणे विनियोग इति केचित्। तदनुपपन्नम्, अत्र मन्त्रसंस्कृतप्रोक्षण्यसम्भवात्। असम्भवश्चैतत्प्रकरणे मन्त्रानाम्नानात्, आचार्येणाऽवचनाच्च। अत एव शुन्धध्वम् (बौ० श्रौ० १।३।५) इत्यत्र कमण्डलुगताभिस्तूष्णीं संस्कृताभिर्वेत्युक्तम्। यत्र तु मन्त्रसंस्कृतप्रोक्षणीधारणं विनियोगश्चाऽस्ति तत्र वचनमाचार्यस्यैव जागरूकम्, यथा अतिशिष्टाः प्रोक्षणीर्निधाय (बौ० श्रौ० १।६।६) इति, आहरन्त्येताः प्रोक्षणीरभिपूर्य (बौ० श्रौ० १।११।३०) इति च। अतस्तत्रोपपन्नम् न त्वत्र, वचनाऽभावादिति। तस्मादुदन्वतेत्यत्रोदकमात्रग्रहणमुपपन्नम्। अत्र केचिदपि स्थाल्यामुदगग्रं शाखापवित्रं निधाय कमण्डलूदकं पूरयेदित्याहुः। अत्र द्वैधे विशेषः—उदन्वताऽपिदधातीति। उदन्वताऽपिधाय सर्वां रात्रिं परिशाययेदिति बोधायनः।

उदन्वताऽपिधाय सिक्त्वैता अपोऽपिदध्यादिति शालीकि: (बौ० श्रौ० २०।४) इति। एता अपः सिक्त्वा सेचयित्वा पुनरपिदध्यादिति ॥२६॥ तदुपरीव निदधाति यत्र गुप्तं मन्यते—'विष्णो हव्यं रक्षस्व' इति। उपरीव उपर्येव। अनधः सादयति (तै० ब्रा० ३।२।३।१२)इति लिङ्गात्। यत्र शिक्यादौ गुप्तं मन्यते ॥३०॥

एतस्मिन् काले दर्भैः प्रातर्दोहाय वत्सानपाकरोति तूष्णीम् ॥३१॥

भव०—अपहरणं वत्सानां शाखाया विनियुक्तत्वादाख्यान्तरप्रतिपत्तौ शाखाभिधानाभावादन्यस्याश्चाभावात्। पर्णशाखया च वत्सानपाकरोतीति च कृतार्थत्वात् मन्त्राणां च तत्सम्बद्धत्वात् प्रकृतौ च कृत्स्नविधानाच् छाखायामाच्छिनत्तीति चैकत्वस्य विवक्षितत्वात्। साधारणेऽपि तूष्णीं दर्भैरित्युक्तम्। दर्भैरिति वचनमुत्प्रेक्ष्यम्। अशनवचनमशनपरिग्रहार्थं, ब्राह्मणोक्तपरिग्रहार्थं वा। एतदेव युक्ततरं दृश्यते। अशनानशने (बौ०श्रौ० २०।४) द्वैधसूत्रमौपमन्यवस्य इत्युक्तत्वाद् द्वयोरुपन्यासेन लघीयसा सिद्धे त्रयाणामुपन्यासादशने वाभिप्राय इति गम्यते ॥३१॥

सा०—एतस्मिन्काले दर्भैः प्रातर्दोहाय वत्सानपाकरोति तूष्णीम् इति। अत्र शाखायाः कर्मान्तरे विनियुक्तत्वात् त्रिवृत्पलाशमन्त्रसंस्काराच्छाखापवित्रनामप्राप्त्या च शाखान्तराऽऽहरणस्य चाऽचोदितत्वान्न तया वत्सापाकरणमिदानीमनुष्ठेयमित्यभिसन्धायोक्तं दर्भैरिति। परिस्तरणस्याऽयमपि कालः। वक्ष्यति हि—नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति(बौ०श्रौ० १।४।२)। एतत्प्रकाराश्रयणेन विशेषो द्वैधे दर्शितः- अग्नीनां परिस्तरण इति। सूत्रमाचार्ययोः। अत्रो ह स्माऽऽहौपमन्यव उपवसथ एवाऽग्नीन्यथोत्पन्नं परिस्तृणीयात्। एवं हि ब्राह्मणं भवति उपाऽस्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति इति (बौ० श्रौ० २०।४)। यथोत्पन्नं, उत्पत्तिक्रममनतिक्रम्य, गार्हपत्यमारभ्येत्यर्थः। अत्र रात्रावशनाऽनशनव्रतादिविषये तूक्तम् ॥३१॥

अत्राऽयं पिण्डपितृयज्ञाऽनन्तरं प्रयोगक्रमः –

अध्वर्युः शाखामूलप्रदेशे पर्णानि त्सरुणा सह प्रच्छिद्याऽप उपस्पृश्य, गार्हपत्यस्य पुरस्तान्निधाय, शाखामूलप्रदेश छित्वाऽप उपस्पृश्य, गार्हपत्यस्य पश्चादुपवेषाय निदधाति। शाखायामग्रतः प्रादेशमात्रं मीत्वा दर्भनाड्या सहाधस्तादाबध्य दर्भनाडीर्द्वेधा विभज्य, शाख्या सह त्रिगुणीकृत्य, तत् त्रिवृच्छाखापवित्रं करोति—त्रिवृत्पलाशे ⋯ तु मे इति। एतावदहरेव कुर्यात्। सायमग्निहोत्रं यजमानः स्वयमेव हुत्वाऽग्निहोत्रोच्छे[illegible]णं नि[illegible]ति। ततोऽध्वर्युरुत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु चतुष्टयं द्वन्द्वं न्यञ्चि सादयति— [illegible] शाखापवित्रं सान्नाय्यतपन्यौ स्थाल्यौ। तान्युत्तानानि कृत्वा लौकिकाभिरद्भिः सकृ[illegible] द्विरतूष्णीं प्रोक्षति—शुन्धध्वं ⋯यज्यायै इति। गार्हपत्यस्य पश्चादुपविश्योपवेषे[illegible]ऽङ्गारान्निरूहति—मातरिश्वनो घर्मोसि इति। तेषु सान्नाय्यकुम्भीमधिश्रयति—द्यौर[illegible] ⋯ह्वाः इति। तस्योपरि शाखापवित्रं प्रागग्रं निदधाति—वसूनां⋯धारम् इति। पवित्र[illegible]य वाचंयम आस्ते।

अथ गा आयतीः प्रतीक्षते—एता आचरन्ति···गावः इति, महेन्द्रो रमयतु गाव इति महेन्द्रयाजिनः। अध्वर्युर्दोग्धारं प्रत्याह —उपसृष्टां मे प्रब्रूतात् इति। दोग्धा वत्सं विमुच्य—उपसृष्टा इति प्रत्याह। अध्वर्युर्दोह्यमानां गामनुमन्त्रयते—हुत स्तोको···पृथिवी-भ्याम् इति। पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्सपवित्रायां कुम्भ्यां पय आनीयमानं दोग्धारं पृच्छत्य-ध्वर्युः—कामधुक्षः···इन्द्रियम् इति, महेन्द्राय इति तद्याजिनः। दोग्धा गङ्गाम् इति गोर्नाम गृहीत्वा—यस्यां देवानां···हितम् इति ब्रूयात्। अध्वर्युस्तामनुमन्त्रयते—सा विश्वायुः इति। द्वितीयादोहेऽपि—उपसृष्टां म इत्यादि, यमुनां यस्याम् इति प्रतिवचनं, सा विश्वव्यचा इत्यनुमन्त्रणम्। तृतीयादोहे—उपसृष्टां म इत्यादि, सरस्वतीं यस्याम् इति प्रतिवचनं, सा विश्वकर्मा इत्यनुमन्त्रणम्। अध्वर्युस्तिसृषु दुग्धासु वाच विसृजते—बहु दुग्धीन्द्राय···कल्पताम् इति, महेन्द्राय देवेभ्यः इति महेन्द्रयाजिनः। एकस्यां विकृतौ च बहु दुग्धीत्यस्य लोपः। अगोमतो यजमानस्य याचितपयस्कस्य क्रीतपयस्कस्य शाखा-पवित्रनिधानान्तं कृत्वा एता आचरन्ति इत्यादि सर्वं दोहमन्त्रं जपति।

विसृष्टवाक् शाखापवित्रमनन्वारभ्य तूष्णीमुत्तरा दोहयित्वा दोहनेऽप आनीय सङ्क्षा-लनमानयति—सम्पृच्यध्वं···सातये इति। अन्यत्र पवित्रं निधाय तप्त्वोदगुद्वास्य शीतीकृत्वा, उदगग्रं पवित्रं निधाय एकाह्लादिसंस्कृतेन दध्नातनक्ति—सोमेन त्वा दधि इति, महेन्द्राय० इति तद्याजिनः। उक्तदध्यभावे लौकिकेन दध्ना, तदभावे क्रमेण पूतिकादिना वा, एतेनैव मन्त्रेणाऽऽतच्याद् यावदलं भवति। अग्निहोत्रोच्छेषणमभ्यातनक्ति-यज्ञस्य सन्तति··· सन्तनोमि इति। अथैनदुदन्वता कंसेन चमसेन वाऽपिदधाति—अदस्तम···शेरते इति। तदादायोपरि शिक्यादौ निदधाति—विष्णो हव्यं रक्षस्व इति। एतस्मिन्काले गोष्ठं गत्वा दर्भैः प्रातर्दोहाय तूष्णीं वत्सानपाकरोति। परिभोजनीयदर्भैर्वक्ष्यमाणप्रकारेण गार्हपत्यमारभ्या-ऽग्नीन्परिस्तृणाति। अत्रेषे त्वेत्याद्यनुवाकत्रयाम्नातानां मन्त्राणां विनियोगसङ्ग्रहः—

शाखां छिन्द्यादिषे त्वेति वायव स्थेति वत्सकान्।
अपाकृत्याऽथ गाः प्रेयं देवो व इति गोपतिम्॥

ध्रुवा अस्मिन्नितीक्षेत यजु शाखानिगूहनम्।
पूर्वकल्पानुसारेण पञ्चमन्त्रा इहोदिताः॥

यज्ञस्येत्यभिमन्त्र्याऽग्नौ प्रत्युष्टं प्रतितापयेत्।
असिदं परशुं वा प्राग् व्रजेत् प्रेयमगादिति॥

इहेति वेदिमीक्षेत देवानां स्तम्बसङ्ग्रहः।
वर्षेत्युन्मार्ष्टि देवेति दात्रं संयोज्य दाति तत्॥

आच्छेत्तेत्यालवस्पर्शो देवेत्यात्माभिमर्शनम्।
सहस्रेति पृथिव्याः स्यात्प्रस्तरासादनञ्च तम्॥

सुसम्भृतेति सम्भृत्यादित्यै स्याद्रशनाकृतिः ।
इन्द्राण्या इति सन्नह्य ग्रन्थि पूर्षेति गूहनम ।।

स ते मा स्थात्समुद्यच्छेदिन्द्रस्येति शिरोधृतिः ।
बृहस्पतेरागतिः स्यादुर्वित्यूर्ध्वं निधाय तत् ।।

देवंगममसीत्यत्र मन्त्रा विंशतिरीरिताः ।
शुन्धध्वमिति सान्नाय्यपात्राणि प्रोक्ष्य मातरि ।।

उपवेषेण तेनाग्नावुदगङ्गारतोदनम् ।
द्यौरित्यधिश्रित्य कुम्भीं वसूनामिति निक्षिपेत् ।।

तस्यां पवित्रं प्रागग्रं हुत स्तोकेति गाः क्रमात् ।
दोहकालेऽनुमन्त्र्याऽथ सेत्यादित्रितयेन ताः ।।

दुग्धाः पृथङ् मन्त्रयित्वा सम्पृच्यध्वञ्च सेचयेत् ।
दोहनीक्षालनं कुम्भ्यां सोमेने त्यातनक्ति तत् ।
विष्णो इत्यनधो रक्षेन्मन्त्रा एकादशोदिताः ।।

इति प्रथमे प्रश्ने तृतीयोऽध्यायः ।

।। इति तृतीयोऽध्यायः समाप्तः ।।

# चतुर्थोऽध्यायः

अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशते—'कर्मणे वां देवेभ्यः शकेयम्' (तै० सं० १।१।४।१) इति ॥१॥

भव०—अग्निहोत्रग्रहणं प्राङ्निवृत्त्यर्थम् । [1]स्वरितानामास्ति प्रसङ्ग इति संमृशत इति स्वरितत्वात् कर्त्रभिप्रायक्रियाफलस्यात्मनेपदम् (तु०—अष्टा० १।३।७८)। तथात्मानं प्रत्यभिमृशत इति । [3]अकर्त्रभिप्राये आच्छेदनान्यभिमृशतीति, सायं संमृशति, उभयं संमृशेदित्यदिषु[4] । परे व्यत्ययेनात्मनेपदमपभ्रंशो वा, प्रमादाभ्यस्तं कल्पब्राह्मणयोर्न्याय्यस्य परस्मैपदस्य दर्शनात् । छन्दसि व्यत्ययोऽप्यपभ्रंश एव[5] । न च सर्वत्र प्रमादाभ्यस्तमपि विसंवादी भवति ॥१॥

सा०—अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ सम्मृशते—'कर्मणे वां देवेभ्यः शकेयम्' इति । अग्निहोत्रे हुते प्रातः हस्तौ सम्मृशत इत्यन्वयः । अनेन प्रागुदयादमावास्यायास्तन्त्रोपक्रमपक्षः प्रत्युक्तः । हस्तौ सम्मृशत इति पाण्योरन्योन्यसम्मर्शनात् द्विवचनोपपत्तिः । [6]स्वरितेत्त्वाद्वा व्यत्ययेन वा आत्मनेपदम् । अस्याऽङ्गस्पर्शनरूपत्वादुदकोपस्पर्शनं कर्तव्यम् । अत्र देशाऽनुक्तावपि सामान्याद्विहारादुत्तरो देशः प्राप्तः । तथा च धर्मे—उत्तरत उपचारो विहारस्तथापवर्गो विपरीतं पित्र्येषु (बौ० ध० १।१५।१-३) इति । विहारोऽग्नीनामायतनदेशः । उपचारः क्रिया, ऋत्विगादिसञ्चाररूपा क्रिया अनुष्ठानरूपा च । उत्तरत उपचारो यस्य विहारस्य स तथोक्तः । ऋत्विगादयो विहारादुत्तरतः सञ्चरेयुः, अनुतिष्ठेयुश्चेति यावत् । तथापवर्गः । अत्राऽपि बहुव्रीहिः उत्तरतोऽपवर्गो विहार इत्यर्थः । अपवर्गः पर्यवसानम्, निर्गम इति यावत् । पित्र्येषु, कर्मस्विति शेषः । विपरीतमिति क्रियाविशेषणम् । उपचाराऽपवर्गं विपरीतं यथा[7] भवति तथा अनुष्ठेयमित्यर्थः । वैपरीत्यञ्च दिक्कृतं, सा चोत्तराया दक्षिणैव [8]तदसम्बन्धात् । एवं सामान्यतः प्राप्ते विशेषो द्वैधे दर्शितः—पाणिसम्मर्शन इति । उत्तरेणाऽऽहवनीयं तिष्ठन्पाणी संम्मृशेदिति बोधायनः । उत्तरेण गार्हपत्यमिति शालीकिः (बौ० श्रौ० २०।५) ।

---

१. 'स्वरितेतामस्ति' इति पाठोऽत्र युक्तः स्यात् ।

२. 'स्वरितेत्त्वात्' ,, ,, ,, ,, ।

३. 'कर्त्रभिप्रायात्' 'भकर्त्रभिप्राये' इति कोशेषु ।

४. परस्मैपदमिति शेषः ।

५. अयुक्तेयं धारणा, व्यत्ययपदार्थस्यानवबुद्धत्वात् । पृषोदरादीनामपि साधुत्वं प्रतिपिपादयिषुः पाणिनिः छन्दःसु अपभ्रंशान् स्वीकुर्यादिति को नाम विश्वसेत् ।

६. 'स्वरितेतत्वाद्वा' इत्यपपाठः मद्र० सं० ।

७. 'तथा' इति मद्र० सं० । ८. 'तदसंभवात्' इति ख-कोशे ।

अत्रेदं विचार्यते—किं मन्त्रात्पूर्वं कर्मानुष्ठेयम्, उत तत्समकालम् आहोस्वित्कर्मादिमन्त्रा-
न्तयोः सन्निपातः, किं वा किञ्चिद्विलम्बेनाऽपि इति ? अत्र यद्यपि मीमांसकैरनियतपक्षं पूर्व-
पक्षीकृत्य मन्त्रान्तैः कर्मादीन्सन्निपातयेत् (आप० श्रौ० परिभाषा, भार० श्रौ० १।२।२) इति
सिद्धान्तितम्, तथाऽप्येतेषां पक्षाणां नियतविषयत्वमेव न्याय्यं, न त्वेकतरपक्षपरिशेषः । तथा
हि—क्वचिन्मन्त्रात्पूर्वभाविकर्मोपलभ्यते, यथा हवनमनुमन्त्रणात् । क्वचित्समकालं यथाऽऽघा-
रादिकम् । क्वचिन्मन्त्रान्ते कर्मादिसन्निपातः, यथा स्वाहाकारवषट्कारादिषु । क्वचिद्वि-
लम्बेनाऽपि, यथा प्रोक्षणीरासादयेत्यादिषु प्रैषमन्त्रेषु । तत्र पक्षत्रयेऽपि मन्त्रोच्चारणकालात्क-
र्मानुष्ठानकालस्य ह्रासे वृद्धौ वा न विरोधः ।

समकालीने तु विरोधशङ्का कर्मान्ते निवारिता—नाऽप्रक्रान्तं प्रक्रमयेत् न प्रक्रान्तं
कर्म तूष्णीं कर्मणाऽभिपूरयेदिति[1] । नाऽप्रक्रान्तमिति यदवोचाम, बर्हिर्लवने[2] खल्वयं
ह्रस्वो मन्त्र आम्नातो भवति, दीर्घमु कर्म । न कर्मणो हेतोर्मन्त्रोऽभिनिवर्तते[3]
यथाऽयं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म । न कर्मणो हेतो-
र्मन्त्रोऽभिवर्तेत । अथाऽस्यां स्वयमातृण्णायां दीर्घो ह मन्त्र आम्नातो भवति ह्रस्वमु
कर्म । न कर्मणो हेतोर्मन्त्रो विरमेद्[4] (बौ० श्रौ० २४।७।३-८) इति । अप्रक्रान्तम् अपर्याप्तं
मन्त्रमल्पकालोच्चारणीयमित्यर्थः । न प्रक्रमयेन्नाऽऽवर्तयेत् । प्रक्रान्तं पर्याप्तं कर्म तूष्णीं कर्मणा
तूष्णीं क्रियया नाऽभिपूरयितुमिच्छेत् । अयमर्थः—यत्र मन्त्रस्याऽल्पता दैर्घ्यं कर्मणः तत्र न कर्म-
वशान्मन्त्राऽऽवृत्तिः । यत्र तु कर्माऽल्पं दीर्घो मन्त्रः तत्र तूष्णींभावेन कर्म पूरयितुं नेच्छेत् । याव-
त्कर्मकालं मन्त्रमुच्चार्य ततः परं तूष्णीं न तिष्ठेदित्यर्थः । तदेतस्य पक्षद्वयस्य क्रमाद्विवरणं नाऽप्र-
क्रान्तमिति यदवोचामेत्यादि । एवञ्च सति पक्षद्वयेऽपि कर्मादावेव मन्त्रोपक्रम इति गम्यते ॥१॥

नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति ॥२॥ यद्यु वा अपरिस्तीर्णा भवन्त्याहवनीयमेवाग्रे पुरस्तात्परिस्तृणात्यथ दक्षिणतोऽथ पश्चादथोत्तरतः ॥३॥ एवमेवान्वाहार्यपचनं परिस्तृणाति ॥४॥ एवं गार्हपत्यम् ॥५॥ अथाग्रेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वन्द्वं न्यञ्चि यज्ञायुधानि संसादयति ॥६॥ स्फ्यं च कपालानि चाग्निहोत्रहवणीं च शूर्पं च कृष्णाजिनं च शम्यां चोलूखलं च मुसलं च दृषदं चोपलां च जुहूं चोपभृतं च स्रुवं च ध्रुवां च प्राशित्रहरणं चेडापात्रं च मेक्षणं च पिष्टोद्वपनीं च प्रणीताप्रणयनं चाज्यस्थालीं च वेदं च दारुपात्रीं च योक्त्रं च वेदपरिवासनं च

१. '०पूरमिषेदिति' इति कै० सं० ।
२. 'वर्हिर्लवनः' इति कै० सं० ।
३. '०वर्त्तेताथायं' इति कै० सं० ।
४. 'विरम्येद्' इति कै० सं० ।

**धृष्टिं चेध्मप्रव्रश्चनं चान्वाहार्यस्थालीं च मदन्तीं च यानि चान्यानि पात्राणि तान्येवमेव द्वन्द्वं संसाद्य ।।७।।**

भा०—**नक्तं परिस्तरणं** ब्राह्मणवचनादाहुरिति पक्षान्तरस्य द्योतितत्वादितरपक्षः । उभयत्रायमेव क्रमः । **पूर्वाग्निरपरश्च** (तै० सं० १।६।७।२) इति वचनादवधारणं च । परिस्तरणविधिराचारात् सिद्धः दक्षिणा उपरि उत्तरा अधस्तात् पश्चिमा उत्तरेषामुपरि प्राञ्चौ, अपि च परिधौ **अध्यस्येद् दक्षिणमुपोहेदुत्तरम्** (बौ० श्रौ० २०।११) इति क्रमोऽप्याचारात् सिद्ध इति चेन् न, प्रागुदगारम्भापवर्गार्थत्वात् प्रादक्षिण्यवचनं चाचारात् सिद्धोपसंग्रहार्थं **परिस्तृणीत** (तै० ब्रा० ३।७।६।१) इति लिङ्गात् । परिस्तरणमन्त्र आध्वर्यवो **यजमानं भुनक्तु** (तै० ब्रा० ३।७।६।१) इति दर्शनात् । यद्येवं परिस्तृणाति इति नावक्ष्यत् परिस्तारयतीत्यवक्ष्यत्, अध्वर्योरस्या-प्रसङ्गात् तस्य च प्रकृतत्वात् कामं याजमानः स्यात् । यजमानं भुनक्त्विति त्वविरोधात् प्रैषस्य प्रैष्यश्चाध्वर्युरिति । परिस्तरणादिषु 'परिभोजनीयाः[1] ।।२-५।। **न्यञ्चि अधोबिलानि** ।।६।। स्फ्यादिविशेषानुक्रमणं सामान्यवचनेन सिद्धं द्वन्द्व-विशेषनियमार्थम् । अन्यग्रहणं योक्त्रमदन्तीवेदपरिवासनमेक्षणाद्युपसंग्रहार्थम् । पुनः द्वन्द्वग्रहणं परिभाषार्थम् । सर्वत्र सान्नाय्यपात्रादिन्यक्तद्वन्द्वाद्युपसंग्रहार्थम् ।।७।।

सा०—नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति । यद्यु वा अपरिस्तीर्णा भवन्त्या-हवनीयमेवाग्रे पुरस्तात्परिस्तृणात्यथ दक्षिणतोऽथ पश्चादथोत्तरतः । एवमेवान्वाहार्य-पचनं परिस्तृणाति । एवं गार्हपत्यम् । **अत्र नक्तं परिस्तीर्णा एव इत्येवकारेण नक्तं परिस्तरणे पुनः परिस्तरणं निवारयति । उपस्तीर्यः पूर्वश्च(तै०सं० १।६।७।२)इत्यादिब्राह्मण-गताऽऽहुरिति पदस्य प्रातःपरिस्तरणद्योतकस्य परिस्तरणसमुच्चयार्थत्वस्याप्यविरोधात् । अभि-युक्तास्तु, उभयत्राऽप्ययमेव क्रमः, पूर्वश्चाऽग्निरपरश्च (तै० सं० १।६।७।) इति वचनात्, आहवनीयमेवेत्यवधारणाच्चेति व्याचक्षते । तद् उपवसथ एवाग्नीन्यथोत्पन्नं परिस्तृणीयाद् (बौ०श्रौ०२०।४)इत्युदाहृतद्वैधवाक्यविरुद्धम् । अत एवाऽऽचार्येण यद्यु वा अपरिस्तीर्णा भवन्तीति पक्षान्तरविषयतयाऽऽहवनीयस्यैवाग्रे परिस्तरणं नियमितम् । ब्राह्मणप्रतीकस्य प्रातः परिस्तरण-विषयत्वेन वा, चशब्दद्वयमनियतद्योतनेन वाऽप्यविरोधः प्रतिपादितः । पुरस्तात्पूर्वस्यां दिशि, अथ दक्षिणत इत्यादिना प्रादक्षिण्येन परिस्तरणक्रम उक्तः । अत्राऽपि गृह्योक्तः परिस्तरणविधि-रनुसन्धेयः । द्वैधे विशेषः—**अग्नीनां परिस्तरण इति । सूत्रं शालीकेः । आख्यातमौपम-न्यवस्य । अत्रो ह स्माऽऽह बोधायनो गार्हपत्यमेवाग्रे पुरस्तात्परिस्तृणीयादथ दक्षि-णतोऽथ पश्चादथोत्तरतः । एवमेवाऽन्वाहार्यपचनं परिस्तृणीयादेवमाहवनीयमिति (बौ० श्रौ० २०।५) । **अनेन प्राथमिकं क्रमं निर्दिशति । आहवनीयादिक एव क्रम इति शालीकेः सूत्रम्, औपमन्यवस्याऽपीदमेवाऽऽख्यातम् । भावप्रधानो निर्देशः । आख्यानमेव आख्यातम् । अन्यद्बोधायनस्य मतमित्यर्थः ।।२-५।।**

---

१. 'परिभोजीयः' 'परिभोजनीयेभ्यः' इति कोशेषु ।

अथाऽग्रेण गार्हपत्यं तृणानि संस्तीर्य तेषु द्वन्द्व न्यञ्चि यज्ञायुधानि संसादयति। तृणानीत्येतत्परिभोजनीयदर्भोपलक्षणम्। न्यञ्चि अधोबिलानि। द्वैधे विशेषः— पात्राणां सादन इति। सूत्र शालीकेः। अत्रो ह स्माऽऽह बोधायन उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु पात्राणि सादयेदिति। उत्तरतोऽग्न्यगारस्य पात्राणि सादयेत्। तेषां यथार्थमाददीतेति राथीतरः (बौ० श्रौ० २०।५) इति। यथार्थं यथाप्रयोजनम् ॥६॥ द्वन्द्वनियमनाय पात्राणां क्रमं नियमयति—स्फ्यञ्च कपालानि चाऽग्निहोत्रहवणीञ्च शूर्पञ्च कृष्णाजिनञ्च शम्याञ्चोलूखलञ्च मुसलञ्च दृषदञ्चोपलाञ्च जुहूञ्चोपभृतञ्च स्रुवञ्च ध्रुवाञ्च प्राशित्रहरणञ्चेडापात्रञ्च मेक्षणञ्च पिष्टोद्वपनीञ्च प्रणीताप्रणयनञ्चाऽऽज्यस्थालीञ्च वेदञ्च दारुपात्रीञ्च योक्त्रञ्च वेदपरिवासनञ्च धृष्टिञ्चेध्मप्रव्रश्चनञ्चाऽन्वाहार्यस्थालीञ्च मदन्तीञ्च, यानि चाऽन्यानि पात्राणि तान्येवमेव द्वन्द्वं संसाद्य। योक्त्रादीनां कल्पपाठाऽभावपक्षे त्वन्यानीत्यनेनोपसङ्ग्रहः। तत्सद्भावे तु उपांशुयाजचरुपक्षे चरुस्थालीं तदङ्गञ्च मेक्षणं वृषारवश्चेत्यादीनि संगृह्यन्ते। पुनर्द्वन्द्वग्रहणाद् अस्य परिभाषात्वं द्योतयति। तेन च सर्वत्र सर्वदैव च द्वन्द्वासादनं लभ्यते। कदाचित्पात्रस्याऽयुग्मत्वे दर्भेण युग्मीकरणञ्च द्योत्यते ॥७॥

ब्रह्माणं दक्षिणत उपवेश्य ॥८॥ पृष्ठ्यां स्तृणाति संततां गार्हपत्यादाहवनीयाद्—'यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्य स्तृणामि (तै० ब्रा० ३।२।४।१) इति ॥९॥ अथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे अप्रतिच्छिन्नाग्रे अनखच्छिन्ने—'इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः। आप्याययन्तौ संचरतां पवित्रे हव्यशोधने (तै० ब्रा० ३।७।४।११) इति ॥१०॥ अथैने अद्भिरनुमार्ष्टि—पवित्रे स्थो वैष्णवी स्थो यज्ञिये स्थो वायुपूते स्थो विष्णोर्मनसा पूते स्थो यज्ञस्य पवने स्थः(तै० ब्रा० ३।७।४।११) इति ॥११॥

भव०—ब्रह्माणं दक्षिणत आहवनीयस्य। ततोऽपरेण यजमानायतनमुभयत्र तृणास्तरणम्, 'अथ आसनात् तृणं निरस्यति' (बौ०श्रौ०३।२३।२) इति दर्शनात् ॥८॥ पृष्ठ्येति मध्ये तृणास्तरणस्याख्या ॥९॥ तृणप्रस्तावाद् ब्राह्मणाच्च सिद्धे बर्हिर्ग्रहणं स्तरणार्थग्रहणार्थम्। पृष्ठ्या तृणानाम् (बौ० श्रौ० २०।५) इत्युपक्रमाच्च पवित्रं स्तरणार्थादिति गम्यते। समग्रहणं परिस्तरणसाम्यार्थमनुमार्जने भेदात् समुच्चयावचनात्, भिन्नार्थत्वाच्च। पवित्रग्रथने नियमोऽर्थकृतत्वात्। नियमो वा आचारात् ॥१०॥

सा०—एतस्मिन्काले ब्रह्मादीनामायतनेषु धर्मोक्तेषु तत्तदासनानि परिकल्पयेत् तत्तदागमनकालेषु वा। तथा चोक्तम्—दक्षिणेनाहवनीयं ब्रह्मायतनम्। तमपरेण यजमानस्य।

[उत्तरेणाऽऽहवनीयं प्रणीतायाः[1]]। उत्तरां श्रोणीमुत्तरेण होतुः। उत्कर आग्नीध्रस्य। जघनेन गार्हपत्यं पत्न्याः। तेषु काले काले एव दर्भान्संस्तीर्य[2]। 'एकैकस्योदकमण्डलुरुपात्तस्स्यादाचमनार्थः (बौ० ध० १।१५।२३-२८) इति। ब्रह्माणं दक्षिणत उपवेश्याऽऽहवनीयादित्युक्तम्। ब्रह्मणो नियमविशेषान् तत्प्रकरणे वक्ष्यति। तदागमनमार्गस्तु धर्मे विकल्पितः—अग्रेणाऽऽहवनीयं ब्रह्मयजमानौ प्रतिपद्येते। जघनेनाऽऽहवनीयमित्येके (बौ० ध० १।१५।२१-२२) इति। अयमेवाऽर्थो द्वैधे दर्शितः—ब्रह्मण उपवेशन इति। व्यवेत्य दक्षिणेनाऽऽहवनीयममुपविशेदिति बोधायनः। अव्यवेत्यैव दक्षिणेनाऽऽहवनीयमिति शालीकिः (बौ० श्रौ० २०।५)। यजमानस्योपवेशन इति। व्यवेत्य दक्षिणत उपविशेदिति बोधायनः। अव्यवेत्यैव दक्षिणत उपविशेदिति शालीकिः (बौ० श्रौ० २०।५)। व्यवेत्य, व्यवायं कृत्वा, जघनेनाऽऽहवनीयमागमने सत्यग्नेर्व्यवायः कृतो भवति। अग्रेणाऽऽवनीयमागमनेऽव्यवाय इत्यर्थः ॥८॥ पृष्ठ्यां स्तृणाति सन्ततां गार्हपत्यादाऽऽहवनीयात्—'यज्ञस्य सन्ततिरसि···स्तृणामि' इति। पृष्ठ्येति वेदिकरणे तन्मध्यप्रसारितरज्जुनाम, एतदाश्रयतया वेदिमध्य एव पृष्ठ्येत्युपचर्यते। वेदिमध्ये तृणास्तरणमेव पृष्ठ्येति केचित्। तत्र स्तृणातीति विधानं कथमुपपद्यत इति चिन्त्यम्। अत एव द्वैधे पृष्ठ्यावति सोम एव स्तरणपक्षोऽङ्गीकृतः। तथा हि—पृष्ठ्यायै स्तरण इति। सूत्रं बोधायनस्य। सोम एव पृष्ठ्यां स्तृणीयादिति शालीकिः (बौ० श्रौ० २०।५) ॥९॥

अथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे अप्रच्छिन्नाग्रे[4] अनखच्छिन्ने—'इमौ प्राणापानौ···शोधने' इति। बर्हिषः परिभोजनीयात्, पृष्ठ्यायां स्तीर्णाद्वा आदाय पवित्रे कुरुते। तयोर्विशेषणानि प्रादेशमात्रे इत्यादीनि। समे इति परिणाहाऽपेक्षया, दैर्घ्यसामान्यस्य प्रादेशमात्रे इत्यनेनैवोक्तत्वात्। विस्रस्य पवित्रे (बौ० गृ० १।३।११) इत्युक्तत्वात् ग्रन्थिकरणमिति केचित्। अत्राऽनुक्तत्वात्तदकरणमित्यन्ये। तथा च द्वैधे—पवित्रयोः करण इति। सूत्रं बोधायनस्य। [5]पृष्ठ्यातृणानामित्यौपमन्यवः। येऽन्येऽनुपयुक्ताः कुशाः स्युस्तेषामिति शालीकिः (बौ० श्रौ० २०।५)। कर्मान्ते विशेषः—'किंदेवत्ये उ खलु पवित्रे किंपूते भवत इति। वैष्णवी वायुपूते इत्येव ब्रूयात्। अनखच्छिन्ने स्याताम् (बौ० श्रौ० २४।२५। १२-१४) इति ॥१०॥ अथैने अद्भिरनुमार्ष्टि—'पवित्रे स्थो···पवने स्थः' इति। अनुमार्ष्टि, मूलादारभ्याऽग्रान्मार्जनं करोति। तच्चाङ्गुष्ठोपकनिष्ठिकाभ्यां कार्यम्। तथा चाऽऽश्वलायनः—गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्याम् (आश्व० श्रौ० १।३।३) इति ॥११॥

---

१. नायं पाठोऽत्र विद्यते बनारस सं०।

२. '०संस्तृणाति' इति ब० सं०।

३. 'एकैकस्य चोदक०' इति ब० सं०।

४. 'अप्रतिच्छिन्नाग्रे' इति कै० सं०।

५. 'पृष्ठ्यायास्तृणा०' इति कै० सं०।

अथोत्तरेण गार्हपत्यमुपविश्य कंसं वा चमसं वा प्रणीताप्रणयनं याचति ॥१२॥ तस्मिंस्तिरःपवित्रमप आनयन्नाह **'ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छ'** इति ॥१३॥ प्रसूतः समं प्राणैर्धारयमाणोऽविषिञ्चन् हृत्वोत्तरेणाहवनीयं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य ॥१४।

**भव०**–वा शब्दो गोदोहनादिपरिग्रहार्थः । प्रयोजनार्थानां पात्राणां संस्कृताभिः प्रोक्षणमिति केचित्, तूष्णीमिति केचित्, नैवापरे । प्रणीतानामुत्पवनादि केचिदिच्छन्ति । **रश्मिपवित्राभिरिति** लिङ्गान्नेत्यन्ये, लिङ्गं चादित्यरश्मिशुद्धाभिरित्यत्र विसंभवति न चोक्तमिहेति ॥१२॥ अध्वर्युब्रह्मयजमानानां वाग्यमः । प्रैषाद्यजमानस्य **स वाचंयमो भवतीति** ब्राह्मणम् । **हविष्कृता वाचं विसृज्य** (बौ० श्रौ० ३।१२।४) इदं चेदं च करोतीत्येतत् समानकर्तृकत्वादध्वर्योस्तद्वदित्वेति यजमानस्यैव प्रवृत्तस्य मन्त्रविधाने विच्छेदाशङ्कायाम् अविच्छेदार्थमुक्तम् । **आ हविष्कृतः** (बौ० श्रौ० ३।२४।३) इत्यवधिपरिच्छेदार्थम् ॥१३॥ तत आरम्भे तत्रैव वक्तव्यं स्यात्, कालविप्रकर्षोऽनर्थकः स्याद्, अत उत्तरेणाऽऽहवनीयं ब्रह्मणा समं प्रणयनमन्त्रो **'अनयापः प्रणयामीति'** (बौ० श्रौ० २४।२५।१५) अनयेति करणभूतां **'पृथिवीं मनसा ध्यायेत्'** (बौ० श्रौ० २४।२५।१५) इति एवं मनसा प्रणयनम् । एवं मन्त्रश्रोक्तो ब्राह्मणार्थश्च परिगृहीतो भवति । उभयं कर्मान्त उक्तम् । पूरयित्वा प्रणयेद् **अविषिञ्चन्निति** । विशेषशङ्का साधीयसी पूरणे भवति अप्रमादार्थमिति चेत्; न, अन्यत्र दर्भं कुर्वन्नित्यादौ यत्र करणं तत्रापि वक्तव्यं स्यात् । अस्मिन्नभिप्राये **पूर्णपात्रम्** (बौ० श्रौ० ३।२०।६) इति च सिद्धवदन्ते वचनात्, पाकार्थमपनयेन क्षीयेत् तदिह पूर्णं उपपद्यते ॥१४॥

**सा०**–अथोत्तरेण गार्हपत्यमुपविश्य कंसं वा चमसं वा प्रणीताप्रणयनं याचति । परिकर्मिणमिति शेषः । वा शब्दाद् गोदोहनादीनां कामनानुबन्धानामप्युपसङ्ग्रहः, अप्रोक्षितानां पात्राणां कर्माऽनर्हतया इदानीमपि तूष्णीं सरकृताभिरद्भिः प्रोक्षणमिति केचित् । असंस्कृताभिरित्यन्ये । प्रोक्षितैरेवेत्यपरे ॥१२॥ तस्मिंस्तिरःपवित्रमप आनयन्नाह–'ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छ' इति । उपलक्षणञ्चैतत् । अध्वर्युब्रह्मणोरपि वाङ्नियमनं द्रष्टव्यम् । तथा हि—हविष्कृता वाचं विसृज्य (बौ० श्रौ० ३।१२।४) इत्याग्रयणादिषु दर्शनात् । तन्न्यायेनात्राऽपि वाङ्नियमनमुन्नेयम् । ब्रह्मत्वप्रकरणे—स वाचंयमो भवति प्रणीतासु प्रणीयमानास्वा हविष्कृतः (बौ० श्रौ० ३।२४।३) इति । तथा द्वैधेऽपि—स वाचंयमो भवति प्रणीतासु प्रणीयमानास्वा हविष्कृतः । अन्तर्हंसन्नतेषु सम्पातेषु सम्भाषेतेति बोधायनः । विसृष्टवागिति शालीकिः (बौ० श्रौ० २०।५) इति । सोऽध्वर्युरा हविष्कृत आह्वानादिति शेषः । हविष्कृदेहीति प्रैषवचनपर्यन्तमिति यावत् । एतेषु सम्पातेष्वन्तर्हंसन्सम्भाषेत । अनेन धर्मोक्तत्रैविध्यवृद्धबहुश्रुतादिसन्निधिं परामृशति । अत्र प्रणीतोदकस्योदगग्रेण पवित्रेणोत्पवनं केचिदिच्छन्ति ॥१३॥

प्रसूतः समं प्राणैर्धारयमाणोऽविषिञ्चन् हृत्वोत्तरेणाऽऽहवनीयं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य । प्रसूतः अनुज्ञातः, ब्रह्मणेति शेषः । ब्रह्माऽपि प्रसौति—'देवस-वितः···ओं प्रणय' इति (बौ० श्रौ० ३।२४।१-२) अनुजानाति । समं प्राणैः प्राणसञ्चरण-प्रदेशसम्मितं धारयमाणः, अथवा प्राणैः सह प्रणीतां धारयमाणः नियतप्राण इत्यर्थः । अविषि-ञ्चन्नित्यनेन पूर्णतां द्योतयति । यत्र पूर्णतानियमाऽभावस्तत्राऽविषिञ्चन्निति न ब्रवीति, यथा—वर्त्म कुर्वन्नुदगुद्वास्य (बौ० गृ० १।३।११) इत्यादौ । अत्रैतत्पूर्णपात्रं याचति (बौ० श्रौ० ३।२०।६)इति सिद्धवदनुवादाच्च । दर्भेषु आसनकाले वा इदानीं वाऽऽस्तीर्णेषु सादयित्वेति । अत्र कर्मान्ते विशेषः—प्रणीताः प्रणयन्ननयाऽपः प्रणयामि[1] इति पृथिवीं मनसा ध्यायेत् । समान्येतानि कुर्यात् प्रणीता आहवनीयं ब्रह्माणमिध्माबर्हिरिति यज्ञस्य शिर इत्येतदाचक्षते (बौ० श्रौ० २४।२५।१५-१६) । प्रणयन् प्रापयन् । अनयेति करणभूतां पृथिवीं मनसा ध्यायेत् । मन्त्रोच्चारणकाल एवेति गम्यते । समानि एकपङ्क्त्यापन्नानि, एतत् समुदितं यज्ञशिर इत्याचक्षते इति समीकरणश्रुतिः ।।१४।।

पवित्रमादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यादत्ते दक्षिणेनाग्निहोत्र-हवणीं सव्येन शूर्पं 'वेषाय त्वा' (तै० सं० १।१।४।१) इति ।।१५।। गार्हपत्ये प्रतितपति—'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः' (तै० सं० १।१।४।१) इति त्रिः ।।१६।। अथ जघनेन गार्हपत्यमग्निष्ठमनो भवति ।।१७।। तस्योत्तरां धुरमभिमृशति—'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः' (तै० सं० १।१।४।१) इति ।।१८।। अनोऽभिमन्त्रयते—'त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममहुतमसि हवि-र्धानं दृंहस्व मा ह्वाः' (तै० सं० १।१।४।१) इति ।।१९।।

भव०—वेषाय त्वेति शूर्पादाने मन्त्र एनदित्यर्थवादादानन्तर्याच्च । सावित्रेणैकेषां स्रुगादीनां मन्त्रे वचनाद्बीजेषु तन्त्रं स्रुगादानमिति । तत्रोपपद्यते समन्त्रकत्वेऽमन्त्रकत्वे वा विशेषाभावात् सावित्रस्यानाम्नातत्वादयमेवोभयार्थमित्यपरे । परैराम्नाताध्या-हारात् समुदायापेक्षत्वाच्च चशब्दश्च समुदायविशेष एवोपपद्यते ।।१५।। अग्निष्ठम् अग्निसमीपस्थितम् ।।१७।। अक्षपालिम् अक्षाग्रम् । प्रउगे पूर्वार्द्धे पदमात्रे ।।१८।।

सा०—पवित्रमादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य । सर्वत्राऽप्ययं नियमः प्रत्यङ्मुखो गच्छन्प्रदक्षिणमावर्तेत इति । तथा च धर्मे— प्राङ्मुखश्चेद्दक्षिणमंसमभिपर्यावर्तेत प्रत्यङ्-मुखः सव्यम् (बौ० ध० १।१५।१३-१४) इति । दक्षिणांऽसस्याऽभितः पर्यावर्तनादप्रदक्षिणमा-वृत्तिः वामांऽसस्याभितः पर्यावर्तनात्प्रदक्षिणमावृत्तिरिति । तदेतदावृत्तिद्वयं क्रमात्, प्रत्यङ्मुखस्य

1. 'प्रणमि' इत्यपपाठः म० सं० ।

प्रागाद्रवणे, प्राङ्मुखस्य प्रत्यङ्ङाद्रवणे नियतम्। उभयत्राऽप्यावर्तने विहाराभिमुखो भवेदित्यर्थः। आदत्ते दक्षिणेनाऽग्निहोत्रहवणीं सव्येन शूर्पं वेषाय त्वा' इति। अयं मन्त्रः शूर्पादाने, वेषाय त्वेत्यादत्त इति लिङ्गादिति। केचित्तु देवस्य त्वेत्यादिना स्रुगादानमिच्छन्ति। तस्य च फलं नानाबीजत्वे स्रुगादानस्य तन्त्रत्वमिति। तदपरे न क्षमन्ते, अमन्त्रत्वे समन्त्रत्वे वा स्रुगादानस्य तन्त्रत्वं विशेषाभावादिति। केचित्तु सावित्रस्याऽत्रानाम्नानाद्वेषाय त्वेत्येतदेवोभयार्थमिच्छन्ति। आग्रयणे बीजद्वयं, देवसुवां हविःषु बहुबीजानि, तत्र तत्र बीजसङ्ख्याऽऽनुगुण्येन शूर्पद्वित्वे बहुत्वे वा तदानुगुण्येन वेषाय वां वेषाय व इत्यूहस्य शूर्पप्राधान्येनैव दर्शनात्, तद्विषय एव अयं मन्त्र इत्यवगच्छामः ॥१५॥ गार्हपत्ये प्रतितपति—'प्रत्युष्टं रक्षः ···अरातयः' इति त्रिः। स्पष्टम् ॥१६॥ अथ जघनेन गार्हपत्यमग्निष्ठमनो भवति। तस्योत्तरां धुरमभिमृशति—'धूरसि···धूर्वामः' इति। अग्निष्ठं अग्निसमीपे स्थितं अनः शकटं तं प्राप्य, तस्योत्तरां धुरमभिमृशति। धुरम् अनडुद्वहनप्रदेशं युगान्ताग्रम् ॥१७-१८॥ अनोऽभिमन्त्रयते—'त्वं देवानामसि···मा ह्वाः' इति। स्पष्टम् ॥१९॥

अथ 'विष्णोः क्रमोऽसि' (तै० सं० १।७।७।२) इति दक्षिणामक्षपालिं क्रमित्वाभ्यारुह्य प्रउगे शूर्पं निदधाति ॥२०॥ शूर्पे स्रुचं स्रुचि पवित्रे ॥२१॥ अथ पुरोडाशीयान् प्रेक्षते—'मित्रस्य त्वा चक्षुषा प्रेक्षे, मा भेर्मा संविक्था, मा त्वा हिंसिषम्' (तै० सं० १।१।४।१-२) इति ॥२२॥ 'उरु वाताय' (तै० सं० १।१।४।२) इति तृणं वा किंशारु वा निरस्यति ॥२३॥ अथाप उपस्पृश्य दशहोतारं व्याख्याय हविर्निर्वप्स्यामीति यजमानमामन्त्र्य पवित्रवत्याग्निहोत्रहवण्या निर्वपति। २४॥

भव०—दर्शपूर्णमासादिषु ग्रहो भवतीति सार्थबादेन विधानात् समस्तोपदेशो वा अहोमे यावत् पदमितिवचनात् स्त्राहाकारो निवर्तेत होमार्थत्वात् न वा बर्हिःप्रोक्षणादिषु दर्शनात्। निर्वपणे यजमानग्रहणं केचित् कुर्वन्ति, आमन्त्र्येति वचनम्, निर्वप्स्यामीति चामन्त्रत्वाद् ब्रह्मनिवृत्त्यर्थं चेति। स्वामित्वात्तस्यैवानुज्ञाप्रसङ्गो यथाग्निहोत्रे ब्रह्मणोऽभावात्। साधारणत्वादाम्नानात् स्वामित्वाच्च यजमानप्रसङ्गे युज्यते नामग्रहणम् ॥२४॥

सा०—अथ 'विष्णोः क्रमोसि' इति दक्षिणामक्षपालिं क्रमित्वाऽभ्यारुह्य। अक्षपालिम् अक्षाग्रं, क्रमित्वा पदावष्टम्य, शकटमपसव्यं क्रमित्वेति गम्यते। प्रउगे शूर्पं निदधाति। प्रउगे शकटस्य पूर्वभागे, कूबरे इत्यर्थः ॥२०॥ शूर्पे स्रुचं स्रुचि पवित्रे निदधातीत्यनुषज्यते ॥२१॥ अथ पुरोडाशीयान्प्रेक्षते—'मित्रस्य त्वा···हिंसिषम्' इति। पुरोडाशीयाः पुरोडाशार्था व्रीहयो यवा वा। तथा च कर्मान्ते—अनादिष्टं हविः। आदेशादेवाऽन्यद् व्रीहियवेभ्यो जानीयात् (बौ० श्रौ० २४।१।३-४)। व्रीहियवेभ्योऽन्यद्धविरादेशात् निर्देशा-

देव जानीयात् । अनादेशे तु व्रीहयो यवा वा इत्यर्थः ॥२२॥ 'उरुत्राताम्' इति तृणं वा किंशारु वा निरस्यति । किंशारु व्रीहिशूकः ॥२३॥

अथाऽप उपस्पृश्य । निरसनेऽपि पुनरप उपस्पृश्येति विधानम्, तदभावे श्रौतप्रायश्चित्तविधानार्थमित्युक्तम् । दशहोतारं व्याख्याय । अत्र सग्रहः सस्वाहाकार, अग्रहोऽस्वाहाकारो वा । दशहोतेति, चित्तिः स्रुग् (तै० आ० ३।१) इत्यनुवाकः । वाचस्पते विधे नामन् (तै० आ० ३।१) इत्यादिको ग्रहः । तेन सहितः सग्रहः । तद्रहितोऽग्रहः । तत्र होमार्थे सस्वाहाकारः सग्रहश्च । अहोमार्थे ग्रहस्वाहाकारयोर्विकल्पः । तथा च द्वैधे होतॄणां व्याख्यान इति । सग्रहानृते स्वाहाकारानित्येकम् । ऋते ग्रहानन्ते[1] स्वाहाकारानित्येकम् । सर्वानित्येकम् पूर्वः कल्पो बोधायनस्य । उत्तरावुभौ शालीकेरिति (बौ० श्रौ० २०१५) । अयं विकल्पः सर्वहोतृसाधारणः । अस्य जपकालो द्वैधे विकल्पितः—दशहोतुर्व्याख्यान इति । प्रणीताः प्रणीय प्रत्यङ् द्रवन्दशहोतारं व्याचक्षीतेत्याचार्ययोः । मुष्टिमेव ग्रहीष्यन्नित्यौपमन्यवः (बौ० श्रौ० २०१५) । आचार्ययोर्बोधायनशालीक्योः ।

हविर्निर्वप्स्यामीति यजमानमामन्त्र्य, पवित्रवत्याऽग्निहोत्रहवण्या निर्वपति । अत्र यजमान निर्वप्स्यामीति ब्रह्मणो व्यावृत्त्यर्थमिति केचित् । अन्ये तु यजमानस्य प्राधान्यादेवाऽग्निहोत्रवत्तत्प्राप्तेः यजमानग्रहणं नेच्छन्ति । द्वैधे विशेषः—निर्वपण इति । सूत्रं शालीकेः । अत्रो ह स्माऽह बोधायनः शकटादेव निर्वपेत् । धुरौ व्यभिमृश्याक्षपालिं क्रामेत्—'विष्णुस्त्वा क्रमताम्' इति । पुरोडाशीयान्प्रेक्ष्याऽभिमृशेत्—'यच्छन्तां पञ्च' इति । त्रिर्यजुषा सक्तूतूष्णीं चतुरवत्तिनाम् । त्रिर्यजुषा द्विस्तूष्णीं पञ्चावत्तिनाम् । सर्वानेव यजुषेति कात्यः (बौ० श्रौ० २०१५) । पञ्चावत्तस्य प्रक्रमण इति । निर्वपणात्पञ्चावत्तं प्रक्रमेदिति बोधायनः । अवदात इति शालीकिः । प्रदानत इत्यौपमन्यवः । चातुष्प्राश्यादित्यौपमन्यवीपुत्रः (बौ० श्रौ० २०१६) । निर्वपणविषये इत्येतत्पूर्वसूत्र शालीकेर्मतम् । बोधायनस्त्वेवमाह-यदि शकटादेव निर्वपेत् धुरौ व्यभिमृश्योत्तरां दक्षिणाञ्च धुरं विविच्य मन्त्राऽऽवृत्याऽभिमृश्याक्षाग्रं विष्णुस्त्वेति मन्त्रेण क्रमेत् । पूर्ववन्मन्त्रेण पुरोडाशीयान्प्रेक्ष्य, यच्छन्तां पचेत्यभिमृशेत् । केचिन्मुष्टिग्रहणेऽप्येतदावर्तयन्ति । त्रिर्यजुषा सावित्रेण । पञ्चावत्तिनामिति[2] वत्सविदार्ष्टिषेणगणपरिपठितानां द्विस्तूष्णीमिति पञ्चावदानसम्पत्तिः । कात्यस्तु पक्षद्वयेऽपि सर्तानेव मुष्टीन्यजुषैव निर्वपेत् । निर्वापमारभ्य पञ्चावदानधर्मं इति बोधायनः । अवदानमारभ्येति शालीकिः । आज्यभागमारभ्येत्यौपमन्यवः । इडाया आरभ्येत्यौपमन्यवीपुत्रः ॥२४।

यद्यु वै नानो भवति जघनेन गार्हपत्यं स्फ्यं निदधाति स्फ्योपरि पात्रीं पात्र्यां पुरोडाशीयानावपति ॥२५॥ अथ पूर्वार्धं पात्र्या अभिमृशति —

१. 'नन्तः स्वा०' इति कै० सं० ।
२. द्र०—बौ० श्रौ० प्रवर-५ ।

'धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृंहस्व मा ह्वाः' (तै० सं० १।१।४।१) इति ॥२६॥ अथ पुरोडाशीयान् प्रेक्षते—'मित्रस्य त्वा चक्षुषा प्रेक्षे। मा भेर्मा संविक्था मा त्वा हिंसिषम्' (तै० सं० १।१।४।१) इति ॥२७॥ 'उरु वाताय' (तै० सं० १।१।४।२) इति तृणं वा किंशारु वा निरस्यति ॥२८॥ अथाप उपस्पृश्य दशहोतारं व्याख्याय-हविर्निर्वप्स्यामीति यजमानमामन्त्र्य पवित्रवत्याऽग्निहोत्रहवण्या निर्वपति ॥२९॥ 'ओं निर्वप' इति यजमानोऽनुजानाति ॥३०॥ अथ निर्वपति ॥३१॥ 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' (तै० सं० १।१।४।२) इति त्रिरेतेन यजुषा ॥३२॥ सकृत्तूष्णीम् ॥३३॥

भव०—यद्युवा इत्यभावविकल्पः। शकटमन्त्रः पात्र्यां विधानादाचार्यस्य[1] अनुष्ठीयते। अर्थात् स्रुगादिहस्तेनाभिमर्शनमारुह्य स्रुचः शूर्पे निधानमिति वचनात् पात्र्यां तदभावात् निधाय पवित्रेऽभमन्त्रणं स्रुचः करणत्वात् सामर्थ्यत्वात्। शूर्पम् अविकरणम् अतो निर्वपणे मन्त्रः। आदाने हि तदुभयाभावादर्थप्राप्तत्वाच्च निर्वपणे मन्त्रः सन्निपात्य आदाने हस्तः करणं स्रुगधिकरणं स्यात् तदर्थत्वादादाने मन्त्राः सन्निपात्या इति चेन्न, प्राक्तनेषु प्रसङ्गात्। चतुर्मुष्टिनिर्वापस्यैक पदार्थत्वादेकस्य परिसमाप्य स एवमेवानुपूर्वमिति, चतुर्मुष्टिनिर्वापानुसमयः। समनुपूर्वमिति मुख्यक्रमेणाङ्गक्रमप्राप्तौ सह चोदनायां निर्वर्तितायां मन्त्राम्नानात् प्राप्तक्रमोऽनूद्यते ॥२५-३३॥

सा०—यद्यु वै नाऽनो भवति जघनेन गार्हपत्यं स्फ्यं निदधाति स्फ्योपरि पात्रीं पात्र्यां पुरोडाशीयानावपति। अथ पूर्वार्धं पात्र्या अभिमृशति—'धूरसि···मा ह्वाः' इति। अथ पुरोडाशीयान्प्रेक्षते—'मित्रस्य त्वा···सिषम्' इति। 'उरु वाताय' इति तृणं वा किंशारु वा निरस्यति। अथाऽप उपस्पृश्य दशहोतारं व्याख्यायहविर्निर्वप्स्यामीति यजमानमामन्त्र्य पवित्रवत्याऽग्निहोत्रहवण्या निर्वपति। 'ओं निर्वप'—इति यजमानोऽनुजानाति। अथ निर्वपति। अनसोऽभावपक्षे विकल्पः। यद्यपि शकटाऽभावे तन्मन्त्रस्य लोपो युक्तः, तथाप्याचार्यवचनप्रामाण्यात् धूरसीत्यादीनां पात्र्यां विनियोगः। यावदाम्नातस्यैव विनियोगो यथा स्यादिति पुनराम्नातम्। 'ओं निर्वप' इति यजमानोऽनुजानातीति सन्निहित

१. अतोऽग्रे 'विधानात्' इत्यधिकं पदं कोशेषु।

इति शेषः। असन्निहितश्चेद्यजमानस्तत्र विशेषो द्वैधे दर्शितः—प्रवसतो याजमान इति। स ह स्माऽऽह बोधायनः सहयाजमानः खल्वयं यजमानः प्रवसति। स यत्र स्यात्तदैनं[1] ध्यायेत्। स यदि विसंस्थित आगच्छेत् कृतमनुमन्त्र्य कर्मान्तेन प्रक्रामेदिति। अत्रो ह स्माऽऽह शालीकिः यद्यस्य [2]पुत्रोऽन्तेवासी वाऽलं कर्मणि[3] स्यात्तं तत्र प्रेष्येत्। स यदि विसंस्थित आगच्छेत्कृतान्ताद्वा प्रक्रामेन्न वाऽऽद्रियेत[4]। उभौ त्वेव यजमानभाग प्राश्नोयातामिति (बौ० श्रौ० २०।२)। याजमानमन्त्राः प्रवसतो यजमानस्यैव जपार्हाः। तत्र हेतुमाह सहयाजमान इत्यादि। याजमानैः सह वर्तत इति सहयाजमानः प्रवसति। स यजमानो यत्र देशे स्यात्तदा याजमानकाले एनं यजमानं ध्यायेत्। अध्वर्युरिति शेषः। स यजमानो यद्यपरिसमाप्ते कर्मणि आगच्छेत्, आगमनात्पूर्वं कृतं कर्माऽनुमन्त्र्य कर्मशेषेण प्रक्रामेत्। कर्मशेषमनुतिष्ठेदित्यर्थः। शालीकिमते तु अस्य यजमानस्य पुत्रोऽन्तेवासी वा कर्मणि यदि समर्थः स्यात्तत्र यजमानस्थाने तं प्रेष्येत्, स एव यजमानवदनुमन्त्रणादि कुर्यादिति गम्यते। एवं पुत्रेऽन्तेवासिनि वा यजमानस्थाने नियुक्ते सति तस्य तत्कर्मणि विसंस्थिते अपरिसमाप्ते यदि यजमान आगच्छेत्[5] ॥२५-३३॥

एतामेव प्रतिपदं कृत्वा—'अग्नीषोमाभ्याम्' (तै० सं० १।१।४।२) इति पौर्णमास्याम्—'इन्द्राय वैमृधाय' इति च 'इन्द्राग्निभ्याम्' इत्यमावास्यायामसंनयत 'इन्द्राय' इति संनयतो 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति ॥३४॥

भव०—अग्नीषोमाभ्यामिति वैमृधस्यानुषङ्गेण पूरणं दर्शयति। ऐन्द्राग्नादिषु चार्थप्राप्तौ अत एवमेवेति सदेवताधिकारस्य मन्त्रस्य प्रमाणमकुर्वन् वचनाभावे प्रकृताबूहो नास्तीति दर्शयति। निर्वापे देवतेतिकर्तव्यताविशिष्टाद्यतिदिशति। वैमृधसमानतन्त्र इह वचनात्, पात्र्यां द्वेधोपस्तृणीते। **पौर्णमासवैमृधाभ्यामिष्ट्वा** (बौ० श्रौ० २४।१७।१) इति भिन्नतन्त्रत्वं च। समानतन्त्रत्वमिह, चतुर्दशे च भेदः **पौर्णमासवैमृधाभ्यां यजते** (तु०—मा० श्रौ० ४।३।४) इति प्रथममेव प्रयोगः तथा चातुर्मास्यादिषु तथा **संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपेदिति** शाखान्तरे तथा **यद्वैमृधः पूर्ण-**

---

१. '०दैनं मनसा ध्या०' इति कै० सं०।

२. 'पुत्रो वान्ते०' इति कै० सं०।

३. '०कर्मीणः' इति कै० सं०।

४. 'प्रक्रामेन्नां वा द्रियेत' इति कै० सं०।

५. अत्र पुटमात्रं त्रुटितमस्ति। तया च "अत्र पुटमात्रं त्रुटितमस्ति" इत्येवं सर्वेषु कोशेषु लिखितं वर्तते।

**मासेऽनुनिर्वाप्यः** (तै० सं० २।५।३।१) इति कालवचनत्वात्। कर्मवचनत्वे आधारत्वासम्भवात् सम्बन्धे षष्ठ्या भवितव्यम्। ततश्च **'यदाग्नेयोऽष्टाकपालः'** (तै० सं० २।६।३ ३) इत्यादिष्विव कालविधानादनुशब्दश्चाग्नेयात् प्रथममपाठात् पश्चात् प्रयोगार्थं इति समानतन्त्रत्वे गम्यते। तथा अनित्यश्च शाखान्तरे दर्शनाद् **यदि निर्वपेदन्वेव निर्वपेदिति**। एवशब्दस्तन्त्रभेदाभावख्यापनासमर्थं इति प्रक्रमनियमार्थम्। यद्वैमृध इति नित्यतावचनाद्विकल्पः तस्य च। इह च अग्नीषोमाभ्यामिन्द्राय वैमृधायेति च पौर्णमास्यामिति वक्तव्ये व्यवधानकृतं ताभ्यां तुल्यत्वार्थमनुल्यत्वम्। तन्त्रभेदख्यापनार्थमिति चेन्न। पौर्णमासवैमृधाभ्यामिति नाख्यापितत्वात्। तथा सोऽनिष्ठ्वेव पौर्णमासीमित्युपक्रम्य त्रयोदशेऽहनि पौर्णमासेन हविषा यजते तेनास्यानिष्टा भवतीति नित्यत्वे वैमृधस्य इष्टानिष्टयोर्विशेषाभावात् त्रयोदशेऽहनि पौर्णमासेनेत्येवं सिद्धम्। अथानित्यं प्रक्रमनियमात्। यादृशं प्रक्रान्तं तादृशेनेत्युपपद्यते तत्र भेदाभेदोपांशुयाजदेवताद्रव्याणां प्रक्रमनियमासम्भवान्न तत्कृतो विशेषः सम्भवतीति। लिङ्गमभावस्य तथाष्टौ दक्षिणत एकादशोत्तरत इति एवमेवोत्तरं पुरोडाशमधिपृणक्ति श्रपयति पर्यग्निकरोति पात्र्यां द्वेधोपस्तृणीते उद्वासयतीति च तत्र भेदार्थमिति चेन्न, पौर्णमासवैमृधाभ्यामिति ख्यापितत्वात्। पौर्णमासशब्दः कर्मवचनो यदि भवेन् निमित्तसप्तमी ततो गतत्वं फलश्रवणात् प्रयाजादिवत्। अथ निमित्तसप्तमीलक्षणाङ्गत्वे षष्ठ्या भवितव्यमिति कालवचनः। तथा सति आग्नेयादिवत् प्राधान्यफलसम्बन्धश्च तद्वदेवेति। तथोभयोर्लिङ्गमस्ति। दाक्षायणयज्ञस्य गुणविकारत्वाद् वैमृधस्य प्रधानत्व उपांशुयाजवन्निवर्तितत्वादभावाभिप्रायेण सूत्रं बौधायनस्येत्युक्तम्। अङ्गाभिप्रायेण प्रयाजादिवदनिवृत्त्यभिप्रायेणोक्तम्। वैमृधस्याप्यत्रेति[1] प्रधानत्वे विकारेष्वभावः। गुणत्वे प्रवृत्तिः समुदायधर्मत्वात् पार्वणहोमवत्। गुणत्वेऽप्यप्रवृत्तिरिति चेत् समुदायार्थत्वात् समुदायस्य समुदायिन इव धर्मेण सम्बध्यन्ते न समुदायस्येतिकर्त्तव्यतासम्बन्धोऽस्ति पार्वणहोमस्य समुदायो देवेतेति तदभावादप्रवृत्तिर्युक्ता। तथा महेन्द्रायेति महेन्द्रयाजिन इति वक्तव्ये कदाचिद् गतश्रियामेव ग्रहणं स्यादिति यथाव्यवस्थितम्।

महेन्द्रयाजित्वोपसंग्रहार्थो यदि वा शब्दः। वा शब्दस्त्वनर्थक एव तस्य ग्रहणं पुरोडाशविकल्पार्थम्। कथं पुरोडाशविकल्प इति चेच् छाखान्तरे समाम्नानात्। **इन्द्राय वो जुष्टं प्रोक्षामीति** मन्त्राम्नानात्। इतरथा पूषाद्यनुमन्त्रणवदुत्कर्षे प्रकरणाम्नानमनर्थकं स्यात्, चोदकेनैवोहेन सिद्धत्वात्। मन्त्रचिकीर्षा चाल्पप्रयोजना शाखान्तर एव प्रतिषिद्धत्वाद् विकल्पः। स्वशाखायां चास्ति विधानमिति नित्यवदाम्नातमाचार्येण। दारुपात्रदोहनमग्निमत्वाद्यातयामत्वेनोपपाद्य तन्निवृत्त्यर्थं **पुरोडाशमुखानि वै हवींषि** (तै० ब्रा० ३।२।३।६) असत्यपि दारुपात्रे इतइतो नान्तरेण

१. 'वैमृधामप्यत्रेति' इति कोशेषु।

पुरोडाशं हविषः सारोऽस्ति। तस्या यदि दारुपात्रेण यत्नेन वा सर्वथा अयातयामार्थं पुरोडाशः कार्यं इति विधीयते।

ततश्च तेनैवायातयामत्वसिद्धेः काममेवेत्ययातयामत्वमेवानूद्यते। आग्नेयेन पुरोडाशमुख्यत्वमिति चेन्न। तस्यास्तित्वे न दोषो निवर्तते। किमाग्नेयमदृष्ट्वा यातयामत्वमुक्तं नह्यस्य स्नेहाभावे वा तदवृत्तेरपयुक्तो ह्यस्य तदस्तित्वेन निवर्तते। तस्यैव तत्समर्थस्नेहाद्यस्तित्वेन निवर्तते। कथं बहुवचनमिति चेत्, आग्नेयमुख्यत्वे कथं सर्वधावयत्वेन विग्रहः समुदायः समासार्थं इत्याश्रयणीयम्। अर्धतृतीयो द्रोण इति यथा। यदि पुरोडाशेन विनायातयामत्वम् आमिक्षादिषु च कथम्? न यातयामत्वं सर्वत्र विधीयते। तेन प्रकारेणात्र पुरोडाशो विधीयत इति न दोषः। आचार्यस्यानित्यत्वाभिप्रायो वा। अथशब्दमन्ये लिङ्गमाहुः। प्रसिद्धमाग्नेयेन चरित्वाथेतरयोरिति पूर्वं त्रयाणामुपक्रमादथेतरयोरिति सान्नाय्यनिर्देशाद्विकल्पो गम्यत इति सान्नाय्यपुरोडाशयोर्यथोपक्रान्तं तथा द्विवचननिर्देशादलिङ्गम्। अतश्चैवं स्रुग्भ्यामेकं पुरोडाशं जुहुयादिति सूत्रपक्षाद् भेदाभिप्रायेणोक्तत्वात् पुरोडाशेन सहभावेन भेदो भवतीति नान्यथेत्येतदभावो न विरुध्यते भावाभावौ सूत्रपक्षाभावे सहभावे आग्नेयेन प्रचर्यति उत्तरस्मिन् भावे भेदेन स्रुग्भ्यामित्यादि केचिदाहुः। पुरोडाशमुखानीत्यनेन पुरोडाशविधानाद् दारुपात्रे दोहनिवृत्तिः क्रियते। तथा च काममेवेति निगमनम्। कथं पुरोडाशमुख्यत्वं तत्प्रधानत्वाद्यथा द्वे शमंमुखं त्रैविद्यमिति आज्यादीनां व्यञ्जनार्थत्वात् लोकवद्यतोऽन्तरेण पुरोडाशं हविषः सारो नास्ति। नह्यनेन विना व्यञ्जनान्यर्थवन्ति ततश्च सोऽग्निना प्रत्यक्षपाकेऽपि न यातयामत्वं किं पुनरत्रानुमेयेऽग्निना सान्नाय्यस्येति। तथा सति वाशब्दप्रयोजनं वक्तव्यम्। पुरोडाशश्च कथं लब्ध इति वक्तव्यम्? आचार्यं प्रति विप्रतिवादस्य। किं च पुरोडाशस्य प्राधान्यवचनं स्तुत्या कर्तव्यतां शक्नोति विधातुं न पुनः स्तुतिमात्रमिति। इयं तमर्थं शक्नोति बोधयितुमपक्वस्य याग एव नास्ति। यागार्थं एव पाकः सन्कथं यातयामत्वं करोति। पाकार्थं एवाग्निरिह पुनर्नाग्निः पाकार्थेनोपकारेण दृष्टः कथं यातयामत्वं कुर्यात्. सर्वत्राग्नीनां प्रयोजनं नायातयामत्वेन पुरोडाशस्तुत्या विधीयते इत्युक्तं तस्माद्विधिरेव न दोषः॥३४॥

**सा०**—स संवत्सरमिन्द्रमिष्ट्वाऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति। सा प्रसिद्धेष्टिः सन्तिष्ठते। अथ याऽमावास्याऽऽगच्छति तस्यां महेन्द्रं यजते। सोऽत ऊर्ध्वं महेन्द्रयाज्येव भवति। अथ वै भवति संवत्सरमिन्द्रं यजेत…वसीयान् भवतीति ब्राह्मणम्। अथ वै भवति संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्…ततोऽधिकामं यजेतेति ब्राह्मणम्। अथ वै भवति नाऽसोमयाजी सन्नयेत्… असोमयाजी सन्नयेत्परिमोष…आतमन्धत्त इति ब्राह्मणम् (बौ० श्रौ० १७।४९-५०)।

द्वैधे च—नाऽगतश्रीर्महेन्द्रं यजेत। त्रयो वै गतश्रियः शुश्रूवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति। स योऽन्य एतेभ्यो महेन्द्रमियक्ष्येत स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां लभतेति बोधायनः। अत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां लभतेति शालीकिः (बौ० श्रौ० २३।१७)। संवत्सरमिन्द्रं यजेत। संवत्सरं हि व्रतं नातीति[1]। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनो, यस्याममावास्यायामामित इन्द्रं यष्टुं प्रक्रामेत् स संवत्सरे पर्यवेते तस्यां महेन्द्रं यजेत। सोऽत ऊर्ध्वं महेन्द्रायाज्येव स्यात्। अत्रो ह स्माऽऽहौपमन्यवोऽभ्यारूढः खल्वस्यैव संवत्सरो भवति, यस्याममावास्यायामादित इन्द्रं यष्टुं प्रक्रामेत्, संवत्सरे पर्यवेते या ततः पूर्वाऽमावास्या स्यात्तस्यां महेन्द्रं यजेत। सोऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति (बौ० श्रौ० २३।१७)।

अत्र यदि महेन्द्रयाजी भवतीति यदिशब्दग्रहणादेव महेन्द्रयागविषयेषु विकल्पेषु सूचितेषु पुनर्वाशब्दग्रहणस्यैतत्प्रयोजनं, इन्द्राय वो जुष्टं प्रोक्षामीत्यादि शाखान्तराम्नातमन्त्रबलसूचितैन्द्रपुरोडाशस्य तत्समानन्यायता। माहेन्द्रस्य च पुरोडाशस्य विकल्पो यथा स्यादिति स्वशाखायाञ्चाऽग्निवद्वै दारुपात्रम् (तै० ब्रा० ३।२।३।८) इत्यादिना दारुपात्रदोहनस्य यातयामत्वाऽऽपादनेन तद्दोहनमपोह्य पुरोडाशसहितत्वेनाऽयातयामत्वाऽऽपादनेन पुरोडाशं विधाय काममेव दारुपात्रेण दुह्याद् (तै० ब्रा० ३।२।३।९) इति पुरोडाशयोगाऽऽपादिताऽयातयामत्वमङ्गीकृत्य दारुपात्रदोहोऽभ्यनुज्ञातः। कथमेवं सिद्धस्य पुरोडाशस्य वैकल्पिकत्वमिति चेत् वाशब्दप्रयोगसामर्थ्यादित्यवेहि। न हि प्रमाणभूत आचार्योऽसति विकल्पे वृथा वाशब्दं प्रयुङ्क्ते। पुरोडाशमुखानि वै हवींषि (तै० ब्रा० ३।२।३।९) इत्येतत्पुरोडाशाऽभावे कथमुपपद्यत इति चेत्, आग्नेयपुरोडाशद्वाराऽप्युपपत्तेः। न चाऽप्ययं नियमः पुरोडाशमुखान्येव हवींषीति, आमिक्षायां तद्दर्शनात्। तत्सिद्धमेतत्—निर्वापे वाशब्दप्रयोगसामर्थ्याद् ऐन्द्रो वा पुरोडाशो माहेन्द्रो वा वैकल्पिक इति।

तदेतदनुपपन्नम्। न तावन्महेन्द्रशब्दसन्निधौ प्रयुक्तो वाशब्दः शक्नोत्यैन्द्रमपि पुरोडाशं विकल्पयितुम्, नाऽपि माहेन्द्रम्। तथात्वे महेन्द्र इति वा यदि महेन्द्रयाजी भवति इति सान्नाय्यप्रयुक्तो वाशब्दस्तदपि विकल्पयेत। तच्चाऽयुक्तम्। अवदानकाले अवहननकाले च पुरोडाशसहित एव सान्नाय्ये सत्यवत्ते हूयमाने कालद्वयेऽपि प्रयुक्तौ वाशब्दौ कथं सान्नाय्यमपहाय पुरोडाशमेव विकल्पयतः। किञ्च जामि वा एतद्यज्ञस्य क्रियत इत्युपक्रम्य यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति (तै० सं० २।६।६।४) इति विधानात्, द्वितीयपुरोडाशस्य पाक्षिकत्वे सत्युपांशुयाजस्याऽपि पाक्षिकत्वं स्यात्। न च क्वचिदुपांशुयाजस्य पाक्षिकत्वमाचार्येण द्योतितमिति वृथैव निपातसमुदायप्रयोगशीलस्याऽऽचार्यस्य वाशब्दप्रयोगविचारप्रयास इति। एतदेवोक्तमन्यैरपि—

पुरोडाशविकल्पार्थो वाशब्दो न भवेदिह।
नैन्द्रः शाखान्तरेऽप्येष पुरोडाशो विकल्पितः॥ इति॥

---

१. नास्ति कै० सं०

अत्रोपांशुयाजस्याऽऽज्यद्रव्यकत्वे यथोक्त एव निर्वापक्रमः। चरुद्रव्यकत्वे तु आग्नेयनिर्वापाऽनन्तरमेतामेव प्रतिपदं कृत्वेत्यनेन न्यायेन यथोपदेशमग्नीषोमाभ्यमित्याद्युक्त्वा जुष्टं निर्वपामीति यजुषोपांशु त्रिर्निर्वपेत्, सकृत्तूष्णीम्। अत्र द्रव्यकालभेदेन देवताभेदा द्वैधे दर्शिताः—उपांशुयाजस्य करण इति। सूत्रं मौद्गल्यस्य। अत्रो ह स्माऽऽह बोधायन औषधस्योपांशुयाजं कुर्याद् अग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामिति। अत्रो ह स्माऽऽह शालीकिराज्यस्योपांशुयाजं कुर्यात्सौम्यं पौर्णमास्यां वैष्णवममावास्यायामिति। अत्रो ह स्माऽऽहौपमन्यव औषधस्यैवोपांशुयाजं कुर्यात् सरस्वतः पौर्णमास्यां सरस्वत्या अमावास्यायामिति। उभयत्रैवाऽऽज्यस्य वैष्णव इति राथीतरः। अत्रो ह स्माऽऽह कौणपतन्त्रिः—चरुश्च स्याद्वैष्णवश्च स्यात्स्वयं चैव यजमानः प्राश्नीयादिति (बौ० श्रौ० २०।१३)।

आज्यनिर्वापमप्यौषधनिर्वापानन्तरमेव सह प्रोक्षणार्थं केचिदिच्छन्ति। तथा च द्वैधे—आज्यस्य निर्वपण इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनः। औषधस्याऽन्तं गत्वाऽऽज्यं निर्वपेदेवमस्य सह हविर्भिः प्रोक्षणं लभत इति (बौ० श्रौ० २०।६)। औषधस्याऽन्तं गत्वेति, निर्वापमिति शेषः। आपर्यवसानमौषधस्य निर्वापं कृत्वेत्यर्थः। अयमेवार्थः कल्पसारेऽभिहितः—'प्रोक्षन्त्यवग्राहश एव साज्यं ये निर्वपन्त्येतद्विहौषधान्ते इति ॥३४॥

अथ निरुप्तानभिमृशति 'इदं देवानाम्' (तै० सं० १।१।४।२) इति ॥३५॥ 'इदमु नः सह' (तै० सं० १।१।४।२) इति येऽतिशिष्टा भवन्ति ॥३६॥ 'स्फात्यै त्वा नारात्यै' (तै० सं० १।१।४।२) इति ॥३७॥ अथाहवनीयमीक्षते—'सुवरभि विख्येषं वैश्वानरं ज्योतिः' (तै० सं० १।१।४।२) इति ॥३८॥ अथ गृहानन्वीक्षते—'दृंहन्तां दुर्या द्यावापृथिव्योः' (तै० सं० १।१।४।२) इति ॥३९॥ अथैनानादायोपोत्तिष्ठति ॥४०॥ ऐति—'उर्वन्तरिक्षमन्विहि' (तै० सं० १।१।४।२) इति ॥४१॥ एत्योत्तरेण गार्हपत्यमुपसादयति—'अदित्यास्त्वोपस्थे सादयामि' (तै०सं० १।१।४।२) इति ॥४२॥ गार्हपत्यमभिमन्त्रयते—'अग्ने हव्यं रक्षस्व' (तै०सं०१।१।४।२) इति ॥४३॥

भव०—शेषविषये मन्त्रान्तरप्रयोजनं व्यावृत्तिः ॥३५-३६॥ गुप्तेर्भिन्नप्रयोजनत्वाद् भिन्नवाक्यत्वख्यापनार्थम्। उर्वन्तरिक्षमन्विहीति गमनमन्त्रः। तथा च कर्मान्तेऽभिव्रजनमन्त्र इत्युक्तम् ॥४१-४३॥

॥ इति चतुर्थोऽध्यायः समाप्तः ॥

सा०–अथ निरुप्तानभिमृशति—'इदं देवानाम्' इति। निरुप्तान् कृतनिर्वापान् शूर्पागतान् ॥३५॥ 'इदमु नः सह' इति येऽतिशिष्टा भवन्ति। तान् अभिमृशतीति शेषः। पात्रीगतानित्यर्थः, अनोगतान्वा ॥३६॥ 'स्फात्यै त्वा नारात्यै' इति। अस्य मन्त्रस्य विनियोगोऽत्राऽनुक्तोऽपि आवपनार्थं द्वैधोक्ते कर्मणि नष्टाश्वदग्धरथन्यायेन[1] विनियोग इति गम्यते। तच्चाऽऽवपनं शूर्पे वा व्रीहिकोष्ठे वा भवति। तथा च द्वैधे—अतिशिष्टनामावपन इति। तान्कोष्ठे वा पल्वे वाऽऽवपेदिति बोधायनः। अत्रैवैनानाऽऽवपेयुरिति शालीकिः (बौ० श्रौ० २०।६) इति। कोष्ठो व्रीह्याश्रयः शकटः। पल्वं निरुप्तहविराश्रयं शूर्पम्। शालीकिमते तु एतान्व्रीहीनत्राऽऽवपेयुः। कोष्ठे सङ्ग्रहणकाले तत्रैवाऽतिशिष्टान् अनेन मन्त्रेणाऽऽवपेत्, न तु शूर्पे इति ॥३७॥ अथाऽऽहवनीयमीक्षते—'सुवरभिविख्येषं वैश्वानरं ज्योतिः' इति। अथ गृहानन्वीक्षते—'दृंहन्तां दुर्या द्यावापृथिव्योः' इति। गृहानग्न्यगारम् ॥३८-३९॥ अथैनानादायोपोत्तिष्ठति। [2]एति—'उर्वन्तरिक्षमन्विहि' इति। एति गच्छति ॥४०-४१॥ एत्योत्तरेण गार्हपत्यमुपसादयति—'अदित्यास्त्वोपस्थे सादयामि' इति। एत्य आगत्य ॥४२॥ गार्हपत्यमभिमन्त्रयते—'अग्ने हव्यं रक्षस्व' इति। अत्र द्वैधे विशेषो दर्शितः—परिदान इति। यथानिरुप्तं परिददीतेति बोधायनः। अत्रो ह स्माऽऽह शालीकिः—अग्ने हव्यं रक्षस्वेत्येव ब्रूयात्, विष्णो हव्यं रक्षस्वेति पयः। विष्णुर्हि पयसां गोप्ता भवति, अग्निरौषधस्येति (बौ० श्रौ० २०।६)। पूर्वकल्पे गार्हपत्याभिमन्त्रणे विनियुक्तोऽपि 'अग्ने हव्यं रक्षस्व' इति मन्त्रः परिदानेऽपि विनियुज्यते। परिदानं नाम निरुप्तस्य हविषो रक्षणार्थं देवतासाक्षात्करणम्। तथा च दामोदरः—परिदानमपि तन्त्रं भवतीत्युपपन्नम्, अग्न्यभिमन्त्रणवचनात्। अभिमन्त्रणमाभिमुख्येनेक्षणमेवेति। यथानिरुप्तं परिददीत, निर्वापानुगुण्येन तत्तद्देवतायै परिददीत। एवञ्च 'अग्ने हव्यं रक्षस्व, अग्नीषोमौ हव्यं रक्षेथाम्' इत्यादिः परिदानमन्त्रोहः, प्रकृतावपि वचनादूहो युक्तः, निर्वपणादौ तथाऽऽम्नानात्। शालीकिमते तु अन्यदैवतस्याऽप्यौषधस्याग्निरेव गोप्ता, यथा इन्द्रदैवतस्य सान्नाय्यस्य विष्णुः, तथाऽत्राऽप्यग्ने हव्यं रक्षस्वेत्येव ब्रूयाद् इति ॥४३॥

अत्र विनियोगसङ्ग्रहः—

कर्मणे हस्तसम्मर्शो वेषा शूर्पग्रहः स्रुचा।
सह शूर्पस्य सन्तापः प्रत्युष्टेत्यनसो धुरम्॥

उत्तरां वा स्पृशेत्पात्र्याः पूर्वार्धं चाऽपि धूरिति।
त्वं देवानामनः पक्षेऽभिन्नो मन्त्रस्य मन्त्रणे॥

---

१. तवाश्वो नष्टो ममापि रथो दग्धः, उभौ संप्रयुज्यावहै। महाभाष्य १।१।४६॥

२. 'ऐति' इति सूत्रपाठः कै० सं०।

मित्रस्येक्षेत तद्धान्यं निरस्येत्तृणमुर्विति ।
देवेति निर्वपेदग्नोषोमौ सावित्रयोगतः ॥

इदं द्वयेन संस्पर्शो निरुप्तेतरयोः क्रमात् ।
स्फात्यै निरुप्ततच्छेषयोजनं सुवरीक्षते ॥

पूर्वाऽग्निं गेहमीक्षेत दृंहन्तामित्यथ व्रजेत् ।
उर्वित्यदित्याः संसाद्य अग्ने इत्यभिमन्त्रणम् ॥
अपराऽग्नेः सप्तदश मन्त्राः पात्र्यान्तु षोडश ॥

इति प्रथमे प्रश्ने चतुर्थोऽध्यायः ।

॥ इति चतुर्थोऽध्यायः समाप्तः ॥

# पञ्चमोऽध्यायः

अथैतस्यामेव स्रुचि तिरःपवित्रमप आनीयोदीचीनाग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति—'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' (तै० सं० १।१।५।१) इति पच्छः ॥१॥ अथैना उन्महयन्नुपोत्तिष्ठति—'आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये' (तै० सं० १।१।५।१) इति ॥२॥

भव०—एतस्यामेवेति निर्वापे कृतेऽशोधितायां सशूकायामेवेत्यन्येषां व्याख्यानम्। स्थालीभिश्चैव चरुं निर्वपेदित्येतस्मिन् पक्षे स्रुचि एव यथा स्यादिति च। पच्छ उत्पुनातीत्यनेन निराकङ्क्षीभवति। ततश्च पादेन पादेनोत्पुनातीत्युक्तं भवति। अन्येषां पच्छो विगृह्य मन्त्रान्ते त्रिरुत्पुनातीति ॥१॥ उन्महयन्निति उच्छब्दश्च ऊर्ध्वभावे, महयतिश्च पूजार्थे। स्रुच एवोद्यमनम्, यथा देवताभ्यो यूपादौ हस्तेनापामुत्क्षेपणम्। एना इति सर्वासां कर्मत्वेन श्रवणाद् हस्तेनोत्क्षेपणाभावाद् उच्चालनमित्यन्ये। मन्त्रमेव केवलं जपतीत्यन्येषां पूजेति ॥२॥

सा०—अथैतस्यामेव स्रुचि तिरःपवित्रमप आनीयोदीचीनाऽग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति—'देवो वः सवितो···सूर्यस्य रश्मिभिः' इति पच्छः। एतस्यामेवेति निर्वापकरणभूतायां सशूकायामेव, न तु शोधितायामित्येवकारार्थ इति केचित्। अन्ये तु कर्मान्ते स्थालीभिश्चैव चरुं निर्वपेदिति बोधायनः (बौ० श्रौ० २५।८।१६) इति दर्शनात् स्थाल्याः प्रोक्षणनिवृत्त्यर्थम् एवकार इत्याहुः। त्रिरुत्पुनाति, अङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वेति शेषः। यथोक्तम्—अङ्गुष्ठोपकनिष्ठिकाभ्यां, पवित्रे ते असंहते गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूय इति। पच्छ प्रतिपादमुत्पवनात् त्रित्वम्, अथवा प्रतिपादमुत्पवनस्य त्रित्वमिति। पच्छ इत्यनेनैव प्रतिपादमुत्पवनसिद्धेः पुनस्त्रिर्ग्रहणस्याऽऽनर्थक्यप्रसङ्गादिति प्रतिपादं त्रित्वमुत्पवनस्य। द्वैधे तु विशेषः प्रोक्षणीनामुत्पवन इति। सूत्रं बोधायनस्य। निगदन्नेवैतामृचं त्रिरुत्पुनुयादिति शालीकिः (बौ० श्रौ० २०।६)। एतामृचमेव जपन् न तु पच्छो विगृह्येत्यर्थः ॥१। अथैना उन्महयन्नुपोत्तिष्ठति—'आपो देवीरग्रेपुवो···वृत्रतूर्ये' इति। एना इति अपां कर्मत्वं प्रतीयते। उन्महयन्निति ऊर्ध्वं पूजयन्निति। अत्र केवलानामपामुत्क्षेपणाऽनुपपत्तेः महयन्नित्यनेन पूजार्थेन चोत्क्षेपणे तत्पात्रोत्क्षेपणं न हस्तेन। सर्वासां कर्मत्वेन श्रवणाद्धस्तेनोत्क्षेपणे तदभावात्स्रुचा सहाऽपामुद्यमनं गम्यते। अथवा उन्महयन्निति एतन्मन्त्रजपरूपं पूजनं कुर्वन्निति। उपोत्तिष्ठति स्रुगुद्यमनसमनन्तरकालमेवोत्तिष्ठति ॥२॥

अद्भिरेवापः प्रोक्षति—'प्रोक्षिता स्थ प्रोक्षिता स्थ'(तै०सं०१।१।५।१) इति त्रिः ॥३॥ अथ पुरोडाशीयान् प्रोक्षति—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' (तै० सं० १।१।४।१) इति यथादेवतं त्रिः ॥४॥

भव०—अद्भिरपां प्रोक्षणं स्रुच एव प्रवृज्यैकदेशेन प्रोक्षणमन्याभिरित्यपरे। अद्भिरेवेत्यवधारणात्· ताभिरेवेति गम्यते। हस्तेन ग्रहणं त्वाचारत्वान्न क्रियान्तरम्। यत्र मन्त्रे वीप्सा तत्रोभयं त्रिः। यत्र सकृन्मन्त्रमुक्त्वा त्रिरुच्यते तत्र कर्मैव त्रिरावर्तत इति केचित्। अन्ये तु ब्रुवते—त्रिरेव मन्त्रं ब्रूयात् त्रिः कर्मावर्तयेदिति च, सकृदेव मन्त्रं ब्रूयात् त्रिः कर्मेति च प्रदर्शनार्थत्वादुत्सर्ग इति, तेषां वीप्सा नियमार्थः। अस्मिंस्तु दर्शने यूपावटाद्यतिदेशो मन्दप्रयोजनः। उत्सर्गेणैव गतत्वान् मन्त्रोच्चारणमेवात्र, ब्रह्मप्रोक्षिता एव (बौ० श्रौ० २४।२५।२०) इति वचनात् ॥३॥ सह प्रोक्षणावचनात् पृथङ् निर्वाप इति अस्मिन् दर्शने द्रव्यविभागेन पृथक् प्रोक्षणमन्त्रः। अवहनने संसर्गाद्विभागेन निर्वापे दृष्टार्थता मा भूदिति सह निर्वाप इति। अस्मिन् दर्शने सावित्रमनुद्रुत्याग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामिन्द्राय वैमृधायेति यथादेवतमेव मन्त्रः प्राग् द्रव्यस्य चाविभक्तत्वात्। प्रोक्षतीति समानकर्तृकत्वमविवक्षितमुक्तम् ॥४॥

सा०—अद्भिरेवापः प्रोक्षति—'प्रोक्षिताः स्थ प्रोक्षिताः स्थ' इति त्रिः। अत्र प्रोक्षिताः स्थेत्येतावानेव मन्त्र आम्नातः, तस्याऽत्र वीप्सया विनियोगः क्रियते। तेनाऽवगम्यते मन्त्रकर्मणोरुभयोरपि त्रिरावृत्तिरिति। अन्यथा सकृदेव मन्त्रमुच्चार्य त्रिरिति ब्रूयात्। तथा च कर्मैव त्रिः सकृदेव मन्त्र इति भवति। एवञ्च द्वैधोक्तयोर्बोधायनशालीकिपक्षयोर्विषयो व्यवस्थाप्यते—स ह स्माऽऽह बोधायनः त्रिरेव मन्त्रं ब्रूयात् त्रिः कर्माऽऽवर्तयेत्। सकृदेव मन्त्रं ब्रूयात्त्रिः कर्माऽऽवर्तयेदिति शालीकिः (बौ० श्रौ० २०।२) इति। अन्ये तु एवं विषयनियमे तत्रैव समनन्तरं क्रियमाणोऽतिदेशोऽनर्थकः 'एवं यूपस्य परिलेखन' इत्यादिकः। तर्हि औत्सर्गिको विधिः स्वविषयेऽतिदेशमपेक्षते। अतोऽयमतिदेशोऽनयोर्विध्योः प्रदर्शनार्थं द्योतयत इति मन्वाना वीप्सैव नियमार्थेति व्याचक्षते। वीप्सारूपोऽयं मन्त्रः प्रतिप्रोक्षणं त्रिरावर्तनीयम्। अन्यथा मन्त्रवीप्सयैव कर्मत्रित्वे सिद्धे पुनस्त्रिर्ग्रहणमनर्थकं स्यात्, किञ्च इतिकरणेन च स्वरूपे अवस्थापनमनुकार्यस्य भवति। न चैतादृशस्य व्यवधानमवच्छे[दो] वा युक्तः। तथा चोक्तं—

स्वरूपेऽवस्थितिर्येषां शब्दानामिति नेष्यते।
न तानन्यव्यवहितान् प्रयुञ्जीत विचक्षणः ॥ इति ॥

कर्माऽन्ते तु मन्त्रजप एव प्रोक्षणम् इत्युक्तम्। तत्राऽपि वीप्सितस्यैव मन्त्रस्य त्रिर्जपः,

त्रिर्ग्रहणसामर्थ्यात् । तथा हि—किं प्रोक्षिता उ खलु 'प्रोक्षण्यो[1] भवन्तीति । विज्ञायते ब्रह्मवा दनो वदन्ति । अद्भिर्हवींषि प्रौक्षीः । केनाऽप इति, ब्रह्मणेति । ब्रह्मप्रोक्षिता एव भवन्ति (बौ० श्रौ० २४।२५।१७-२०) इति । ब्रह्मेति मन्त्रः । अयंञ्च पक्षोऽद्भिरेवाऽपः प्रोक्षतीत्यनेनैव सूचितः । तथा हि—एवकारस्याऽन्यनिवृत्तिपरत्वात् । न चाऽन्योन्यप्रसक्तौ निवृत्तिः प्रसक्तिश्च श्रुत्यैवेति । आधाने ब्रह्मसामगानन्यायेन मन्त्रप्रोक्षणकल्पो वैकल्पिकः । अद्भिः प्रोक्षणीगताभिः ॥३॥

अथ पुरोडाशीयान्प्रोक्षति—'देवस्य त्वा'··'हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति यथादेवतं त्रिः । अत्र केचिद् द्रव्यैक्येऽपि देवताभेदेन पृथक्शूर्पेषु निर्वापमङ्गीकुर्वते । तेषां पक्षे प्रतिदैवतं पृथक्सावित्रमनुद्रुत्य प्रोक्षणम् । अन्ये तु पृथक्शूर्पेषु निर्वापस्याऽदृष्टार्थतया तं पक्षमनादृत्य सम्भूय निर्वापमिच्छन्ति । तेषां मते प्रकृतौ शूर्पमिति वेषाय त्वेति चैकवचनं, विकृतिषु च वेषाय वां वेषाय व इति द्विवचनबहुवचने । तास्वेव च प्रधानभेदाऽभावे तदभाव इत्येवमादिकमुपपन्नम् । अतः सकृदेव मन्त्रः सावित्रः प्रोक्षाम्यन्तः । अमुष्मा अमुष्मा इति तत्तद्देवतानुगुण्येनोहः समाम्नाताऽग्नीषोमाभ्यामित्यस्य स्थाने भवति । न चाऽत्र प्रतिदैवतं वो जुष्टं प्रोक्षामीति मन्त्रांशस्यावृत्तिः, यथाऽऽम्नातादेव निराकाङ्क्षत्वात् । प्रोक्षणमपि त्रिरेव न तु प्रतिदैवतं त्रिः प्रोक्षणं, द्रव्यस्याऽविभक्तत्वात् मन्त्रांशावृत्तौ तदपि स्यात् । द्वैधे विशेषः—पुरोडाशीयानां प्रोक्षण इति । अवग्राहशः प्रोक्षेदिति बोधायनः । देवताः समनुद्रुत्य त्रिरेवेति शालीकिः (बौ० श्रौ० २०।६) । ग्रहणं, ग्राहः । अवयुत्य ग्राहः, अवग्राहः । अवग्राहशः प्रतिदेवताग्रहणं त्रिः प्रोक्षेदिति बोधायनः । सकृदेव सर्वा देवताः समनुद्रुत्याऽन्ते त्रिः प्रोक्षेदिति शालीकिः ॥४॥

उत्तानानि पात्राणि कृत्वा प्रोक्षति—'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' (तै० सं० १।१।५।१) इति त्रिः ॥५॥ अतिशिष्टाः प्रोक्षणीर्निधाय ॥६॥ कृष्णाजिनमवधूनीत्यूर्ध्वग्रीवमुदङ्ङावृत्य—'अवधूतं रक्षोऽवधूता अरातयः' (तै० सं० १।१।५।१) इति त्रिः ॥७॥ अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति—'अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु' (तै० सं० १।१।५।१) इति ॥८॥ तस्मिन्नुलूखलमध्यूहति—'अधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्तु' (तै० सं० १।१।५।२) इति ॥९॥ तस्मिन् पुरोडाशीयानावपति—'अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि' (तै० सं० १।१।५।२) इति ॥१०॥

भव०—उत्तानानि प्रोक्षतीति । तदभिप्रायेणान्येन कृतेषु तेन कृतानीति व्यप-

---

१. 'प्रोक्षिण्यो' इति कै० सं० ।

दिश्यन्ते यथोज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्यम् उद्गमयतीति (तु०—महाभाष्य ३।१।२६)। अत्र क्त्वाप्रत्यय उपलक्षणं स्यात् परं हेतुकर्तरि कर्मव्यपदेशः, षड्भिर्हलैः कृषित्वा वाहशतं लब्धवानिति। मुख्यार्थासम्भव एव स्याद्। इह त्वेकेन हस्तेन प्रोक्षणीं धारयन्नपरेणोत्तानीकरणे न कश्चिद्विरोधः। तस्मान् मुख्यत्वमेव समानकर्तृकत्वम्। उत्तानानि पात्राणि कृत्वा यानि कर्मणि उपपुज्यन्ते तानि सर्वाणि प्रोक्षति। बहुवचनेन सर्वेषामुक्तत्वान् मन्त्रावृत्तिप्रयोजनाभावात् सकृन्मन्त्रास्त्रिः प्रोक्षणम् ॥५॥ पुरस्तादिति नान्यापेक्षं कृष्णाजिनस्यैवैकदेशापेक्षम्। पुरस्तादारभ्योपस्तृणातीति, अविसर्गपक्षे सव्येन दक्षिणस्य व्यापृतत्वात् ॥८॥ आवपनं सर्वेषां पुरोडाशीयानां समस्तवपनासम्भवादसकृदवहृत्य शूर्पे उपोद्वपनम्। प्राजापत्यया च तेषां धारणार्थत्वात्[1] ॥१०॥

सा०—उत्तानानि पात्राणि कृत्वा प्रोक्षति—'शुन्धध्वं...देवयज्यायै' इति त्रिः। अत्र क्त्वाश्रुत्या समानकर्तृत्वं प्रतीयते। तच्चैकेन हस्तेन प्रोक्षणीं धारयताऽपरेणोत्तानीकरणं शक्यते इति मुख्यमेव,तद्वृथैव अन्तर्गर्भितणिजर्थत्वाभिधानादिप्रयास इति। अत्राऽपि न प्रतिपात्र त्रिः प्रोक्षणं, मन्त्रगतबहुवचनादेव चरितार्थत्वात्। अतः समुदायस्यैव त्रिः प्रोक्षणमिति। द्वैधे मन्त्रविशेषः—पात्राणां प्रोक्षण इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनः—'शुन्धध्वं दैव्याय कर्मणे पात्राणि देवयज्यायै' इति (बौ० श्रौ० २०।६) ॥५॥ अतिशिष्टाः प्रोक्षणीर्निधाय। अग्रेण गार्हपत्यमिति शेषः। तथा च सूत्रम्—प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय (आप० श्रौ० १।१६।३) इति। द्वैधे विशेषः—अतिशिष्टानां परिशायन इति। एता एव परिशयीरन्निति बोधायनः। सिक्त्वैता अप उपशिष्टादन्याः संस्कुर्वीतेति शालीकिः (बौ० श्रौ० २०।६) ॥६॥ कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्य—'अवधूतं रक्षोऽवधूता अरातयः' इति त्रिः। उदङ्ङावृत्योर्ध्वग्रीवं कृष्णाजिनमवधूनोतीत्यन्वयः। तच्च सव्येन ग्रीवादेशेऽन्तर्लोमावाक् गृहीत्वा, दक्षिणेन अवाग्धूननम् अवधूननम्। तथा च कल्पसारः—ग्रीवाप्रदेशे परिगृह्य सव्यमावृत्य धूतिस्स्तरणं शिरोन्तम् इति। द्वैधे विशेषः—कृष्णाजिनस्यऽवधूनन[2] इति। उपनिष्क्रम्याऽन्यऽगारादुत्तरेऽपरेऽवान्तरदेशे कृष्णाजिनमवधूनुयादिति बोधायनः। अन्तरेवैतां दिशमिति शालीकिः (बौ० श्रौ० २०।६) ॥७।

अथैनत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति— 'अदित्यास्त्वगसि... वेत्तु' इति। पुरस्तादित्यध्वर्युमपेक्ष्य कृष्णाजिनैकदेशमपेक्ष्य वा पुरस्तादारभ्योपस्तृणातीति आस्तरणदेशश्चोत्तर औत्सर्गिकः। अवधूनने विधानात् सन्निहितश्च त्रान्तरानुसाराद् गार्हपत्यादुत्तरत उत्करदेशे वा। द्वैधे विशेषः—कृष्णाजिनस्याऽऽस्तरण इति। स ह स्माऽऽह बोधायनोऽविसृजन्नेतत्कर्म कुर्यात्कृष्णाजिनाऽवधूननादास्तरणात्[3]। एवमुलूखलाऽध्यूहनादा

१. अस्य वाक्यस्याभिप्रायो न स्फुटः। २. '०स्यावधवने' इति कै० सं०।
३. '० नावधवनादा०' इति कै० सं०।

पुरोडाशीयानामावपनात् । एवं मुसलस्याऽवधानादा शूर्पस्योपोहनात् । एवमधिवपनादा प्रस्कन्दनात् । एवं कपालोपधानादा योगाभ्यूहाभ्याम् । एवं प्रस्तर आ स्रुचां सादनात् । एवमभ्यादानादा खननात् । एवमौदुम्बर्यभिहोमात् । एवं यूप आ परिव्ययणादिति । यथोपपादमेवैतानि कर्माणि कुर्यादिति शालीकिः (बौ० श्रौ० २०।६) । एतानि कृष्णाजिनाऽऽस्तरणादीनि यथोपपादं यथासम्भवं कुर्यात् । अविसर्गपक्षो न नियत इत्यर्थः । एतस्मिंश्च पक्षे दक्षिणहस्तस्य व्यापृतत्वात्सव्येनाऽविसर्गः । कृष्णाजिनाऽवधूननमारभ्याऽऽस्तरणपर्यन्तं तस्याऽपरित्यागः । एवं सर्वत्र योजनीयम् ॥८॥ तस्मिन्नुलूखलमध्यूहति—'अधिषवणमसि···त्यास्त्वग्वेत्तु' इति । तस्मिन्कृष्णाजिने अध्यूहति, उपरि करोति ॥९॥ तस्मिन्पुरोडाशीयानावपति—'अग्नेस्तनूरसि·· गृह्णामि' इति । तस्मिन्नुलूखले सर्वेषां पुरोडाशीयानामावपनं मन्त्रश्च सकृदेव न उलूखलपरिमाणानुगुण्येन पुनः पुनरवहत्य शूर्पे प्रक्षेपः । द्वैधे विशेषः—पुरोडाशीयानामात्रपन इति । सूत्रं बोधायनस्य । पञ्चमुष्टीन्पञ्चावत्तिनामावपेदिति शालीकिः (बौ० श्रौ० २०।७) । अनेन चतुरवत्तिनां चतुरावपनं सूचितम् । मन्त्रोऽपि यथायोगमावर्तनीयः, निर्वापधर्मानुसरणात् ॥१०॥

मुसलमवदधाति—'अद्रिरसि वानस्पत्य स इदं देवेभ्यो हव्यं सुशमि शमिष्व' [तै० सं० १।१।५।२] इति ॥११॥ अथ हविष्कृतमाह्वयति—'हविष्कृदेहि हविष्कृदेहि' [तै० ब्रा० ३।२।५।७] इति त्रिः ॥१२॥ (उच्चैः समाहन्तवा इति च) अथ दृषदुपले वृषारवेणोच्चैः समाहन्ति – 'इषमावदोर्जमावद द्युमद्वदत वयं सङ्घातं जेष्म' (तै० सं० १।१।।५।२) इति ॥१३॥ अवहत्योत्तुषान् कृत्वोत्तरतः शूर्पमुपयच्छति—'वर्षवृद्धमसि' (तै० सं० १।१।५।२) इति ॥१४॥

भव०—वृषारवः पाषाणः । समाहननं सर्वेषां पात्राणाम् । दृषदुपलग्रहणं प्रदर्शनार्थं यज्ञायुधानामुद्वदताम् (तै० ब्रा० ३।२।५।९) इति दर्शनात् । उच्चैः समाहन्तवा इति संप्रैषम् आह (तै० ब्रा० ३।२।५।९) इति वचनात् त्रिष्फलीकर्तवा आह (तै०ब्रा० ३।२।५।११)इति यथा । प्रैषपक्ष आहननमस्य व्यापारः । दृषदुपलयोराहननविधिः कर्मान्ते (द्र०—बौ० श्रौ० २४।२५।२४-२६) उक्तः ॥१४॥

सा०–मुसलमवदधाति–'अद्रिरसि···शमिष्व' इति । मुसलाऽऽदानप्रभृत्यमन्त्रकम् ॥११॥ अथ हविष्कृतमाह्वयति—'हविष्कृदेहि हविष्कृदेहि' इति त्रिः । अत्राऽपि प्रागुक्तो न्यायः । कर्मान्ते विशेषः—हविष्कृदेहि इति ब्राह्मणस्य वदति, हविष्कृदागहि इति राजन्यस्य, हविष्कृदाद्रव इति वैश्यस्य । हविष्कृदेहि इति पर्जन्य एवैष उक्तो भवति । अथाप्युदाहरन्ति हविःसंस्कारीमेवैतदाहेति (बौ० श्रौ० २४।२५।२१-२३) । पर्जन्यस्य हविष्कृत्वं

वृष्टिद्वारेणौषध्युत्पादकत्वात् । हविःसंस्कारिणस्तु मुख्यं हविष्कृत्त्वम् इति । संस्कारीमिति छान्दसः ॥१२॥ [उच्चैः समाहन्तवा इति च] अथ दृषदुपले वृषारवेणोच्चैः समाहन्ति —'इषमावदोर्जमा···जेष्म' इति । वृषारवः पाषाणः । तेनोच्चैः दृषदुपले समाहन्ति । आग्नीध्र इति गम्यते, उच्चैः समाहन्तत्रै इति संप्रैषसामर्थ्यात् । न हि स्वकर्तृके कर्मणि संप्रैषो युक्तः । अतः प्रैषपक्ष एव दृषदुपलयोरेव समन्त्रकमाहननम् । प्रैषाऽभावपक्षे तु सर्वेषां यज्ञायुधानाममन्त्रकमाहननमिति विवेकः । तथा च कर्मान्ते—दृषदुपले वृषारवेणोच्चैः समाहन्तीति[1] ब्राह्मणम्, उच्चैः समाहन्तवा आह विजित्यै । यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपश्रृण्वन्ति ते सर्वे[2] पराभवन्तीति । द्विर्द्विर्दृषदि सकृत्सकृदुपलायाम् । नवकृत्वः सम्पादयतीति विज्ञायते (बौ० श्रौ० २४।२५।२४-२५)। अत्र च पूर्वकल्पे च दृषदुपलाऽऽहनन एवोच्चैः शब्दप्रयोगात्तत्पदं सम्प्रैषस्य तद्विषयत्वं द्योतयते[3]। द्विर्दृषदि सकृदुपलायामिति चाऽऽहननत्रित्वं त्रेधा विभक्तं मन्त्रमपेक्षत इति समन्त्रकत्वमप्यस्यैव । अन्यथा यज्ञायुधसङ्ख्यापेक्षया मन्त्रावृत्तिमपि ब्रूयात् । न त्वेवमब्रवीत् । तन्मन्यामहे दृषदुपलाहननमेव समन्त्रकं, तद्विषय एव सम्प्रैष इति । सर्वाऽऽहननपक्षे तु दृषदुपलाग्रहणं प्रदर्शनार्थमिति ।

नवकृत्वः सम्पादयेदिति । द्विर्दृषदि सकृदुपलायामिति विधाय मन्त्रविनियोगादाहननत्रये सकृन्मन्त्र इति क्रमेण त्रिवारं मन्त्रमिच्छन्ति । अन्ये तु द्विर्दृषद्याहनने सकृत् समस्तो मन्त्रः, एवं सकृदुपलायामपीति षोढा मन्त्रावृत्तिमाहुः । अत्र प्रत्याघातं समस्तमन्त्राश्रयणेन नवाऽऽवृत्तिः कुतो नोक्तेति चिन्त्यम् । अन्ये तु मन्त्रभेदमाश्रित्य प्रत्याघातं मन्त्रसमाप्तिरिति मन्त्रत्रयपक्षमङ्गीकृत्य, वयं संघातं जेष्म इत्यस्य तृतीयमन्त्रशेषतामाहुः । एतस्मिन्पक्षे इषमावद इति मन्त्रमुच्चारयन् द्विर्दृषदि सकृदुपलायाम्, एवमुत्तरयोरपि मन्त्रयोरिति नवकृत्वःसम्पादने मन्त्रत्रयस्य सकृत्सकृदुच्चारणमाहुः । अन्ये तु इषमावद इति सकृन्मन्त्रमुक्त्वा सकृदुपलायाम्, एवमुत्तरयोरपि मन्त्रयोरिति नवकृत्वःसम्पादनमिच्छन्ति । अस्मिन्पक्षे मन्त्रत्रयस्य प्रत्येकं द्विरावृत्तिः । अपरे तु इषमावद इति मन्त्रस्य प्रत्याघातमावृत्त्या द्विर्दृषदि सकृदुपलायामिति त्रिरावृत्तिः, एवमुत्तरयोरपीति मन्त्रत्रयस्याऽपि प्रत्येकं त्रिरावृत्तिमाहुः । आहननस्य दृषद्यारम्भ उपलायां समाप्तिः । द्वितीयतृतीययोर्दृषद्युपलायां वाऽऽरम्भः । यत्राऽऽरम्भस्तत्र वा समाप्तिरिति । सर्वस्मिन्नपि पक्षे उदगपवर्गः प्रागपवर्गो वा सम्पादनीयः । तथा च दृषदुपलयोर्दक्षिणोत्तरत्वं पश्चिमपूर्वत्वं वा भवति इति । शम्यया वाऽऽहननम् । तथा च द्वैधे— दृषदुपले वृषारवेणोच्चैः समाहन्तीति । सूत्रं बोधायनस्य । शम्ययैवेति शालीकिः (बौ० श्रौ० २०।७)।

---

१. '०तीति विज्ञायते ब्राह्मणम्' इति कै० सं० ।

२. कै० सं० नास्ति । तु०—तै० ब्रा० ३।२।५।९॥

३. 'द्योत्यते' इति कोशे पाठः ।

तदेतत्सर्वमभिसन्धायोक्तं कल्पसारे—

उच्चैरिति प्रैष उदीरितेऽग्नीत्सर्वं समाहन्ति वृषारवेण ।
यज्ञायुधं सध्वनि शम्यया वा तूष्णीं समन्त्रन्तु शिलेन वाऽन्यत् ॥
द्विर्द्विर्वषद्याहननं सकृत्स्यात्तथोपलायां नवकृत्व इष्टम् ।
केचित्तु मन्त्रं विभजन्ति भेदाद् द्वयोः प्रयुञ्जन्ति च मन्त्रमेकम् ॥ इति ।

अत्र सर्वाऽऽहननपक्षेऽपि प्रैषाभ्यनुज्ञानात्प्रागुक्तः प्रैषाऽभावपक्षोऽनादृतः । दृषदुपलसंस्कारार्थस्याऽऽहननस्य पुरोडाशाभावे निवृत्तिः । तथा च भारद्वाजः—असति द्रव्ये कर्मलोपः, यथा चरौ समाहननमाप्येभ्यो निनयनमिति ॥१३॥ अवहत्योत्तुषान् कृत्वोत्तरतः शूर्पमुपयच्छति—'वर्षवृद्धमसि' इति । अवघातानन्तरम् उद्गतनुषान्कृत्वा शूर्पमुत्तरदेशे निदधाति ॥१४॥

तस्मिन् पुरोडाशीयानुद्वपति—'प्रति त्वा वर्षवृद्धं वेत्तु' (तै० सं० १।१।५।२) इति ॥१५॥ अथोदङ् पर्यावृत्य परापुनाति—'परापूतं रक्षः परापूता अरातयः' (तै० सं० १।१।५।२) इति ॥१६॥ सव्येन तुषानुपहत्येमां दिशं निरस्यति—'रक्षसां भागोऽसि' (तै० सं० १।१।५।२) इति ॥१७॥ अथाप उपस्पृश्य विविनक्ति—'वायुर्वो विविनक्तु' (तै० सं० १।१।५।२) इति ॥१८॥ पात्र्यां तण्डुलान् प्रस्कन्दयति—'देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु' (तै० सं० १।१।५।२) इति ॥१९॥ अवहन्त्र्यै प्रयच्छन्नाह—'त्रिष्फलीकर्तवै त्रिष्फलीकृतान्मे प्रब्रूताद्' इति ॥२०॥ त्रिष्फलीकृतान् प्राहुः ॥२१॥ 'त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयमापस्तत्प्रवहतादितः' (तै० ब्रा० ३।७।६।२०) इति तण्डुलप्रक्षालनमन्तर्वेदि निनयत्युत्करदेशे वा ॥२२॥

भव०—इमामिति सामान्यशब्दः । रक्षःसम्बन्धात् पश्चिमदक्षिण इति गम्यते ॥१७॥ विविनक्ति पृथक् करोति तण्डुलान् व्रीहींश्च ॥१८॥ हविष्कृता वाचं विसृज्य (बौ० श्रौ० ३।१२।४)इति आतण्डुलोदकनिनयनादातिथ्ये । हविष्कृता वाचं विसृज्येति प्रस्तुत्य कृष्णाजिनावधवनेनेति वचनं हविष्कृता वाचं विसृज्येति प्रस्तुत्य प्रस्कन्दनान्तं कर्म कृत्वेति दर्शनान्तरमेतदेव नानाबीजेषु । एवञ्च तण्डुलोदकनिनयनं तत्र भविष्यति ॥२२॥

सा०—तस्मिन्पुरोडाशीयानुद्वपति—'प्रति त्वा वर्षवृद्धं वेत्तु' इति । तस्मिञ्छूर्पे, उद्वपति उद्धृत्याऽऽवपतीत्यर्थः । द्वैधे विशेषः—शूर्पस्योपोहन इति । सूत्रं शालीकेः ।

अत्रो ह स्माऽऽह बोधायनस्तृणीं शूर्पमुपोहेत्। समस्तेनैवाऽस्मिन्मन्त्रेण पुरोडाशीयानुद्वपेत्—'वर्षवृद्धमसि…वेत्तु' इति (बौ० श्रौ० २०।७) ।।१५।। अथोदङ्पर्यावृत्य परापुनाति—'परापूतं…अरातयः' इति। परापुनाति, प्रस्फोटयति। शूर्पगतान्तुषान् व्रीह्युत्क्षेपणावक्षेपणाभ्यां तुषानपसारयतीत्यर्थः। द्वैधे विशेषः—अथोदङ्पर्यावृत्य परापुनातीति। सूत्रं बोधायनस्य। यां काञ्चिद्दिशमभिपर्यावृत्य परापुनातीति शालीकिः (बौ० श्रौ० २०।७) इति ।।१६।। सव्येन तुषानुपहत्येमां दिशं निरस्यति—'रक्षसां भागोऽसि' इति। द्वैधे विशेषः—तुषाणां निरसन इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनोऽत एव यावन्मात्रानुपहत्य कृष्णाजिनस्य ग्रीवात उपवपेत्—'रक्षसां भागोऽसि' इति। अथोदकमुपस्पृशेद् इति (बौ० श्रौ० २०।७)। अत एव सव्यहस्तादेव यावन्मात्रान् ग्रहणार्हपरिमाणान् उपहत्य गृहीत्वा कृष्णाजिनस्य ग्रीवातः अधस्तान्निक्षिपेदिति गम्यते। तथा च सूत्रे—'रक्षसां भागोऽसि' इत्यधस्तात्कृष्णाजिनस्योपवपति (आप० श्रौ० १।२०।६) इति ।।१७।।

अथाऽप उपस्पृश्येति। निरसनत्वादेव सामान्यतः सिद्धेऽप्युपस्पर्शने पुनरभिधानं तद्भ्रेषे श्रौतप्रायश्चित्तविधानज्ञापनार्थमित्युक्तम्। विविनक्ति—'वायुर्वो विविनक्तु' इति। विवेकः तण्डुलव्रीह्योः पृथक्करणम् ।।१८।। पात्र्यां तण्डुलान्प्रस्कन्दयति—'देवो वः सविता…प्रतिगृह्णातु' इति। व्रीहिभ्यो विविक्तान्तण्डुलान्दारुपात्र्यामावपति ।।१९।। अवहन्त्र्यै प्रयच्छन्नाह—'त्रिष्फलीकर्तवै, त्रिष्फलीकृतान्मे प्रब्रूतात्' इति। तण्डुलेभ्यो विविक्तान्व्रीहीनवहन्त्र्यै प्रयच्छन्नाह। अवहन्त्री अवहननकर्त्री पत्नी दासी वा। दासी पिनष्टि पत्न्यवहन्ति, विपरीतमित्येके इति श्रुतेः। अनालम्भुकेत्यादिना पत्न्यसन्निधानेऽपरा वा। तथा च कल्पसारे—पत्नी दिदध्यादवघातपेषौ प्रैषे कृते तद्विरहेऽपरा वा इति ।।२०।। त्रिष्फलीकृतान्प्राहुः। त्रिष्फलीकृता इति। फलीकरणं नाम स्वैरत्याच्छादवतुषापनयनम्। त्रिवारं फलीकृताः त्रिष्फलीकृताः। तान्प्राहुः। अत्र बहुवचनेन फलीकरणम् अशक्तविषये बहुकर्तृकमपि भवतीति दर्शयति ।।२१।। 'त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते। रक्षसां भागधेयमापस्तत्प्रवहतादितः' इति तण्डुलप्रक्षालनमन्तर्वेदि निनयत्युत्करदेशे वा। अत्र प्रक्षालनं दारुपात्र्यां, तथैव च निनयनम्। मन्त्रस्य पूर्वपाठो निनयनस्य नित्यतां द्योतयितुम्। तेन च तण्डुलप्रक्षालनोदकनिनयनस्य प्रतिपत्तिकर्मतां निवारयति। तेन च केनचित्तदपचारे पुनस्तत्सम्पादनं द्योतयति ।।२२।।

एतस्मिन् काले प्रातर्दोहं धेनूर्दोहयत्युदगग्रेण पवित्रेण ।।२३।। नात्रातनक्ति ।।२४।।

भव०—अथ प्रातर्दोहमित्येव सिद्धे एतस्मिन् काल इति ब्रुवन् कालान्तरेऽप्यस्तीति दर्शयति। ततश्चाग्निहोत्रानन्तरं पाणिसम्मर्शनात् प्रागपि दोह इति

स्वशाखोक्तत्वान्नोक्तम् । कथम्[1] ? अथ सायं दोहे तिर्यक् प्रातः (तै० ब्रा० ३।२।३।४) इत्यानन्तर्यं बोधयति ।।२३।।

।। इति पञ्चमोऽध्यायः समाप्तः ।।

सा०—एतस्मिन्काले प्रातर्दोहं धेनूर्दोहयत्युदगग्रेण पवित्रेण । नाऽत्राऽऽतनक्ति । एतस्मिन्काले इति वचनात्कालान्तरेऽपि दोहप्रसक्तिं दर्शयति । स चाऽग्निहोत्रानन्तर एव कालः । ब्राह्मणे तिर्यक् प्रातः (तै० ब्रा० ३।२ ३।४) इति श्रवणात् । न चाऽयं सङ्गवकालीनो दोहः प्रातःकालीनो भवति । अत एवोक्तमेतस्मिन्काल इति । अन्यथा प्रातर्दोहमित्येव ब्रूयात् । ततश्चास्य चाऽग्निहोत्रानन्तरस्य च कालस्य विकल्पः प्रातर्दोहे । प्रातर्दोहमिति, दुह्यत इति दोहः पयः कर्म धेनूरिति कर्मभूताः । एवं बहुवचनेन पूर्ववत्षडवमा उदगग्रेण पवित्रेण नात्राऽऽतनक्तीति विशेषनिषेधात् शेषाऽभ्यनुज्ञा गम्यते । ततश्च सायंदोहवत् आतञ्चनादन्यत्सर्वमपि कर्मानुष्ठेयम् । प्राप्ते अप्याऽऽतञ्चनादुपरितने, अपिधान-निधाने निवर्तते । तथा च सूत्रम्-आतञ्चनाऽपिधाने, निधानञ्च निवर्तत (आप० श्रौ० १।१४।७) इति ।।२३-२४।।

अत्र प्रयोगक्रमः—

प्रातरग्निहोत्रानन्तरमध्वर्युरुत्तरेणाहवनीयं तिष्ठन्हस्तौ सम्मृशते 'कर्मणे…शकेयम्' इति । उत्पत्तिक्रमेणाऽऽहवनीयप्रभृति वा पुरस्तात्पश्चाच्चोदगग्रैर्दक्षिणत उत्तरतश्च प्रागग्रैः प्रादक्षिण्येन परिस्तीर्य, दक्षिणानुत्तरानुत्तरानधरान्करोति । एवमितरयोः । एतस्मिन्काले दर्भैरासनानि कल्पयति । दक्षिणेनाऽऽहवनीयं पूर्वं ब्रह्मणोऽपरं यजमानस्याऽऽसने कल्पयति । उत्तरेणाऽऽहवनीयं प्रणीतायाः । उत्तरां श्रोणिमुत्तरेण होतुः । उत्करस्य पश्चादाग्नीध्रस्य । जघनेन गार्हपत्यं पत्न्याः । तेषां प्रवेशे प्रवेशे वा । अथाऽग्रेण गार्हपत्यं दर्भान् संस्तीर्य, प्रक्षाल्य पात्राणि द्वन्द्वं न्यञ्चि सादयति 'स्फ्यञ्च…', यानि चाऽन्यानि पात्राणि तान्येवमेव द्वन्द्वं सादयति । धृष्टयाः अपदेशः स्यादुपवेष एव सान्नाय्यवत्कर्मणि हि इति तज्ज्ञाः । वृषारवोऽश्मा स च सादनीयः समाहतिश्चेदमुना युधानाम् । द्वितीयहानौ सतृणन्तु साद्यं द्वन्द्वत्वसिद्धयै समिधायुजं वा ।

एतस्मिन्काले ब्रह्मा स्नानादिचतुष्टयं कृत्वेडादि जपित्वा चातुःस्वर्ण्येणाऽहतं वासः सूत्रं वा द्वितीयमधिकमुपवीयान्तरेण वेद्युत्करौ प्रपद्याऽग्रेणाऽऽहवनीयं परीत्य स्वसदनस्य दक्षिणत उदङ्मुखस्तिष्ठन् ब्रह्मसदनमुपतिष्ठते—'नमो ब्रह्मसदनाय' इति । आसनादङ्गुष्ठोपकनिष्ठिकाभ्यां तृणं सङ्गृह्य दक्षिणा-प्रत्यङ् निरस्यति । तथा चाऽऽश्वलायनः—'अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेत्' (आश्व० श्रौ० १।२।३१) इति । 'अहे… पाकतर' (आश्व० श्रौ० १।२।३०)इति । अप उपस्पृश्योपविशति—'उन्निवत…गेषम्' इति । द्यावापृथिवी समीक्षते—'पातम्मा० अद्याह्न' इति । उपविश्य जपति—'भूर्भुवः सुवः कः०,

1. यथाकोशं पाठः ।

ओं प्रपद्य' इति। एतस्मिन्काले यजमानो ब्रह्माणं वृणीते—'भूपते···दिवम्' इति। वृतो ब्रह्मा जपति—'अहं भूपति···करिष्यामि ब्रह्माणं मा वृथाः···अङ्गिरसो दिवं देव सवित··· बृहस्पते यज्ञं गापाय' इति। ब्रह्मा ऽहमसौशब्दस्थाने स्वंनाम प्रथमान्तेन वदेत् 'बृहस्पते यज्ञं गोपाय' इति। एवं वृतो[1] ब्रह्मा वाचंयम आस्त आप्रणीताभ्यः।

अध्वर्युः परिभोजनीयात्पृष्ट्या स्तृणाति सन्ततां गार्हपत्यावाहवनीयात् 'यज्ञस्य··· स्तृणामि' इति। परिभोजनीयात्पवित्रार्थं द्वौ कुशावनन्तर्गर्भौ दैर्ध्यपरिणाहाभ्यां समावादायाऽनखेन छित्वाऽप उपस्पृश्य पवित्रे करोति 'इमौ प्राणापानौ···शोधने' इति। अथैने अद्भि-रनुमार्ष्टि —'पवित्रे स्थो···पत्नने स्थ' इति। ग्रन्थि करोति न वा। यदि करोति विस्रस्य प्रस्तरेऽवगूहनम्। उत्तरेण गार्हपत्यमुपविश्याऽन्येनाऽनीतं प्रणीताप्रणयनं पुरतो निधाय तस्मिन्नु-दगग्रं पवित्रं निधायाऽप आनयन्नाऽऽह--'ब्रह्मन्नपः प्रणेष्यामि, यजमान वाचं यच्छ' इति। ब्रह्माऽभ्यनुजानाति--'देव सवितः प्रणय···वेहि' इत्युपांशूक्त्वा 'ओं प्रणय' इत्युच्चैरुक्त्वा वाचंयमो भवति आतण्डुलप्रस्कन्दनात्। यजमानस्याऽपि वाग्यमनमाहविष्कृतः।

अध्वर्युः प्रणीतामद्भिः पूरयित्वा प्राणैः समं धारयमाणोऽनयाऽपः प्रणयामि इति वदन् पृथिवीं मनसा ध्यात्वाऽविषिञ्चन्हरत्युत्तरेणाऽऽहवनीयं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य पवित्रमादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रवन्नादत्ते दक्षिणेनाऽग्निहोत्रहवर्णीं सव्येन शूर्पं—'त्रेषाय त्वा' इति। अवाक्कृत्वा गार्हपत्ये प्रतितपति 'प्रत्युष्टं रक्षः···अरातय' इति। जघनेन गार्हपत्यमनसोऽभावे उदगग्रं स्फ्यं निधाय स्फ्योपरि दारुपात्रीं तस्यां व्रीहीनोप्य शूर्पे अग्निहोत्रहवर्णीं निधाय, तस्या बिले पवित्रं निधाय स्रुग्धस्तः पात्र्याः पूर्वार्धामभिमृशति—'धूरसि···ह्वाः' इति। व्रीहीन्प्रेक्षते—'मित्रस्य···हिंसिषम्' इति। तत्रस्थं तृणं वा शूकं वा निरस्यति—'उरु वाताय' इति। अप उपस्पृश्य 'चित्तिः स्रुक्···सामाध्वर्युः' इति वदेत्। अप्रोषिते यजमानमामन्त्रयते—'हविर्निर्वप्स्यामि' इति, यजमानः—'ओं निर्वप' इत्यनुजानाति। प्रोषिते यजमाने अध्वर्युं,[2] पुत्रोऽन्तेवासी वाऽनुजानाति 'ओं निर्वप' इति। सोदगग्रपवित्रामग्निहोत्रहवर्णीं सव्येन गृहीत्वा तस्यां दक्षिणेन व्रीहिमुष्टिमोप्य दक्षिणेनैव तया शूर्पे निर्वपति--'देवस्य त्वा ··मग्नये जुष्टं निर्वपामि' इति त्रिः। प्रत्यावापं मन्त्रावृत्तिः। सकृत्तूष्णीम्। एतत्पर्वद्वयसाधारणम्। पौर्णमास्यां—'देवस्य त्वा···अग्नीषोमाभ्यां जुष्टं निर्वपामि', समानतन्त्रपक्षे—'इन्द्राय वैमृधाय जुष्टं निर्वपामि'। अन्यत्समानम्। दर्शे तु—असन्नयतः 'इन्द्राग्निभ्यां जुष्टं निर्वपामि' इति। 'इन्द्राय जुष्टं निर्वपामि' इति संनयतः। 'महेन्द्राय' इति तद्याजिनः। उपांशुयाजस्य चरुपक्षे पर्वद्वयेऽप्याग्नेयाऽनन्तरं यथादैवतं द्वैधानुसारेण विष्ण्वादिभ्यो यथादैवतं निर्वपेत्। यजमानः प्रतिदैवतं हविर्निरुप्य-माणमभिमन्त्रयते—'अग्निं होतारं···अस्य' इति। तदुदित्वा वाचंयमो यजमान आ पात्र्यां तण्डुलावापात्।

१. 'कृतो' इति मद्र० सं०। २. 'आमन्त्रयते' इति शेषः।

अध्वर्युर्निरुप्तानभिमृशति—'इदं देवानाम्' इति । अतिशिष्टानभिमृशति—'इदमु नः सह' इति । पात्रीस्थाननिरुप्तान्व्रीहीन्निरुप्तेषु आपवति—'स्फात्यै त्वा नारात्यै इति । आहवनीयमीक्षते—'सुवरसि···ज्योतिः' इति । गृहानन्वीक्षते—'दृंहतां···द्यावापृथिव्योः' इति । अथैनानग्निहोत्रहवण्या सहाऽऽदाय गच्छति—'उर्वन्तरिक्षमन्विहि' इति । उत्तरेण गार्हपत्यमुपसादयति—'आदित्या···सादयामि' इति । उत्तरत उपविश्य गार्हपत्यमभिमन्त्रयते—'अग्ने हव्यं रक्षस्व' इति । अभिमन्त्रणं दृष्ट्वा जपः, स च चातुःस्वर्येण । सशूकायामेवाऽग्निहोत्रहवण्यामुदगग्रे पवित्रे निधायाऽप आनीयोदीचीनाग्राभ्यामुत्तानाऽनामिकाऽङ्गुष्ठाग्रगृहीताभ्यां पवित्राभ्यां त्रिरुत्पुनाति—'देवो वः सवितोत्पुनातु' इति प्रथमं, 'अच्छिद्रेण पवित्रेण' इति द्वितीयं, 'वसोः सूर्यस्य रश्मिभिः' इति तृतीयम् । उत्पवनस्य प्रत्यगारम्भ प्रागपवर्गत्वम् । विशेषस्त्वाज्योत्पवने वक्ष्यते । प्रोक्षणीरादायोपोत्तिष्ठति—'आपो देवी···तूर्ये' इति । स्रुग्गताभिरेवाऽद्भिः स्रुग्गताः प्रोक्षति—'प्रोक्षिताः स्थ, प्रोक्षिताः स्थ' इति मन्त्रं त्रिरुक्त्वा त्रिः प्रोक्षणम् । अथ व्रीहीन्प्रोक्षति—'देवस्य त्वा' इत्यनुद्रुत्य 'अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय' इत्यविकारेण पौर्णमास्यां प्रोक्षणम् । अमावास्यायामसन्नयत 'इन्द्राग्निभ्याम्' इति, सन्नयत 'इन्द्राय' इति, 'महेन्द्राय' इति तद्याजिनः । सकृन्मन्त्रेण द्विस्तूष्णीम् । उत्तानानि पात्राणि कृत्वा प्रोक्षति 'शुन्धध्वं···यज्यायै' इति सकृन्मन्त्रेण द्विस्तूष्णीण् ।

प्रोक्षणीमग्रेण गार्हपत्ये निधाय उत्तरेऽपरे वाऽवान्तरदेशे कृष्णाजिनमवधुनोति, ऊर्ध्वग्रीवमुदङ्ङावृत्य—अवधूतं···अरातय' इति सकृन्मन्त्रेण द्विस्तूष्णीम् । अथैतद्वेद्या उत्तरतः पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति—'अदित्यास्त्वगसि·· वेत्तु' इति । अनुत्सर्गे विकल्पः । तस्मिन्नुलूखलमध्यूहति—'अधिषवणं···त्वग्वेत्तु' इति । तस्मिन्हविरावपति—'अग्नेस्तनूरसि···गृह्णामि' इति । मुसलमवदधाति—'अद्रिरसि···ष्व' इति । हविष्कृतं पत्नीं 'हविष्कृदेहि हविष्कृदेहि' इति त्रिः[आह्वयति]। 'उच्चैः समाहन्तवै' इत्याग्नीध्रमाह । अनादेशे सर्वत्राग्नीध्रः परिकर्मी वा । आग्नीध्रः शम्यया 'इषमावदोर्ज···जेष्म' इति द्विदृषदि सकृदुपलायां समाहन्ति । त्रिरावृत्तिर्मन्त्रस्य क्रियायाश्च । यत्राऽऽरम्भस्तत्र समाप्तिः, तत्र पुनरारम्भः । दृषदुपले पश्चिमपूर्वे दक्षिणोत्तरे वा । दृषदि समारम्भः, उपलायां समाप्तिः । एवञ्च नवकृत्वः समाहननम् ।

अध्वर्युर्व्रीहीनपगततुषान्कृत्वोलूखलस्योत्तरतः शूर्पं निदधाति—'वर्षवृद्धमसि' इति । शूर्पे व्रीहीनुद्वपति—'प्रति त्वा ··त्तु' इति । उदङ् पर्यावृत्य परापुनाति—'परापूतं रक्ष··· अरातय' इति । सव्येन तुषानुपहत्य नैर्ऋत्यां निरस्यति—'रक्षसां भागोऽसि' इति । रक्षोभ्य इदं । अप उपस्पृश्य व्रीहीन्तण्डुलांश्च पृथक्करोति—'वायुर्वो विविनक्तु' इति । दारुपात्र्यां तण्डुलानावपति—'देवो वः सविता··प्रतिगृह्णातु' इति । यजमानो यज्ञं योगेन युनक्ति—'कस्त्वा युनक्ति स त्वा युनक्तु' इति । मन्त्रजप एव यज्ञयोगः, विहारेक्षणं वा । अध्वर्युरवहन्त्यै सतण्डुलान्व्रीहीन् प्रयच्छन्नाह—'त्रिष्फली कर्तवै त्रिष्फली कृतान्मे प्रब्रूतात्'

इति । अवहन्त्री तान् त्रिरवहत्य शुक्लीकृत्याऽध्वर्यवे प्रयच्छन्त्याह—'त्रिष्फलीकृताः' इति । अध्वर्युः विविक्ताऽन्तर्बहिस्त्ववकणान्दारुपात्र्यां प्रक्षिप्य प्रक्षाल्याऽन्तर्वेदि निनयति उत्करदेशे वा 'त्रिष्फलो···दितः' इति । 'रक्षोभ्य इदं' । अप उपस्पर्शनम् । एतस्मिन्काले प्रातर्दोहः । जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति । 'मातरिश्वान' इत्यादि कुम्भ्यामुदगग्रं पवित्रं निदधाति । 'वसूनां···धारमित्यादि सम्पृचध्वम्' इति संक्षालननिनयनान्तं करोति । ब्रह्मा दोहोपक्रमप्रभृत्याऽऽदोहसमाप्तेर्वाचंयमो भवति ॥

इति प्रथमे प्रश्ने पञ्चमोऽध्यायः ॥

॥ इति पञ्चमोऽध्यायः समाप्तः ॥

—:०:—

# षष्ठोऽध्यायः

अथ प्रोक्तेषु त्रिष्फलीकृतेषु तथैव कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्य—'अवधूतं रक्षोऽवधूता अरातयः' (तै० सं० १।१।६।१) इति त्रिः ॥१॥ अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति—'आदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु' (तै० सं० १।१।६।१) इति ॥२॥

भव०—अमावास्याक्रममुक्त्वा पौर्णमासीक्रममाह। अथ प्रोक्तेष्विति निनयनान्तं त्रिष्फलीकरणम्। अन्ये च ब्रुवते त्रिष्फलीकरणानन्तरम्। कृष्णाजिनावधूननवचनात् तण्डुलोदकनिनयनमनित्यमिति। अन्येषामेतदपि ज्ञापकं प्राक् पाणिसंमर्शनाद् दोह इति। तथैवेति प्राक्तनस्य विधेरुक्तत्वादुपनिष्क्रम्य अन्तरेवैताम् (बौ० श्रौ० २०।६) इति वावधूनने यः पक्षः स एवातिदिश्यत इति गम्यते ॥१॥

पुनरथैनत्पुरस्तादिति वचनादेतस्याभिप्रेतत्वं स्वशाखोक्तत्वादेतदेव ज्ञापयति पक्षान्तरमप्यस्तीति तथा च द्वैधे (बौ० श्रौ० २०।७) स्पष्टीकृतम् ॥२॥

सा०—अथ प्रोक्तेषु त्रिष्फलीकृतेषु तथैव कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्य—'अवधूतं...अरातयः' इति त्रिः। त्रिष्फलीकृता इत्युक्ते सकृत्[1] कृष्णाजिनमवधूनोति। क्रमः पौर्णमासविषयः। दर्शे तु न, प्रातर्दोहाऽऽनन्तर्यसिद्धत्वात्। अत्र केचित् 'त्रिष्फलीकृताः' इत्युक्त्वाऽनन्तरमेव कृष्णाजिनमवधूनोतीत्युक्ते तण्डुलप्रक्षालनोदकनिनयनमनित्यमित्याहुः। अयमनित्यत्वपक्षः पौर्णमासविषयः। तथैवेत्यनेन सर्वेषु कृष्णाजिनाऽवधूननधर्मेषु प्राप्तेषु पुनरूर्ध्वग्रीवमुदङ्ङावृत्येत्यभिधानाद् द्वैधोक्ताऽधरलोमोपस्तरणपक्षाऽनुसरणेनाऽबहिर्लोमोऽवधूननपक्षमपि सङ्गृह्णाति। उदङ्ङावृत्येत्यनेन दिगन्तराभिमुख्यपक्षं निवारयति इति ग्रहणमनुवादः ॥१॥ अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति—'अदित्यास्त्वगसि...वेत्तु' इति। द्वैधे विशेषः—कृष्णाजिनस्य पुनरास्तरण इति। सूत्रमाचार्ययोः। प्राचीनग्रीवमुत्तरर्क्षमित्यौपमन्यवः (बौ० श्रौ० २०।७) इति। पुनरास्तरणेऽधिवपनार्थे प्राक्तन एव कृष्णाजिनस्य प्रकार इत्याचार्ययोर्मतम्। औपमन्यवस्य तु मते प्राचीनग्रीवमुत्तरर्क्षम्। ऋक्षं विशसनप्रदेशः। तस्योत्तरत्वं सलोमप्रदेशस्याऽधरीभाव इत्यर्थः ॥२॥

तस्मिन्नुदीचीनकुम्बां शम्यां निदधाति—'दिवस्कम्भनिरसि प्रति त्वादित्यास्त्वग्वेत्तु' (तै० सं० १।१।६।१) इति ॥३॥ तस्यां प्राचीं

१. 'इत्युक्तेषु सत्सु' इति मद्र० सं०।

दृषदमध्यूहति—'धिषणासि पर्वत्या प्रति त्वा दिवस्कम्भनिर्वेत्तु' (तै० सं० १।१।६।१) इति ॥४॥ दृषद्युपलामध्यूहति—'धिषणासि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु (तै० सं० १।१।६।१) इति ॥५॥ तस्यां पुरोडाशीयानधिवपति—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मै यथादेवतम्' (तै०सं० १।१।६।१) इति ॥६॥ अधिवदते—'धान्यमसि धिनुहि देवान् धिनुहि यज्ञं धिनुहि यज्ञपतिं धिनुहि मां यज्ञनियम्' (तै० सं० १।१।६।१) इति ॥७॥ पिषति—'प्राणाय त्वापानाय त्वा व्यानाय त्वा' (तै० सं० १।१।६।१) इति ॥८॥ बाहू अन्ववेक्षते—'दीर्घामनु प्रसितिमायुषे धाम्' (तै० सं० १।१।६।१) इति ॥९॥ कृष्णाजिने पिष्टानि प्रस्कन्दयति—'देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु' (तै० सं० १।१।६।१) इति ॥१०॥ हविः पेष्यै प्रयच्छन्नाह—असंवपन्तो पिंषाणूनि कुरुतात्' (तै० ब्रा० ३।२।६।४) इति ॥११॥

भव०—अधिवपनं समस्तानां दृषदि. [प्रक्षेपः] सर्वेषां संस्कार्यत्वाद् अग्नये जुष्टमित्यादि च सर्वविषयत्वात् ॥६॥ पिष्टानि प्रस्कन्दयतीति च स्थूलपिष्टानीति, तथा चाणूनीति प्रैषः। तदर्थं हविः पेष्यै प्रदानं तानि पिष्टोद्वपन्यां प्रक्षिप्य प्रैषः। अन्येषां मुष्टिमात्रमध्युप्य पिष्ट्वा प्रस्कन्द्य हविः पेष्यै प्रदानमिति। असंवपन्ती पतितानि अप्रक्षिपन्ती यथा न पतन्ति तथेत्यर्थः ॥१०-११॥

सा०—तस्मिन्नुदीचीनकुम्बां शम्यां निदधाति—'दिवः स्कम्भनिरसि···र्वेत्तु' इति। कुम्बा स्थूलप्रदेशः ॥३॥ तस्यां प्राचीं दृषदमध्यूहति—'धिषणाऽसि··· निर्वेत्तु इति। प्राचीं प्राग्देशव्यवस्थिताम्। अध्यूहति पश्चाद्भागे यथौन्नत्यं भवति तथा स्थापयति ॥४॥ दृषद्युपलामध्यूहति—'धिषणाऽसि...वेत्तु' इति। अध्यूहति उपरि स्थापयति ॥५॥ तस्यां पुरोडाशीयानधिवपति—'देवस्य त्वा···मग्नये जुष्टमधिवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति यथादेवतम्। निगदव्याख्यातमेतत् ॥६॥ अधिवदते—'धान्यमसि··· यज्ञनियम्' इति। अधिवदते अधिवाप्य[1] जपति ॥७॥ पिषति—'प्राणाय···त्वा' इति। पिंषति चूर्णयति। द्वैधे विशेषः—पेषण इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनः—प्राणाय त्वा' इति प्राचीं प्रोहेत्, 'अपानाय त्वा' इति प्रतीचीं, 'व्यानाय त्वा' इति तिरश्चीं[2] कर्षेद् (बौ० श्रौ० २०।७) इति। उपलामिति शेषः। तिरीचीं[3] तिरश्चीम्।

१. 'अध्युष्य' इति मद्र० सं०। २. द्रष्टव्याग्रिमा टिप्पणी।
३. वृ० कोशमात्रे। एतत्पाठानुसारं सायणमते द्वैधसूत्रे 'तिरीचीं' पाठः स्यात्।

तथा च सूत्रं–प्राणाय त्वा इति प्राचीमुपलां प्रोहेत् । अपानाय त्वा इति प्रतीचीं,व्यानाय त्वा इति मध्यदेशे व्यवधारयति (आप० श्रौ० १।२१।६) इति । एवं समन्त्रकं मुष्टिमात्रस्य पिष्टीकरणेन सर्वमपि हविः संस्कृतं भवति ॥८॥ अथ[1] बाहू अन्ववेक्षते–'दीर्घामनु···धाम्' इति । सकृदेव मन्त्रः, द्विवचनेन चरितार्थत्वात् । द्वैधे तु—अथ प्राचीं प्रोहेत्–'दीर्घामनु··· धाम्' इति (बौ० श्रौ० २०।७) ॥९॥ कृष्णाजिने पिष्टानि प्रस्कन्दयति—'देवो वः··· प्रतिगृह्णातु' इति । द्वैधे च—कृष्णाजिने पिष्टानि प्रस्कन्दयेत्—देवो व···प्रतिगृह्णातु' इति (बौ० श्रौ० २०।७) । प्रस्कन्दनमावापः ॥१०॥ हविः पेष्यै प्रयच्छन्नाह—'असंवपन्ती ···कुरुतात्' इति । असंवपन्वती पतितानां पिष्टकणानां पुनरावपनमकुर्वन्ती । अणूनि सूक्ष्माणि ॥११॥

पिंषन्ति पुरोडाशीयान् ॥१२॥ नि चरव्यान् दधति ॥१३॥ यदि चरुं करिष्यन् भवति प्रागधिवपनाच्चरुपुरोडाशीयान् विभजेरन् ॥१४॥

भव०—पिंषन्तीति बहुवचनं पत्नीनियमाभावार्थम् ॥१२॥ चरव्यान् निदधातीत्येव सिद्धे विभागवचनं देवताविभागार्थम् । चरुवचनमुपांशुयाजापेक्षमौषधपक्षे[2] ॥१३-१४॥

॥ इति षष्ठोऽध्यायः समाप्तः ॥

सा०—पिंषन्ति पुरोडाशीयान् । अत्र बहुवचनेन पत्न्यशक्तौ बहूनां कर्तृत्वं द्योतयति । सोऽयं क्रमो धान्यनिर्वापे । अशक्तौ पिष्टनिर्वापे त्ववघातादिमन्त्रजपः । तथा च भारद्वाजः— पिष्टे पेषणमन्त्राञ्जपेत् इति । लौगाक्षिरपि—

छिन्ने पिष्टे तथा लूने सान्नाय्ये मार्तिके तथा ।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥ इति ॥

न केवलं मन्त्रजपमात्रं, अवघातादिषु तत्तत्साधनेन पिष्टमेव तथा संस्कुर्यात् । 'आहृतं वा यजुषा करोति' (बौ० श्रौ० २।१९।२) इति लिङ्गदर्शनात् ॥१२॥ नि चरव्यान् दधति । यदि चरुं करिष्यन्भवति प्रागधिवपनाच्चरुपुरोडाशीयान्विभजेरन् । यदि चरुं करिष्यन्भवति इत्युपांशुयाजपक्षे तस्य चरोर्विकल्पितत्वात् विकृतिषु चरुनियमस्य तद्विकल्पस्याऽपि सम्भवात् चरव्यान् निदधाति, अधिवपनात्प्राक्चरुपुरोडाशीयान्विभजेरन् इति च सर्वाऽपेक्षम् ॥१३-१४॥

अथ प्रयोगक्रमः—

तण्डुलप्रक्षालनाऽनन्तरं पौर्णमास्यां कृष्णाजिनाऽवधूननम् । अमावास्यायां दोहनाऽन-

---

१ नास्ति कै० सं०, वृ० कोशे च ।

२. क-कोशे 'इति भावकृतौ कल्पविवरणे दर्शपूर्णमासे' इत्यधिकः पाठः । तत्र 'भवकृतौ' इति पाठः समीचीनः स्यात् ।

न्तरमवधूननम् । उपांशुयाजचरुपक्षे तण्डुलप्रक्षालनाऽनन्तरं, चर्वर्थं[1] तण्डुलान्विभज्याऽन्यत्र निदधाति पौर्णमास्याम् । अमावास्यायां दोहनाऽनन्तरं विभज्य निदधाति । कृष्णाजिनाऽवधूननस्योर्ध्वग्रीवम् इत्यादि पूर्ववत् । अदित्या इत्यादि च । कृष्णाजिनस्याऽपरभागे उदीचीनस्थूलप्रदेशां शम्यां निदधाति 'दिवस्कम्भ···रवेत्तु' इति । तस्यां प्राक्प्रवणां दृषदं निदधाति—'धिषणाऽसि' इति । दृषद्युपलामभ्यूहति—'धिषणाऽसि पार्वतेयी···वेत्तु' इति । दृषदि पुरोडाशार्थंतण्डुलानधिवपति—'देवस्य त्वेत्यनुद्रुत्य अग्नयेजुष्टमधिवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय' इति पौर्णमास्यास् । अमावास्यायाम्—'अग्नये जुष्टमधिवपामीन्द्राग्निभ्यां' इत्यसन्नयतः । 'इन्द्राय' इति सन्नयतः । 'महेन्द्राय' इति तद्याजिनः । न्युप्य जपति—'धान्यमसि···यज्ञनियम्' इति । ब्रह्मणो वाग्यमनमधिवपनमारभ्याऽऽकपालोपधानात् । अध्वर्युः पिनष्टि—'प्राणाय त्वा' इति प्राचीमुपलां प्रोहति, 'अपानाय त्वा' इति प्रतीचीं, 'व्यानाय त्वा' इति मध्ये व्यवधारयति । स्वबाहू अवेक्षते 'दीर्घां···धाम् इति । किञ्चित् पिष्ट्वा कृष्णाजिने पिष्टानि प्रस्कन्दयति 'देवो वः···तु' इति । पिष्टानि प्रयच्छन्नाह—'असंवपन्ती पिंषाऽणूनि कुरुतात्' इति । पत्नी सूक्ष्मपिष्टानि करोति ।

अत्र विनियोगसंङ्ग्रहः—

देवो व अप उत्पूयाऽपस्ता उन्महयन्स्थितः ।
प्रोक्षयेच्च प्रोक्षितास्थेत्यपो धान्यं तथाऽग्नये ॥
अग्नोत्यादि यथायोगं शुन्धध्वं पात्रसंहतिम् ।
धुनुयादवधूतेति कृष्णाजिनमथोत्करे ॥
अदित्या इति चास्तीर्याऽध्युलूखलनियोजनम् ।
अग्नेस्तत्र हविः क्षेप अद्रिर्मुसलयोजनम् ॥
इषमित्यश्मनोर्घातः शूर्पं वर्षेत्यूदक्षिपेत् ।
प्रति त्वाऽस्मिन्हविःक्षेपो वायुर्वो विविनक्त्विति ॥
विवेकस्तण्डुलव्रीह्योर्देवो व इति तण्डुलान् ।
पात्र्यां क्षिपेत्सप्तदश मन्त्रा इह निरूपिताः ॥

इति प्रथमे प्रश्ने षष्ठोऽध्यायः ॥

॥ षष्ठोऽध्यायः समाप्तः ॥

—:o:—

१. 'चर्वर्थान्' इति वृ० कोशे ।

# सप्तमोऽध्यायः

अथैतानि कपालानि प्रक्षालितानि जघनेन गार्हपत्यमुपसादयति ॥१॥ अष्टौ दक्षिणत एकादशोत्तरतः ॥२॥ अथ जघनेन गार्हपत्यमुपविश्य धृष्टिमादत्ते—'धृष्टिरसि ब्रह्म यच्छ' (तै० सं० १।१।७।१) इति ॥३॥

भव०—एतानीति सन्निहितवचनेनाधानप्रभृतिपात्राणां धारणं दर्शयति। प्रक्षालितानीति सिद्धवदुपदेशात् सर्वाणि पात्राणि प्रक्षाल्य सादयतीति गम्यते। तथा पात्राणि निर्णिज्य संसादयेदिति ॥१॥ संख्योपसादने सौकर्यार्थं प्रदर्शनार्थं चैतत् सर्वत्रोपयोज्य द्रव्याणां प्राग्विनियोगात् संनिधापनार्थमेवमव्यासङ्गः कर्मणो भवति ॥२॥ गार्हपत्ये आज्याधिश्रपणपत्नीसंयाजवचनात् श्रपणस्यानियमप्राप्तौ गार्हपत्यग्रहणम्। धृष्टिग्रहणं सनयदर्थं संन्नयतः शाखानुनिष्पादितत्वाद् अमावास्यायामुपवेषः कपालोपधानार्थः। उपवेषस्य अमावास्यायां पौर्णमास्यां विकल्पवचनं केवलं सान्नाय्यार्थत्वे पौर्णमास्यां तदनर्थकं स्यात्। तस्मादुपवेषाभावे धृष्टिर्वा उपवेशः (तै० ब्रा० ३।३।११।२) इति दर्शनाद् उपवेषेऽपि मन्त्रो विद्यते ॥३॥

सा०—अथैतानि कपालानि प्रक्षालितानि जघनेन गार्हपत्यमुपसादयति। एतानि आसादितानि। एतानीति आधानप्रभृति पात्रवत्कपालानामपि धारणं द्योतयति। प्रक्षालितानीत्यनेन आसादनात्प्रागेव प्रक्षालनं गम्यते। जघनेन गार्हपत्यमिति पुरोडाशश्रपणं नियमयति ॥१॥ अष्टौ दक्षिणत एकादशोत्तरतः। तदेतद् द्वयं [1]दर्शपौर्णमासयोर्नियतमेव। वैमृधस्य तन्त्रत्वपक्षे तु, तदुत्तरत एकादशकपालानि उपसादयेत् ॥२॥ अथ जघनेन गार्हपत्यमुपविश्य धृष्टिमादत्ते—'धृष्टिरसि ब्रह्म यच्छ' इति। उपवेषाऽभावे धृष्टिग्रहणम्। तत्सद्भावे तु तत्राप्ययं मन्त्रः धृष्टिर्वा उपवेश (तै० ब्रा० ३।३।११।२) इति दर्शनात्। द्वैधे विशेषः—नैकचरौ धृष्टेरादानं विद्यते, न बहुष्विति शालीकिः। अत्रे ह स्माऽऽह बोधायन आदित एव धृष्टिमाददीत—'धृष्टिरसि ब्रह्म यच्छ' इति (बौ० श्रौ० २०।८)। एकश्चरुर्यस्मिन्निति स एकचरुः। बहुषु चरुषु सत्सु धृष्ट्यादानं न विद्यते। एकचरुः—'अर्यम्णे चरुं निर्वपेत्' इत्येवमादिः। बहुचरुः—'अनुमत्यै चरुं राकायै चरुं सिनीवाल्यै चरुं कुह्वै चरुम्' इत्यादिः। उपलक्षणञ्चैतत् द्विचरोरपि सम्भवात्। पुरोडाशसाहित्येऽप्यसाहित्येऽपि न धृष्ट्यादानमित्येकः पक्षः। एकचरुपक्षस्य कर्मधारयत्वे चरुविषय एव धृष्ट्यादाननिषेध इत्यन्य पक्षः। तथा च पुरोडाशार्थं धृष्ट्यादानं नियतम्। तत्र 'आदित एव धृष्टिमाददीत' इति बोधायनः। न नु प्रतिकपालगणं धृष्टिग्रहणाऽऽवृत्तिरिति एकः पक्षः ॥३॥

---

१. 'दर्शपूर्ण०' इति बृ० कोशे।

गार्हपत्यमभिमन्त्रयते—'अपाग्नेऽग्निमामादं जहि' (तै॰ सं॰ १।१।७।१) इति ॥४॥ 'निष्क्रव्यादं सेध' (तै॰ सं॰ १।१।७।१) इति दक्षिणाङ्गारं निरस्यति ॥५॥ अथान्यमावर्तयति—'आ देवयजं वह' (तै॰सं॰ १।१।७।१) इति ॥६॥ तं दक्षिणेषां कपालानां मध्यमेनाभ्युपदधाति—'ध्रुवमसि पृथिवीं दृंहायुर्दृंह प्रजां दृंह सजातानस्मै यजमानाय पर्यूह' (तै॰ सं॰ १।१।७।१) इति ॥७॥ अङ्गारमधिवर्तयति—'निर्दग्धं रक्षो निर्दग्धा अरातयः (तै॰ सं॰ १।१।७।१) इति ॥८॥ अथ पूर्वार्ध्यमुपदधाति—''धर्त्रमस्यन्तरिक्षं दृंह प्राणं दृंहापानं दृंह सजातानस्मै यजमानाय पर्यूह' (तै॰ सं॰ १।१।७।१) इति ॥९॥ अथापरार्ध्यमुपदधाति—'धरुणमसि दिवं दृंह चक्षुर्दृंह श्रोत्रं दृंह सजातानस्मै यजमानाय पर्यूह' (तै॰ सं॰ १।१।७।१) इति ॥१०॥ अथ दक्षिणार्ध्यमुपदधाति—'धर्मासि दिशो दृंह योनिं दृंह प्रजां दृंह सजातानस्मै यजमानाय पर्यूह' (तै॰ सं॰ १।१।७।२) इति ॥११॥ अथ पूर्वमुपधिमुपदधाति—'चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह' (तै॰ सं॰ १।१।७।२) इति ॥१२॥ अथापरमेवमेव ॥१३॥

द्वे उत्तरतः संस्पृष्टे उपदधाति—'चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह' (तै॰ सं॰ १।१।७।२) इति ॥१४॥ अथैनान्यङ्गारैरधिवासयति—'भृगूणामङ्गिरसां तपसा तप्यध्वम्' (तै॰ सं॰ १।१।७।२) इति ॥१५॥ अथैनानि योगेन युनक्ति—'यानि घर्मे कपालान्युपचिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू युङ्क्ताम्[1]' (तै॰ सं॰ १।१।७।२) इति ॥१६॥ एवमेवोत्तराणि कपालान्युपदधाति ॥१७॥

भव॰—अङ्गारनिरसनाधिवर्तने धृष्टचा केचिन्मन्त्रं यथा पठितमेव इच्छन्ति। केचिदनुषजन्ति निरग्निं क्रव्यादं सेध आग्नेऽग्निं देवयजं वहेति। एवं निराकाङ्क्षौ भवतः ॥५-६॥ अङ्गारावर्तनाधिवर्तने प्रथमस्यैवादृष्टार्थत्वादथैनान्यङ्गारैरिति दृष्टार्थत्ववचनात् ॥८॥ द्वे उत्तरत इत्यभिसम्बन्धेन, अथापरमेवेति चतुर्णामुपधानमुक्त्वा चित स्थेत्यर्थवादे सजातानस्मा अभितो बहुलान् (तै॰ ब्रा॰ ३।२।७।६) इति दर्शनात् ॥१५॥ योगो मन्त्रजपः। युङ्क्तामिति शाखान्तरीयो मन्त्रः ॥१६॥

१. 'विमुञ्चताम्' इति तै॰ सं॰।

सा०—गार्हपत्यमभिमन्त्रयते—'अपाऽग्ने…जहि' इति । 'निष्क्रव्यादं सेध' इति दक्षिणाऽङ्गारं निरस्यति । अथाऽन्यमावर्तयति—'आ देवयजं वह' इति । तदेतत्कर्मान्ते विवृतम्—अपाऽग्नेऽग्निमामादं जहि इति । को नु खल्वामाद्भवति इति । अपराऽग्निरेवैष उक्तो भवति । निष्क्रव्यादं सेधेत्यादहनाग्निरेवैष उक्तो भवति । आ देवयजं वह इत्याहवनीय एवैष उक्तो भवति । को नु खलु कव्यवाहन इत्यन्वाहार्यपचन इत्येव ब्रूयात् । विज्ञायते—'यदग्ने कव्यवाहन…वृधः' इति (बौ० श्रौ० २४।२६।१-६)। आदहनाऽग्निः, आगत्य दहन्ति अस्मिन्मृतं इत्यादहनाऽग्निः । अत्र केचिद् एतन्मन्त्रत्रयं यथाऽम्नातमेवेच्छन्ति । अपरे तु उत्तरयोरपि मन्त्रयोः अग्नेऽग्निमिति पदद्वयम् अनुषज्य पठन्ति—'निरग्नेऽग्निं क्रव्यादं सेध' इति, 'आग्नेऽग्निं देवयजं वह' इति । दक्षिणाऽङ्गारनिरसनं गार्हपत्यस्य दक्षिणभागात् । अन्याऽऽवर्तनमुत्तरभागात् ॥४-६॥ तं दक्षिणेषां कपालानां मध्यमेनाऽभ्युपदधाति—'ध्रुवमसि…पर्यूह' इति । तमङ्गारं मध्यमेन कपालेन प्राथमिकत्वेऽप्यस्य भाविप्रतिसन्धानेन मध्यमत्वम्, अभिरभिव्याप्तौ अङ्गारं व्याप्योपदधातीत्यर्थः ॥७॥ अङ्गारमधिवर्तयति—'निर्दग्धं…तयः' इति । अधिवर्तयति कपालस्योपर्यङ्गारं निदधातीत्यर्थः ॥८॥ अथ पूर्वार्ध्यमुपदधाति—'धर्त्रमसि…पर्यूह' इति । पूर्वार्ध्यमुपहितकपालपूर्वभागसम्बन्धि ॥९॥ अथाऽपरार्ध्यमुपदधाति—'धरुणमसि… पर्यूह' इति । अथ दक्षिणार्ध्यमुपदधाति—'धर्माऽसि दिशो…पर्यूह इति । अथ पूर्वमुपधिमुपदधाति—'चित्तः स्थ…पर्यूह इति । उपधिं, कोणक्षेत्रं [1]मध्यमद्वयपूर्वार्ध्यक्रमेणेत्यर्थः ॥१०-१२॥ अथाऽपरमेवमेव । अपरमुपधिं[2] मध्यमद्वयाऽपरार्ध्यसम्बंधिक्षेत्रमित्यर्थः । सम्बन्धिकपाले वोपधिशब्दप्रयोगः ॥१३॥ द्वे उत्तरतः संस्पृष्टे उपदधाति—'चितः स्थ…पर्यूह' इति । एवमेवेत्यनुषज्यते[3] । मध्यपूर्वार्ध्यक्रमेणेत्यर्थः । चितः स्थेत्यस्य मन्त्रस्याऽऽद्यन्तयोः पाठात् पृथङ्मन्त्रवत्कपालचतुष्टयाऽतिरिक्तेषु कपालेषु प्रतिकपालं मन्त्रावृत्तिं द्योतयति ॥१४॥ अथैनान्यङ्गारैरधिवासयति—'भृगूणा…तप्यध्वम्' इति । एतानि उपहितानि कपालानि अङ्गारैः परितो वासयति बाढर्थाय सम्यक् पुरोडाशश्रपणाय च । एवमस्य दृष्टार्थतया प्राक्तनयोरङ्गारावर्तनाधिवर्तनयोरदृष्टार्थतया न प्रतिकपालमावृत्तिः ॥१५॥ अथैनानि योगेन युनक्ति—'यानि घर्मे…युङ्क्ताम्' इति । युज्यतेऽनेन इति योगो मन्त्रः । तेन युनक्ति मन्त्रं जपतीत्यर्थः । युङ्क्तामिति शाखान्तरीयः पाठः ॥१६॥ एवमेवोत्तराणि कपालान्युपदधाति । अत्राऽतिदेशो धृष्टयाऽऽदानादिक इति केचित् । अन्ये त्वङ्गारनिरसनादिक इति । अपरे त्वङ्गराऽऽवर्तनादिक इति ॥१७॥

अभीन्धते कपालानि ॥१८॥ उपेन्धते चरुस्थालीम् ॥१९॥ अध्यस्यन्ति श्रपणानि ॥२०॥ तपन्ति पिष्टसंयवनीया आपः ॥२१॥

---

१. '०क्रमणे:संबन्धिक्षेत्रमित्यर्थः' इति वृ० कोशे ।
२. '०मुपधिमध्य०' इति वृ० कोशे ।
३. '०षज्यति इति मद्र० सं० ।

**भव०**—एवमेवेत्यतिदेशादथान्यमावर्तयतीभ्यारभ्य प्राक्तनं मन्त्रम्[1]। अभीन्धत इत्यादि बहुवचनं कर्तृनियमार्थम् ॥१९॥ श्रप्यन्ते यैस्तानि श्रपणानि काष्ठानि। अध्यसनं प्रक्षेपः ॥२०॥ **पिष्टसंयवनीया** मदन्ती। प्रणीतानां पाकार्थत्वात्तत इति केचित्। पिष्टसंयवनीयाः प्रणीता इत्यवचनादप इति सामान्यवचनात् **पूर्णपात्रमन्त-र्वेदि निनयति** (बौ० श्रौ० ३।२०।६) इति चान्ते श्रवणादन्या इत्यपरे। तथा च **प्रणीताभ्यः स्रुवेण** (बौ० श्रौ० १।९।३) इति। तूष्णीमधिश्रपणं स्थाल्यां तिरःपवित्रमप आनयनं चातुर्मास्यादिषु दर्शनात् ॥२१॥

**॥ इति सप्तमोऽध्यायः समाप्तः ॥**

**सा०**—अभीन्धते कपालानि। उपेन्धते चरुस्थालीम्। अध्यस्यन्ति श्रपणानि। तपन्ति पिष्टसंयवनीया आपः इति। **बहुवचनेन कर्तृनियमं द्योतयति। श्रप्यन्ते हवींष्येभिरिति श्रपणानि काष्ठानि, अध्यस्यन्ति अग्नौ प्रक्षिपन्ति। तैः कपालान्यभीन्धते उपरिष्टाद्दीपयन्ति। उपेन्धते चरुस्थालीमिति उपांशुयाजचरुपक्षे द्वैधोक्तक्रमेणाऽऽग्नेयकपालोपधानानन्तरं स्थाल्यधिश्रयणादि तेनैव क्रमेण चरुद्रव्यकेषु चरुमुखेषु पुरोडाशमुखेष्वपि द्रष्टव्यम्। पिष्टसंयवनीयाः पिष्टसङ्ग्रहार्थाः आपः लौकिकाः मदन्तीयाः, न तु प्रणीतागताः, प्रणीताभ्यः स्रुवेणोपहत्य (बौ० श्रौ० १।९।३) इति वचनात्, अन्ते पूर्णपात्रनिनयनग्रहणाच्च। तदेतत्सर्वं द्वैधे स्पष्टमुक्तम्—**

नैकचरौ धृष्टेरादानं विद्यते न बहुष्विति शालीकिः। अत्रो ह स्माऽऽह बोधायनः, आदित एव धृष्टिमाददीत—'धृष्टिरसि ब्रह्म यच्छ' इति। गार्हपत्यमभिमन्त्रयते[2]—'अपाग्ने…हि' इति। 'निष्क्रव्यादं सेध' इति दक्षिणाङ्गारं निरस्येत्। अथाऽन्यान्कल्पयेत्—'आदेव…ह' इति। तेषु चरुस्थालीमधिश्रयेत्—'ध्रुवासि…पर्यूह' इति। अथैनां प्रदक्षिणमङ्गारैः परिचिनुयात्—'निर्दग्धं…यः' इति। स एवमेव सर्वाश्चरुस्थालीरधिश्रयेदिति। चरुमुखेष्विति। स ह स्माऽऽह बोधायनः, आदित एव धृष्टिमाददीत। मुख्यादेव भक्षान्सादयेदिति। अत्रो ह स्माऽऽह शालीकिः, कपालसंयोजने खलु धृष्टेरादानं भवति। स कपालान्येवोपधास्यन् धृष्टिमाददीत। पुरोडाशादेव भक्षान्सादयेदिति। कपालानमुपधान इति। सूत्रमाचार्ययोः। अत्रो ह स्माऽऽहौपमन्यवो यथाम्नायं खल्वस्यैवं कपालान्युपहितानि भवन्ति। य एवैषोऽङ्गाराधिवर्तनो[3] मन्त्रस्तं प्रथमं कपालोपधानानां कुर्यादथ तूष्णीमङ्गारमधिवर्तयेदिति। एककपालो द्विकपाल इति। स ह स्माऽऽह बोधायनो यदि चैककपालो यदि च द्विकपालः सर्वैरेनं कपालमन्त्रैरुपदध्यादिति। अत्रो ह स्माऽऽह शालीकिर्यथाधिकरण-

---

१. 'यावद्' इति शेषः।
२. '०येत' इति कै० स०।
३. '०वर्ततो' इति कै० सं०।

मेव कपालन्युपदध्यात्। न तु योगाभ्यूहौ गमयेत्। तपनमन्त्रं [1]वाऽत्र ब्रूयात्—'भृगूणा···तप्यस्व, तप्येथाम्, तप्यध्वम्' इति। कपालानां योग इति। सूत्रमाचार्ययोः। अत्रो ह स्माऽऽहौपमन्यव एतैरेवाऽस्यैतानि मन्त्रैर्युक्तानि यैरुपहितानि भवन्ति। अथेतरो विमोचनमन्त्र एव स्यादिति। मदन्तीनामधिश्रयण इति। तिरः पवित्रमप आनीयाऽधिश्रयेदिति बोधायनः। यथोपपादमिति शालीकिः (बौ० श्रौ० २०।८)।

एतामिति चरुस्थालीम्, अङ्गारैः परिचिनुयात् परितः पूरयेत्। स एवमेवेति चरुबहुत्वेऽपि एवमेव उक्तक्रमेण सर्वाश्चरुस्थालीरधिश्रयेत्, अङ्गारैः परिचिनुयाच्चेत्यर्थः। चरुमुखेषु चरुपूर्तकेषु आददीत धृष्टिमिति शेषः। मुख्यादेव धृष्टेरेव, नत्वौपचारिकादुपवेषात्। भक्षान् सादयेत्, भक्षशब्दोऽङ्गारवचनः, अग्नेर्भक्षरूपत्वात्। बह्वङ्गारासादनं मुख्यधृष्टिसम्पाद्यमेव, न तु समिद्रूपादुपवेषादित्यर्थः। शालीकेर्मते तु कपालसंयोगे खलु कपालसम्बन्ध एव धृष्टेरादानं भवति। अत एव कपालान्युपधास्यन्धृष्टिमाददीत, न तु चर्वर्थम्। पुरोडाशादेव भक्षानुत्सादयेत् पुरोडाशादेवऽङ्गारानुद्वासयेत्, नतु चरुस्थाल्या इत्यर्थः। यथाम्नायम्, आम्नायमनतिक्रम्य। अस्य पुरोडाशस्यैवम् उक्तेन क्रमेणाऽङ्गाराधिवर्तनो मन्त्रः 'निर्दग्धं रक्षः' इत्यादिकः, तं कपालोपधानानां प्रथमं कुर्यात्। उपधीयन्ते इति उपधानानि कपालानि। तेषां प्रथमं[2] समन्त्रेणाऽङ्गारेण कुर्यात्। अन्येषु तूष्णीमङ्गारानधिवर्तयेत्। एककपाले द्विकपाले च विशेषमाह—यदि चेति। सर्वैर्ध्रुवमसीत्यादिभिः पञ्चभिर्मन्त्रैः एककपालमुपदध्यात्। एवं द्विकपालेऽपि। शालीकिमते तु—अधिक्रियत इत्यधिकरणं मन्त्रः, तमनतिक्रम्य कपालान्युपसादयेत्। एककपाले द्विकपाले च, प्राथमिकद्वितीयमन्त्रानतिक्रमेण यथाक्रममुपसादयेत्, न त्वेकत्र सर्वमन्त्रप्रयोग इत्यर्थः। न तु योगाभ्यूहौ गमयेत्। योगो मन्त्रान्तरसम्बन्धः। अभ्यूहस्तपनमन्त्रः। तं न प्रापयेत्। पक्षान्तरमाह—तपनमन्त्रं वेत्यादि। औपमन्यवस्तु योगमन्त्रापगममाह—एतैरेवेति। एतानि कपालानि यैर्मन्त्रैरुपहितानि भवन्ति तैरेव मन्त्रैर्युक्तानि भवन्ति, न तु योगमन्त्रः यानि घर्मे इत्यादिकः शाखान्तरीयः। स्वशाखीयो विमोचनमन्त्रस्तु अङ्गीकृत इत्याह—अथेतर इति। स्यादेवेत्यन्वयः। सर्वपुरोडाशकपालानि न्यग्भूतान्येव भवन्ति। त्रैधातवीयेष्टचाम्—उत्तानेषु कपालेषु अधिश्रयति (तै० सं० २।३।६।२) इति विशेषविधानात्॥१८-२१॥

अथ प्रयोगक्रमः—

अध्वर्युः कपालानि प्रक्षाल्य गार्हपत्यस्य पश्चात् विभज्य सादयति—अष्टौ दक्षिणत एकादशोत्तरतः। तत उत्तरतः एकादश पौर्णमास्याम्। अमावास्यायामष्टौ दक्षिणत एकादशोत्तरत इति। स्वयमपि तत्रोपविश्य धृष्टिमादत्ते—'धृष्टिरसि...यच्छ' इति। अमावास्यायामुपवेषम्। गार्हपत्यमभिमन्त्रयते—'अपाग्ने···हि' इति। गार्हपत्यादङ्गारं दक्षिणतो निरस्यति—'निष्क्रव्या···सेध' इति। अप उपस्पृश्य, गार्हपत्यस्य पश्चाद्दक्षिणतो-

१. 'चात्र' इति कै० सं०।
२. 'प्रथममनेन मन्त्रेण कुर्यात्' बृ० कोशे।

ऽन्यमङ्गारमावर्तयति—'आ देव···वह' इति। तस्मिन्दक्षिणेषां कपालानां मध्यममुपदधाति—'ध्रुव···ह' इति। तस्मिन्नङ्गारमधिवर्तयति—'निर्दग्धं···तयः' इति। मध्यमस्य पुरस्तादुपदधाति—'धर्त्रं···ह' इति। मध्यमस्य पश्चात् 'धरुण···ह' इति। मध्यमस्य दक्षिणत उपदधाति—'धर्मासि···ह' इति। दक्षिणस्य पुरस्तादुपदधाति—'चितःस्थ···ह' इति। दक्षिणस्य पश्चादुपदधाति 'चितः स्थ···ह' इति। मध्यमस्योत्तरत उपदधाति—'चितः स्थ···ह' इति। उत्तरस्य पुरस्तादुपदधाति—'चितः स्थ···ह' इति।

कपालेषु धृष्टयाङ्गारानध्यूहति—'भृगूणा···ध्वम्' इति। अध्वर्युर्यजमानश्च कपालानि स्पृष्ट्वा जपतः—'यानि धर्मे···युङ्क्ताम्' इति। एवमेवोत्तरतः अग्नीषोमीयस्यैकादश कपालान्युपदधाति। आग्नेयवदष्टावुपधायोत्तरस्य पश्चादुपदधाति। मध्यमस्योत्तरत उपदधाति। उत्तरस्य पुरस्तादुपदधाति। एवं वैमृधस्य एकादशकपालान्युपदधातीति पौर्णमास्याम्। अमावास्यायान्तु आग्नेयमष्टाकपालम् [1]उपधाय ऐन्द्राग्नस्यैकादशकपालान्युपदधात्यसन्नयतः। सन्नयतस्तु आग्नेयमुपधाय ऐन्द्रमेकादशकपालमुपदधाति। माहेन्द्रं तद्याजिनः। आ देव···हेत्यारभ्याऽयोगजपात् प्रतिपुरोडाशं समानम्। उपहितान्यङ्गारैरभीन्धते। गार्हपत्ये प्रक्षालितां पिष्टोद्वपनीमधिश्रयति। मदन्त्यां सपवित्रायां लौकिकीरप आनीयाऽधिश्रयति।

॥ इति प्रथमे प्रश्ने सप्तमोऽध्यायः ॥

सप्तमोऽध्यायः समाप्तः ॥

—:o:—

१. नास्ति गो॰ कोशयोः, मद्र॰ सं॰ च।

# अष्टमोऽध्यायः

अथोत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तिरःपवित्रं पात्र्यां कृष्णाजिनात् पिष्टानि संवपति—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामानये जुष्टं संवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति यथादेवतम् ॥१॥ अथ परिकर्मिणमाह—'आहराप आनय' इति ॥२॥

भव०- उपवेशनवचनमर्थप्राप्तेऽन्यत्रार्थप्राप्तानां अवचनेऽप्युपसंग्रहार्थम् । कृष्णाजिनादिति नियमार्थम् । तप्तायां पिष्टोद्वपन्यां संवपनमाचारार्थच्चाशृतविदग्धनिरासेन साधुशृतवचनाद् अन्यथा सम्यगन्तः पाकानुपपत्तेः। येन येन यद् हविः संसिध्येद् (बौ० श्रौ० २४।२।४) इति वचनान्नोष्णोदकमात्रेण भवतीति। न च पुनः पाकाशङ्काभ्युपायत्वाद् अन्यथा उष्णोदकेनापि पुनः पाकाशङ्का। अन्ये मदन्तीभिरेव संयवनमिह पात्र्याः सन्तापनावचनादिति ॥१-२॥

सा०—अथोत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तिरःपवित्रं पात्र्यां कृष्णाजिनात्पिष्टानि संवपति—'देवस्य त्वा···मग्नये जुष्टं संवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मै' इति यथादेवतम्। उपविश्येति प्रह्वत्वादीनां मध्ये एकस्य वचनाभावे तेषामर्थप्राप्त्यभावे चोपवेशनस्य नियमं द्योतयितुम्' यथा चोक्तं—

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः।
तदाऽऽसीनेन कर्तव्यं न प्रह्वेन न तिष्ठता ॥ इति ॥

वाचंयमः आवाग्विसर्गविधानात्। वक्ष्यति हि 'अविदहन्तः श्रपयतेति वाचं विसृजते' इति। उदगग्रं पवित्रमन्तर्धाय तच्च सव्येन पवित्रं गृहीत्वा दक्षिणेन संवपेत्। तप्तायां पात्र्यां कृष्णाजिनादिति नियमार्थम्। तथा च कर्मान्ते—कुतो नु खलु पिष्टानि संवपेत्। कृष्णाजिनादित्येव ब्रूयात्। संवपन्पिष्टानि वाचं यच्छति। ताम्—अविदहन्तः श्रपयत' इत्येव वाचं विसृजते (बौ० श्रौ० २४।२६।८-१०)। संवपतीति भर्जनार्थं वर्ततीति। अत्र निर्वापाधिवापसंवापशब्दाः समानार्था अपि नियतविषयाः। तथा च भाष्ये—बीजसन्ताने 'वपिः पठितः छेदनेऽपि वर्तते यथा केशान्वपति (तु०—महाभा० १।३।१) इति ॥१॥ अथ परिकर्मिणमाह—'आहराऽप आनय' इति ॥ अथेति न संवापमात्रानन्तर्यं प्रैषस्य, अपि तु सम्यक्च्छूपणानन्तर्यम्। अन्यथा तदसम्भवात्। तथा च कर्मान्ते—यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेव इति। साधुश्शृतं श्रपयतीत्येवेदमुक्तं[2]

१. 'वाऽपि' इति मद्र० सं०।
२. '०श्रपयतेत्ये०' इति मद्र० सं०, वृ० कोशे च।

भवति (बौ० श्रौ० २४।२६।११-१२)। न चाऽयं पर्यग्निकरणानन्तरं श्रपणविषयः, मर्जनविषयोऽपि द्रष्टव्यः। अन्यथा पुरोडाशस्यान्तःपाकाऽनुपपत्तेः। तथा चोक्तम्—येन येन यद्धविः संसिध्येत् (बौ० श्रौ० २४।२।४) इत्यादि। परिकर्मी आग्नीध्रावन्यः, तदभावे स एव वा ॥२॥

आहरति प्रैषकारः प्रणीताभ्यः स्रुवेणोपहत्य वेदेनोपयम्य पाणिं वान्तर्धाय ॥३। एवं मदन्तीभ्यः ॥४॥ ता उभयीरानीयमानाः प्रतिमन्त्रयते—'समापो अद्भिरग्मत समोषधयो रसेन संरेवतीर्जगतीभिर्मधुमतीभिः सृज्यध्वम्' (तै० सं० १।१।८।१) इति ॥५॥ अथानुपरिप्लावयति—'अद्भ्यः परि प्रजाता स्थ समद्भिः पृच्यध्वम्' (तै० सं० १।१।८।।१) इति ॥६॥

भव०—प्रणीताभिर्व्यापृतत्वात् स्रुवस्यान्येन पात्रेण मदन्तीभ्यः पात्रान्तरे निधाय मदन्तीभ्यः स्रुवेण ग्रहणे आहरेत्युक्तेन नानीता भवेयुरिति केचित्। किमत्रादिष्टमिति चिन्त्यम्। परिमाणे चैतावदित्यवक्ष्यत्। अन्ये प्रणीताभ्यः आनीय पात्रान्तरे निधाय पुनर्मदन्तीभ्य एवमित्यतिदेशोऽर्थवान् भवतीति। ता उभयीरेकीकृत्य आनयति, एवं ता उभयीरित्युपपद्यते। द्वैधे (बौ० श्रौ० २०।८) पृथगिति पुनरुक्तम् ॥३-४॥ परिप्लावनं मदन्तीभिरानन्तर्यात् पाकश्च सम्यग् भवतीति ॥६॥

सा०—यथाप्रैषं तदनुष्ठानमाह—आहरति प्रैषकारः प्रणीताभ्यः स्रुवेणोपहत्य वेदेनोपयम्य पाणिं वाऽन्तर्धाय। एवं मदन्तीभ्यः। ता उभयीरानीयमानाः प्रतिमन्त्रयते—'समापो···सृज्यध्वम्' इति। उपहत्य अवयुत्याऽऽदाय। उपयम्य वेदमुपधानीकृत्य, हस्तस्यैव मुख्याधारत्वात्। पाणिं वाऽन्तर्धाय वेदेनेत्यनुषज्यते। पात्रपाण्योर्मध्ये वेदमासञ्जयतीत्यर्थः। एवं मदन्तीभ्यः, आहरतीत्यनुषङ्गः। ता उभयीरिति, ता इत्येतावतैव पर्याप्ते पुनरुभयीरिति वचनम् आसेचनकाले द्विरूपत्वस्मरणार्थम्। प्रतिमन्त्रणं नाम प्रतीपं स्थित्वा मन्त्रणम्। द्वैधे विशेषः—संयवन[1] इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनः प्रणीताभ्यः स्रुवेणोपहत्याऽप आनयेत्। एवं मदन्तीभ्यः। ता उभयीरानीयमानाः प्रतिमन्त्रयते—'समापो···सृज्यध्वम्' (बौ० श्रौ० २०।८) इति। संयवनम्[2] उदकपिष्टयोः संयोजनम्। तथा च सूत्रं—'प्रणीताभिः संयौति' (आप० श्रौ० १।२४।३) इति। प्रणीतोदकमासिच्य तथैव मदन्त्युदकमासेचयेत्। प्रत्यासेचनं मन्त्रणं प्रतिमन्त्रणमित्यर्थः ॥३-५॥ अथाऽनुपरिप्लावयति—'अद्भ्यः परि···पृच्यध्वम्' इति'। मदन्तीभिरिति शेषः। तथा च सूत्रं—

१. 'संवपन' इति मद्र० सं०, वृ० कोशे च।

२. 'संवपनम्' इति वृ० कोशे।

'तप्ताऽद्भिरनुपरिप्लाव्य' (आप० श्रौ० १।२४।५) इति। तप्ता आपो मदन्तीरिति याज्ञिकप्रसिद्धिः। अनु, अनन्तरमेव। परितः प्लावनं परिप्लावनम्। निरवशेषेणोदकपिष्ट-संयोजनमित्यर्थः ॥६॥

संयौति—'जनयत्यै त्वा संयौमि' (तै० सं० १।१।८।१) इति ॥७॥ संयुत्य व्यूह्याभिमृशति—'अग्नये त्वाग्नीषोमाभ्युष्मा अमुष्मै (तै० सं० १।१।८।१) इति यथादेवतम् ॥८॥ पिण्डं करोति—'मखस्य शिरोऽसि' (तै० सं० १।१।८।१) इति ॥९॥ तं दक्षिणेषां कपालानां प्रत्यूह्याङ्गा-राँस्तेष्वधिपृणक्ति—'घर्मोऽसि विश्वायुः' (तै०सं० १।१।८।१) इति ॥१०॥ प्रथयति—'उरु प्रथस्वो रु ते यज्ञपतिः प्रथताम्' (तै० सं० १ १।८।१) इति ॥११॥ तं तन्वन्तं कूर्मप्रकारं करोति ॥१२॥ सर्वाणि कपालान्य-भिप्रथयतीति ब्राह्मणम् ॥१३॥

भव०—संयुत्य व्यूह्याभिमृशतीति त्रयाणामानन्तर्यं ब्रुवन् नात्र विभागमन्त्रो-ऽस्तीति दर्शयति ॥८॥ कपालेष्वित्येव सिद्धे प्रत्यूहवचनमर्थप्राप्तानामविरुद्धानामुप-सङ्ग्रहार्थम्। अञ्जलिना जुहोतीत्यर्थवादात् कोश उक्तो भवति ॥१०॥ तनुरन्तो यस्य स तन्वन्तः। ब्राह्मणग्रहणं संहितापारक्षुद्रयोरेकार्थख्यापनार्थम्। तच्च सामान्य-विशेषोक्तयोर्विकल्पनिवृत्तिख्यापनार्थम् ॥१२॥

सा०—संयौति—'जनयत्यै···मि' इति। संयवनं हस्तमर्दनेन सम्यक् मिश्रीकृत्य पिण्डनम् ॥७॥ संयुत्य व्यूह्याऽभिमृशति—'अग्नये त्वाऽग्नीषोमाभ्यां त्वा, अमुष्मा अमुष्मै' इति यथादेवतम्। संयुत्य सम्पिण्डय। व्यूह्य विभज्य। देवतासङ्ख्यानुगुण्येनेत्यर्थः। द्वैधे विशेषः—व्यभिमर्श इति। स ह स्माऽऽह बोधायनो व्यभिमृशेदेवैकहविरेवं नाना-बीजानीति। अत्रो ह स्माऽऽह शालीकिः—संसर्गात्खलु व्यभिमर्शो जायते। नाऽसं-सृज्यमानानि हवींषि व्यभिमृशेन्नैकहविः। को हि नानाबीजानां व्यभिमर्श इति (बौ० श्रौ० २०।८)। व्यभिमृशेद् विभज्याऽभिमृशेत्। एकहविः एकद्रव्यकं हविः। तस्य देवताभेदापेक्षया विभज्याऽभिमर्शः। अथवा एकहविरिति एकमेव हविः पुरोडाशरूपम्। वैश्वा-नरेष्ट्यादौ तत्र व्यभिमर्शो देवताऽपेक्षया नियमार्थः नानाबीजसंयोगाभावान्न व्यभिमर्शः। एवमेकपुरोडाशेऽपीति ॥८॥ पिण्डं करोति—'मखस्य शिरोऽसि' इति। प्रतिपिण्डं मन्त्रा-ऽऽवृत्तिः ॥९॥ तं दक्षिणेषां कपालानां प्रत्यूह्याङ्गाराँस्तेष्वधिपृणक्ति—'घर्मोऽसि विश्वायुः' इति। तम् आग्नेयं पुरोडाशं निरस्ताङ्गारेषु कपालेषु स्थापयति ॥१०॥ प्रथयति—'उरु प्र···प्रथताम्' इति। प्रथयति विस्तारयति ॥११॥ तं तन्वन्तं कूर्मप्रकारं करोति। 'सर्वाणि कपालान्यभिप्रथयति' इति ब्राह्मणम्। तन्वन्तं, विस्तार्यमाणम्।

अथवा—तनुरन्तो यस्य स तन्वन्तः। कूर्मप्रकारं कूर्मव्यावर्तकधर्मसंयोगेनम्। तथा चोक्तम्—सामान्यस्य भेदको विशेषः प्रकारः' इति। ब्राह्मणग्रहणं संहितापारक्षुद्रयोरैकार्थ्यख्यापनार्थं, तच्च विकल्पनिवृत्त्यर्थम्। अयमर्थः—संहितायाम् 'उरु प्रथस्व' इति प्रथनमात्रमुक्तम्। तस्येयत्ता पारक्षुद्रे ख्याप्यते। संहितामध्यपतितस्य ब्राह्मणस्य पारक्षुद्रसंज्ञा याज्ञिकप्रसिद्धा। एवमनयोरैकार्थ्यख्यापनेन सर्वकपालाभिप्रथनस्य वैकल्पिकत्वं निवारयति। तथा च सूत्रम्—पुरोडाशं प्रथयन्सर्वाणि कपालान्यभिप्रथयति (आप०श्रौ० १।२५।३) इति ॥१२-१३॥

अथ तिरःपवित्रमाज्यस्थाल्यामाज्यं निर्वपति—'महीनां पयोऽस्योषधीनां रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्यायै' (तै० सं० १।१।१०।२-३) इति ॥१४॥ अथोत्तरतो भस्ममिश्रानङ्गारान्निरुह्य तेष्वधिश्रयति ॥१५॥ एवमेवोत्तरं पुरोडाशमधिपृणक्ति ॥१६॥

भव०—प्रैषान्मन्त्रब्राह्मणपाठाच्च प्रैषादूर्ध्वमानयनकाल एव निर्वापे प्राप्ते इहोक्ते वचनात् पुरोडाशमधिश्रित्य आज्यं निर्वपतीति। प्रैषार्थः सशेषसंस्कारो भविष्यतीति। सहचोदितत्वात् पदार्थानुसमये प्राप्ते सामर्थ्यादेकस्योक्तमर्थविरोधिन एकैकस्य कर्त्तव्या इति 'यावतोऽश्वानित्येवमादिषु। उपांशुयाजस्य चरुपक्षे चरव्यास्तूष्णीं निर्वप्तव्याः। तिरः पवित्रमेवेत्यङ्गारापोहनादारभ्य प्रागाज्यनिर्वापात् ॥१४॥ सान्नाय्ये तूष्णीमधिपृणक्ति एवमित्यवचनात् ॥१६॥

सा०—अथ तिरःपवित्रमाज्यस्थाल्यामाज्यं निर्वपति—'महीनां…यज्यायै' इति। द्वये विशेषः—आज्यस्य निर्वपण इति। सूत्रं शालीकेः। आख्यातं बोधायनस्य। अत्रो ह स्माऽऽहौपमन्यवः सर्वाण्येव हवींषि परिनिष्ठाप्याऽऽज्यं निर्वपेदिति (बौ० श्रौ० २०।८)। अत्र ब्राह्मणद्वयं—'पुरोडाशमधिश्रित्याऽऽज्यं निर्वपेद्' इति। 'सर्वाण्येव हवींषि परिनिष्ठाप्याऽऽज्यं निर्वपेत्' इति च। अत्रैकत्वबहुत्वयोर्विहितं पक्षद्वयं शालीक्याचार्ययोरौपमन्यवस्य च। पत्नीं सन्नह्याऽऽज्ये नोदेहीति प्रैषात्, ब्राह्मणे च पत्नीसंनहने योक्त्रग्रन्थिकरणानन्तरं 'महीना…सि' इति निर्वापमन्त्राम्नानात्, मन्त्रपाठक्रमे च पत्न्यञ्जलावुदपात्रनिनयनमन्त्रानन्तरं 'महीनां पयोसि' इत्याज्यनिर्वापमन्त्राम्नानात्, प्रैषब्राह्मणमन्त्राधिगतकालस्यापि वैकल्पिकत्वमित्येके। आचार्याऽभिप्रायस्तु प्रैषस्य तावदविरोधः, निरुप्ताऽऽज्यानयनमात्राभिधानात्। ब्राह्मणस्य च मन्त्रक्रममात्रानुविधायित्वात् तदपि विवक्षयैव। अविवक्षितत्वं मन्त्रक्रमाऽविवक्षा च स्पष्टैव पत्नीसंयाजानन्तरमाम्नानात्। ततः प्रागुदाहृतब्राह्मणद्वयाऽनुसारेण पक्षद्वयं युक्तमिति। तत्राऽप्युपांशुयाजस्याऽऽज्यद्रव्यकत्वपक्षे त्वाग्नेयपुरोडाशाऽभिप्रथनानन्तरं देवताक्रमेण पुरोडाशमधिश्रित्येति वचनाच्च तत्रैवाऽऽज्यनिर्वापः। तस्य चरुद्रव्यकत्वे विकृतिषु चौपमन्यवीयः पक्ष इति। अत्र केचित्पुरोडाशमधिश्रित्याज्यं निर्वपतीति श्रवणात्, आज्यनिर्वापस्य पुरोडाशसंस्कारत्वमपि मन्यमानाः प्रतिपुरोडाश-

१. तै० सं० २।३।१२।

माज्यनिर्वापमिच्छन्ति, प्रत्यश्वप्रतिग्रहं तदिष्ट्यावृत्तिरिति। नैतत्सारं, आज्यस्य प्रधानहविरूपत्वात् सर्वार्थत्वाच्चरुसंस्कारकत्वाच्च, ग्रहणमन्त्रस्य सकृत्संस्कारादेव चरितार्थत्वादिति ॥१४॥ अथोत्तरतो भस्ममिश्रानङ्गारान्निरुह्य तेष्वधिश्रयति। सारस्वतपाठे व्यत्ययप्राचुर्याच्च गार्हपत्यादुत्तरतः। अत्र गार्हपत्यक्षेत्रादङ्गाराणामबहिर्भावः। यदि बहिर्भावः स्यात्प्रत्यूह्याऽङ्गारानिति ब्रूयात्। न त्वेवमब्रवीत्। ततः सर्वत्राऽयं नियमः, यत्र पुनरङ्गारप्रत्यूहनविधानं नाऽस्ति, तदभावेऽप्यर्थप्राप्तिश्च बहिर्भावस्य यत्र नाऽस्ति, तत्राऽऽयतनक्षेत्रादबहिर्भाव इति। अधिश्रयति, आज्यमित्यनुवज्यते ॥१५॥ एवमेवोत्तरं पुरोडाशमधिपृणक्ति। उपलक्षणञ्चैतत्। वैमृधस्य समानतन्त्रत्वपक्षे तस्य च विकृतिषु अन्येषामप्येवमेवेत्यतिदेशः। एतदेव ज्ञापकं वैमृधस्य भिन्नतन्त्रत्वपक्षस्य। एवमुत्तरत्राप्युत्तरपुरोडाशमधिकृत्य यानि विधीयन्ते तद्ग्रहणश्रपणादीनि तत्रैकत्वस्य विवक्षितत्वे वैमृधस्य भिन्नतन्त्रत्वज्ञापकम्। अविवक्षितत्वे तु [1]समानतन्त्रत्वस्येति ॥१६॥

अथ शृतमथ दधि ॥१७॥ अथ पात्र्यामप आनीय दक्षिणस्य पुरोडाशस्य त्वचं ग्राहयति—'त्वचं गृह्णीष्व त्वचं गृह्णीष्व' (तै० सं० १।१।८।१) इति त्रिः ॥१८॥ अथोत्तरस्य ॥१९॥ अथ पर्यग्नि करोति—'अन्तरितँ रक्षोऽन्तरिता अरातयः' (तै० सं० १।१।८।१) इति त्रिः ॥२०॥ अथ दक्षिणं पुरोडाशं श्रपयति—'देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माति धाक्' (तै० सं० १।१।८।१) इति ॥२१॥ गार्हपत्यमभिमन्त्रयते—'अग्ने हव्यं रक्षस्व' (तै० सं० १।१।८।१) इति ॥२२॥ एवमेवोत्तरं पुरोडाशं श्रपयति ॥२३॥ अथ दक्षिणं पुरोडाशं भस्मनाभिवास्य वेदेनाभिवासयति—'सं ब्रह्मणा पृच्यस्व सं ब्रह्मणा पृच्यस्व' (तै० सं० १।१।८।१) इति त्रिः ॥२४॥ अथोत्तरम् ॥२५॥ अविदहन्तः श्रपयतेति वाचं विसृजते ॥२६॥

भव०—प्रधानार्थत्वात् संस्कारस्य दध्नोऽविरोधेन स्थापनम् ॥१७॥ पर्यग्निकरणं सर्वेषां तन्त्रं पुरोडाशार्थमेव नेतरार्थं ब्राह्मणे पुरोडाशसम्बन्धेन श्रवणादितरेषां प्रसङ्गात् प्रयोजनम्। विकृतावमन्त्रकं पर्यग्निकरणमिति केचित्। एवं सति पुरोडाशानामेव कर्त्तव्यं स्यान्नाज्यसान्नाय्ययोः। विकृतिषु चाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा प्रकृतिवत्तावत् प्रधानार्थत्वात्। संस्कारस्य दध्नोऽप्याचारप्राप्तमिति चेत्? आचारप्राप्तानामवचनादिह विशेषावचनान्निर्वपणाधिश्रपणयोः प्राकृतत्वात् सहोच्चारणत्वाच्च पर्यग्निकरणं प्राकृतमिति गम्यते। तस्मात् साधारणत्वं युक्तमिति

१. '०तन्त्रस्येति' इति मद्र० सं०।

लक्ष्यते ॥२०॥ श्रपणमिह दर्भैरभिज्वलनम्, अविदहन्तः श्रपयतेत्युत्तरत्रवचनात् ॥२१॥ भस्माभिवासनमविदाहार्थम् । वेदेनाभिवासनम् साङ्गारेण भस्मना, शुद्धैरङ्गारैरभिवासने वेदविनाशान्नाकरिष्यद्वेदग्रहणं, द्रव्यान्तरेण ब्रूयात् । प्रैषश्चानन्तरो मन्दप्रयोजनः स्यात् ॥२४॥

सा०—अथ शृतमथ दधि । पुरोडाशोत्तरभागे शृतम्, तदुत्तरभागे दधि, द्रव्याऽविरोधेन ॥१७॥ अथ पात्र्यामप आनीय दक्षिणस्य पुरोडाशस्य त्वचं ग्राहयति—'त्वचं गृह्णीष्व, त्वचं गृह्णीष्व' इति त्रिः । पिष्टोद्वपन्यां मदन्तीरानीय ताभिर्हस्तसङ्गताभिः परितो मार्जनेन श्लक्ष्णीकरणेन त्वचं ग्राहयति । तदुक्तम्—'अथाऽप आनीय परिमार्ष्टि । मांस एव तत्त्वचं दधाति (तै० ब्रा० ३।२।८।४) इति ॥१८॥ अथोत्तरस्य । त्वचं ग्राहयतीति शेषः । प्राक्तन एव मन्त्रः ॥१९॥ अथ पर्यग्निकरोति—'अन्तरितं···यः' इति त्रिः । अयं सकृन्मन्त्रः, त्रिः पर्यग्निकरणमपि तेनैव समन्त्रकमित्यस्मदाचार्याभिप्रायः । न तु आचार्यान्तरवत्सकृन्मन्त्रेण द्विस्तूष्णीम् (आप० श्रौ० १।३।२९) इति । तदेतत् नाऽप्रक्रान्तं प्रक्रमयेत् (बौ० श्रौ० २४।७।३) इत्यनेन सङ्गृहीतम् । पर्यग्निकरणं नाम ज्वलतोल्मुकेन परितः प्रदक्षिणमावर्तनम् । तथा चाऽऽश्वलायनः—'ज्वलता परिहरेत्' (आश्व० श्रौ० ३।३।७) इति । तदेतत्पर्यग्निकरणं सर्वहविषां तन्त्रम्—'सर्वाणि हवींषि त्रिः पर्यग्नि कृत्वा (आप० श्रौ० १।२५।८) इति सूत्रोक्तेः । अत्र केचिदाहुः—पर्यग्निकरणं पुरोडाशविषयमेव । तथा च ब्राह्मणम्—'अन्तरितं रक्षोऽन्तरिता अरातय इत्याह । रक्षसामन्तर्हत्यै । पुरोडाशं वा अधिश्रितं रक्षांस्यजिघांसन् (तै० ब्रा० ३।२।८।५) इति । अत्र पुरोडाशसम्बन्ध एव श्रूयते, अतस्तद्विषयमिति । तदेतदसारं, आज्यस्याऽपि तदभावप्रसङ्गात् । तथा च प्रकृतिवत्क्रियमाणायां विकृतावाज्यं निरुप्याऽधिश्रित्य पर्यग्नि कृत्वेति वचनाऽनुपपत्तिः । हन्त ! तर्ह्यत एव प्रकृतौ तन्निवर्तत इति चेत्सत्यम् । तथा च कर्मान्ते पर्यग्निकरणाख्यानमसमञ्जसं स्यात्—प्रज्ञातमन्येषां हविषां पर्यग्निकरणम् । किमु स्विद्राज्ञ इति । यदेवादो वसतीवरीः परिहरति तद्राज्ञ इति (बौ० श्रौ० २४।९।१७-१९) । पर्यग्निकरणं सर्वहविषामभ्युपगतम् । अत एव भारद्वाजः 'पर्यग्निकरणकाले दध्युपदधाति' इति ॥२०॥ अथ दक्षिणं पुरोडाशं श्रपयति—'देवस्त्वा···धाक्' इति । उत्तरत्र 'अविदहन्तः श्रपयत' इति दर्शनाद्दर्भैरभिज्वलनमित्यभियुक्ताः ॥२१॥ गार्हपत्यमभिमन्त्रयते—'अग्ने हव्यं रक्षस्व' इति । एवमेवोत्तरं पुरोडाशं श्रपयति । एवमेवेत्यनेन श्रपणाऽभिमन्त्रणयोः प्रतिपुरोडाशमावृत्तिः । चरुषु तु गोपालः—'पर्यग्नि रक्षस्व च वाग्विसर्गः' इति ॥२२-२३॥ अथ दक्षिणं पुरोडाशं भस्मनाऽभिवास्य वेदेनाऽभिवासयति—'सं ब्रह्मणा पृच्यस्व सं ब्रह्मणा···स्व' इति त्रिः । धृष्टया भस्मनाऽभिवासनममन्त्रकम् । वेदेन तु साङ्गारभस्माऽभिवासनमदाहाय । तथा च सूत्रं—वेदेन पुरोडाशे साङ्गारं भस्माऽध्यूहति' (आप० श्रौ० १।२५।१२) इति । कर्मान्ते तु मन्त्रार्थौ विवृतः—सं ब्राह्मणा पृच्यस्वेति । विज्ञायते—'वाग्वै ब्रह्म वाचैवैनं सम्पृणक्ति' (बौ० श्रौ० २४।२६।१३-१४) इति ॥२५॥ अथोत्तरम् । पुरोडाशमिति शेषः । प्रागुक्त एव क्रमः ॥२५॥ अविदहन्तः श्रपयत' इति वाचं विसृजते । श्रपणस्याऽऽग्नीध्र-

कर्तृक वनियमे बहुवचनमविवक्षितम् । अनियमे तु विवक्षितम् । वाग्विसर्गस्तादृशः सङ्कल्पः । तद्व्यापारस्येतः प्रागभ्युपलम्भात्, कर्मोपयुक्ताऽम्लेच्छाभिभाषणाऽभ्यनुज्ञानमिति । बर्हिषि 'न म्लेच्छितवै नाऽपभाषितवै म्लेच्छो ह वा एष यदपशब्दः' (तु०—महा० पस्पशा०) इति श्रवणात् । सूत्रे च–यदि प्रमत्तो वाचं व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छेत् (आप० श्रौ० ३।१८।७) इति ॥२६॥

अत्रैतत् पात्रीसङ्क्षालनं गार्हपत्यादङ्गारेणाभितप्य हृत्वान्तर्वेदि प्रतीचीनं तिसृषु लेखासु निनयति—'एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा' (तै० सं० १।१।८।१) इति ॥२७॥ अथ वेदमादत्ते—'अयं वेदः पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु । स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु' (तै० ब्रा० ३।७।६।१३) इति ॥२८॥ वेदेन वेदिं त्रिः संमार्ष्टि—'वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदः' (तै० ब्रा० ३।३।९।१०) इति ॥२९॥

भव०—लेखा आचाराद् अनूचीनाः प्रागपवर्गाः, प्रत्यगपवर्गं निनयनम् । संमार्गश्चारादेवान्तमुदपवर्गं ॥२७॥ वेदादानस्य वेदिकरणारम्भत्वादुत्तरानुवाकादौ वक्तव्ये इहवचनप्रयोजनम् महात्रेदेः स्तम्बयजुर्हरति वचने स्फ्यादानप्रभृत्येव यथा स्यादिति ॥२८-२९॥

॥ इति अष्टमोऽध्यायः समाप्तः ॥

सा०—अत्रैतत्पात्रीसङ्क्षालनं गार्हपत्यादङ्गारेणाऽभितप्य हृत्वाऽन्तर्वेदि प्रतीचीनं तिसृषु लेखासु निनयति—'एकताय स्वाहा, द्विताय, त्रिताय स्वाहा' इति । पात्र्याः पिष्टोद्वपन्याः सङ्क्षालनमुदकम् । अथवा पात्र्यां यद्धस्तसङ्क्षालनं तत्पात्रीसङ्क्षालनं इत्युभयथाऽपि गात्रपात्रसङ्क्षालनद्वयमपि सङ्गृहीतम् । तथा च [1]सूत्रम्—अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाऽभितप्य (आप० श्रौ० १।२५।१४) इति । तदेतत्सङ्क्षालनोदकद्वयं पिष्टोद्वपन्यां स्थितमङ्गारेणोपगृहीत्वा[2] तेन तापयति । तथा च ब्राह्मणम्—उल्मुकेनाऽभिगृह्णाति शृतत्वाय' (तै० ब्रा० ३।२।८ १२) इति । गार्हपत्यादित्यपादानत्वेऽपि न गार्हपत्यादङ्गारस्य बहिर्भावः, पुनः प्रत्यूह्येत्यनभिधानात्, आज्याधिश्रयणाङ्गारवत् । अन्तर्वेदि निनयनस्य हरणाऽऽनन्तर्यकत्वेऽपि हृत्वेत्यभिधानं निरवशेषहरणार्थम् । तिसृषु लेखासु प्रतीचीनं निनयतीत्यन्वयः । प्रतीचीनं प्रत्यगपवर्गम् । अनेन लेखानां प्रागपवर्गत्वं द्योतयति । औत्सर्गि-

१. 'सूत्रात्' इति मद्र० सं० ।
२. यथाकोशं पाठः !

कस्य तथात्वस्य निनयनमात्रेऽपवादात्। कर्मान्ते तु निनयनाऽनन्तरमङ्गाराऽभिताप उक्तः। तस्मिन्पक्षेऽङ्गारस्य गार्हपत्यक्षेत्राद्बहिर्भावात प्रत्यूहनविधानाऽभावाच्चाऽपवृक्ते कर्मणि लौकिकत्वं शामित्रवत्। क उ खलु हविः पृक्तं श्रप्यत इति। यदैवैतदाप्येभ्यो निनयति—'एकताय…द्विताय त्रिताय…स्वाहा' इति। को नु खल्वेकनः को द्वितः कस्त्रित इति। पिता पितामहः प्रपितामह इत्येके। पृथिव्यन्तरिक्षं द्यौरित्येके। अग्निरादित्यो वैद्युत इत्येके (बौ० श्रौ० २४।२६।१५-२०)। अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्नित्यन्ये[1]। त एते ऋषय एनन्नामधेया बभूवुरित्येके। ते देवा आप्येष्वमृजतेत्याप्य[2] नाम देवा भवन्ति (बौ० श्रौ० २४।२७।१-३)। सर्वत्र हविःश्रपणानन्तरं पृक्तं भवति। पृक्तं हविः क्व[3] श्रप्यत इति प्रश्नः। उत्तरं, यदैवैतदाप्येभ्यो निनयतीति। तदेतत्प्रक्षालनोदकरूपं हविः यदाप्येभ्यो निनयति तदा प्रदानानन्तरं श्रपणम्। अन्यदा देवतान्तरेभ्यो निनयनकाले, तपनानन्तरं प्रदानं, निनयनमित्यर्थः। त एव देवताविकल्पाः प्रतिपाद्यन्ते—को नु खल्वेकत इत्यादिना। पृक्तश्रपणपक्षे प्रतिनिनयनं श्रपणम्। द्वैधे निनयनस्थानविशेषो दर्शितः—आप्यस्य निनयने[4] इति। जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बोधायनः। अग्रेणाऽतिहाय नेति[5] शालीकिः। अग्रेण वा जघनेन वेत्यौपमन्यवः। आप्यस्य अपः सम्बधिनो हविषो निनयने विषये, तत्राऽपि यदाप्येभ्यो निनयति तदा स्थानविकल्पः। देवतान्तरपक्षे त्वन्तर्वेद्येवाऽग्रेण गार्हपत्यमिति शेषः। अस्याऽन्तर्वेदिनिनयनपक्षाद्भेदं दर्शयति—अतिहाय नेति। गार्हपत्याप्रभागमतिक्रम्याऽन्तर्वेदि न कुर्यादित्यर्थः ॥२७॥[6] अथ वेदमादत्ते—'अयं वेदः…करोतु' इति। वेदेन वेदिं त्रिः संमार्ष्टि—'वेदेन वेदिं…विशत्रदानिः' इति। वेदादानं वेदिसम्मार्गार्थम्। सम्मार्गश्च वेदिसंस्कारः। स चोत्तराध्याय एव तत्प्रकरणे वक्तव्यः। तथाप्येतदध्यायशेषत्वेनाऽभिधानस्यैतत्प्रयोजनं—वेदिसम्मार्गस्य स्तम्बयजुर्हरणाङ्गता वेदिसंस्कारत्वञ्चेति। प्रथमपक्षे महावेद्यामप्यस्य प्रवृत्तिः, द्वितीये त्वप्रवृत्तिरिति। स्फ्याऽऽदानादिक एव तत्र प्रयोगो यथा स्यादिति ॥२८-२९॥

इति प्रथमे प्रश्ने अष्टमोऽध्यायः ॥

॥ इति अष्टमोऽध्यायः समाप्तः ॥

—:o:—

१. '०न्नित्येके ऋषय' इति कौ० स०।

२. 'न्याप्यनामधेया देवा' इति कौ० सं०।

३. मद्र० सं० नास्ति।

४. 'आप्यनिनयन इति' कौ० सं०।

५. '०तिहायेति' इति कौ० सं०।

६. कोशेष्वत्राध्यायसमाप्तिः। अग्रिमसूत्रद्वयं सव्याख्यानं नवमाध्यायारम्भे लिखितम्' मुद्रितं च तथैव मद्र० सं०।

# नवमोऽध्यायः

अथ जघनेन वेद्यै तिष्ठन् स्फ्यमादत्ते—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' इति ॥१॥ आदायाभिमन्त्रयते—'इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा' (तै० सं० १।१।६।१) इति ॥२॥ अथैनं बर्हिषा संश्यति—'वायुरसि तिग्मतेजाः। शतभृष्टिरसि वानस्पत्यो द्विषतो वधः' (तै० सं० २।६।४।१) इति ॥३॥

भव०—अथ संमार्गानन्तरं निधाय वेदम्। तिष्ठन्निति उत्तरपदार्थानां तिष्ठता कर्त्तव्यत्वात् तदर्थोऽनुवादः। उत्तरपदार्थानुरूपं सर्वत्र स्थानमासनं वानुष्ठेयमिति ज्ञापनार्थम्। अग्निहोत्रे तु स्थानकार्याभावाद् आसीन एवमादत्ते ॥१॥ अभिमन्त्रणं प्रधानत्वाद्दक्षिणेन धारणम्। गुणभूतत्वात् सव्येन संशानमपि एवमेव स्फ्यादानमुभयार्थमानिहननादेतमर्थं प्रति विशेषानवगमात् सम्प्रैषसम्बन्धाच्च। स्फ्यसम्प्रैषप्रभृत्येव सिद्धे स्फ्यमाददीतेति वचनं वेदिकरणाभावे मन्त्रादाननिवृत्त्यर्थम्। प्रयोजनमग्नीषोमादिषु सकृन्महावेद्या इति वचनात् स्तम्बयजुषो भावे सम्प्रैषार्थं मन्त्रेण स्फ्यादानम्। अन्ये वेदिकरणमध्ये वचनात्तदर्थमेव ततश्च तूष्णीमेव स्फ्यादानमिति ॥२-३॥

सा०—अथ जघनेन वेद्यै तिष्ठन्स्फ्यमादत्ते – 'देवस्य त्वा⋯माददे' इति। अथ सम्मार्गानन्तरं, वेदं निधाय, वेद्या इति षष्ठ्यर्थे चतुर्थी, वेद्या जघनं विशयः, तदभावे गार्हपत्यव्यवधानेन वा तत्पश्चिमो देशः, तदव्यवधानेन वा श्रोणिपरिसर उत्तरदेशः। तिष्ठन्निति यद्यप्यत्राऽऽसीनेनैव स्फ्यादानादि कार्यं, तथाऽपि महावेद्यपेक्षया तिष्ठन्नित्युक्तम्। अत्राऽभिधानं त्वयंप्राप्तानां प्रकरणान्नियमं व्यावर्तयितुम्, यथा गोपितृयज्ञे पितापुत्रद्यूतादेः प्रकरणातिक्रमेण राजन्यैकविषयता, तथा धौतोदनपाकादेरपि इति। अथवा स्फ्यादानस्य तिष्ठता करणं समन्त्रकत्वे सर्वत्र नैय्यमिकस्तम्बयजुर्हरणादेरर्थप्राप्त्याऽनुष्ठानमिति ॥१॥ आदायाऽभिमन्त्रयते—'इन्द्रस्य⋯तेजाः' इति। आदायेति पुनर्वचनादादानाऽसम्भवे त्वेतदाभिमुख्येन मन्त्रणं सूचयतीति केचित्। अभिमन्त्रणस्य प्रधानत्वाद्दक्षिणेन हस्तेन धारणम् ॥२॥ अथैनं बर्हिषा संश्यति—'वायुरसि⋯वधः' इति। संश्यति परिमृजति। तद्वेतत्सव्येन हस्तेन, दक्षिणस्य स्फ्यधारणव्यापृतत्वात्। अपरे त्वाहुः—'आदायाऽभिमन्त्रयत' इति पुनरादानग्रहणस्य प्रयोजनाऽभावाद्दक्षिणहस्ताद्वामेन स्फ्यादानमुक्तमिति, दक्षिणहस्तेनैव

बर्हिषा परिमार्जनमिति । द्वैधे विशेषः—स्फ्यस्य 'संश्यन इति । सूत्रं शालीकेः । अत्रो ह स्माऽऽह बोधायनो य एव[2] स्फ्यस्योदसनो मन्त्रस्तं प्रथमं संश्यनानां कुर्यादथ तूष्णीं स्फ्यमुदस्येदिति (बौ० श्रौ० २०।९) । उत्तरत्र स्फ्यस्योदसने[3] यो मन्त्रो विनियुज्यते 'यो मा हृदा मनसा' (तै० ब्रा० ३।७।६।४) इति स मन्त्रो मार्जनविनियुक्तानां मन्त्राणां प्राथमिकः कार्यः, पश्चात् 'वायुरसि तिग्मतेजा' इति । स्फ्यस्योदसनं तु तूष्णीमिति ॥३॥

अथान्तर्वेद्युदोचीनाग्र बर्हिर्निदधाति—'पृथिवै वर्मासि वर्म यजमानाय भव' (काण्व सं० १।९।२) इति ॥४॥ तस्मिन् स्फ्येन प्रहरति—'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' (तै० सं० १।१।९।१) इति ॥५॥ 'अपहतोऽररुः पृथिव्यै' (तै० सं० १।१।९।१) इत्यादत्ते ॥६॥ 'व्रजं गच्छ गोस्थानम्' (तै० सं० १।१।९।१) इति हरति ॥७॥ वेदिं प्रत्यवेक्षते—'वर्षतु ते द्यौः' (तै० सं० १।१।९।१) इति ॥८॥ हृत्वोत्करे निवपति—'बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्' (तै० सं० १।१।९।१) इति ॥९॥ द्वितीयं प्रहरति—'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' (तै० सं० १।१।९।१) इति ॥१०॥ 'अपहतोऽररुः पृथिव्यै देवयजन्यै' (तै० सं० १।१।९।२) इत्यादत्ते ॥११॥ 'व्रजं गच्छ गोस्थानम्' (तै० सं० १।१।९।२) इति हरति ॥१२॥ वेदिं प्रत्यवेक्षते—'वर्षतु ते द्यौः' (तै० सं० १।१।९।२) इति ॥१३॥ हृत्वोत्करे निवपति—'बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्'(तै० सं० १।१।९।२) इति ॥१४॥ तृतीयं प्रहरति—'पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम्' इति ॥१५॥ अपहतोऽररुः—'पृथिव्या अदेवयजनः (तै० सं० १।१।९।२) इत्यादत्ते ॥१६॥ व्रजं गच्छ गोस्थानम्' (तै० सं० १।१।९।२) इति हरति॥१७॥ वेदिं प्रत्यवेक्षते—'वर्षतु ते द्यौः' (तै० सं० १।१।९।२) इति ॥१८॥ हृत्वोत्करे निवपति—'बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगररुस्ते दिवं मा स्कान्' (तै० सं० १।१।९।३) इत्यत्रानुवर्त्तयति ॥१९॥

---

१. 'सं शान' इति कै० सं० ।
२. 'एष' " " " । ३. 'स्फ्योदसने' इति गो० कोशेषु ।

भव०—सोमे पूर्वतृतीयभागाहरणदर्शनाद् इह विशेषाभावेऽपि अविरोधाद्वेदिसामान्यादिहापि स एव धर्मोऽनुमीयते ॥४॥ उत्कर प्रदेशेऽभिगृह्णात्यग्नीदभितो गृह्णातीति वचनादुपसत्प्रैषे एह्यु पसीदेति दर्शनात्तदेवं सति दृष्टार्थं भवति। सर्वेषु पर्यायेष्वररुस्ते दिवं मास्कानित्यनुवर्त्तयतीति केचित्। अत्रग्रहणा[द]नुग्रहणाच्च अत्रानुवर्त्तयतीत्युक्तत्वादररुस्ते इत्यस्य प्रतिपर्यायमावृत्तिरिति केचित् अन्यथाररुस्ते दिवं मास्कन्निति ब्रूयाद् इत्येवं सिध्येत्। अन्ये तृतीय एवानुवर्तयन्ति ॥१६॥

सा०—अथाऽन्तर्वेद्युदीचीनाग्रं बर्हिर्निदधाति–'पृथिव्यै···भव' इति। वेदिं त्रेधा विभज्य तृतीये पूर्वभागे निदधाति, सोमे तथा दर्शनात्—अथोपरवाणां कालात् स्तम्बयजुर्हरति (बौ० श्रौ० ६।२२।३८) इति। कालशब्दो देशवचनः। उपरवदेशस्य तृतीयभागत्वात्, तादृशो वैकृतोऽपि धर्मः प्रकृतावनुसन्धेयः। यथा प्रायणीयोपदिष्टाश्चरुधर्माः प्रकृताविति ।४॥ तस्मिन्स्फ्येन प्रहरति – 'पृथिवि··सिषम्' इति। तस्मिन्निति मूलप्रदेश इति गम्यते, उदगपवर्गत्वाय। उदकोपस्पर्शनमप्यौत्सर्गिकमुक्तम्। तत्प्रहरतीति वक्तव्ये यदुक्तं तस्मिन्निति, तेनाऽवगम्यते बर्हिराधारभूताथा वेदेरपि खननमिति ॥५॥ 'अपहतोऽररुः पृथिव्यै' इत्यादत्ते। बर्हिर्भूम्योस्तन्त्रेण प्रहरणाभिधानेन पांसुच्छिन्नतृणयोः सहाऽऽदानं गम्यते। तथा च सूत्रम्—'स्फ्येन सतृणान्पांसूनुपादाय (आप० श्रौ० २।१।५) इति ॥६॥ व्रजं गच्छ गोस्थानमिति हरति। उत्करदेशपर्यन्तमिति शेषः ॥७॥ वेदिं प्रत्यवेक्षते—'वर्षतु ते द्यौः' इति। प्रत्यवेक्षणं परावृत्यावलोकनम् ॥८॥ हृत्वोत्करे निवपति 'बधान···मौक्' इति। हृत्वेति पुनर्वचनं व्यवहितोत्करायां महावेद्यां स्वयमेव हरणं द्योतयति। अत्र केचित् निवपनस्य निरसनरूपतां मन्यमाना उदकस्पर्शनमिच्छन्ति। नैतत्सारम्। न हि भवति निरसनं निवपनमिति। तथात्वे दक्षिणे चमपक्षे राजानं निवपतीत्यादावपि निरसनरूपतापत्तिः। भाव्युपयोगाऽनुपयोगाभ्यां प्रतिनियम इति चेत्, अत्राऽप्यभि च गृह्णातीति विहिताऽऽग्नीध्राऽभिग्रहणोपयोगात्। तथा च सूत्रम्–न्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णाति (आप० श्रौ० २।१।८) इति। अत्राऽपि न्युप्तमित्युक्तं, न तु निरस्तमिति। तस्मादत्र नोदकस्पर्शनमिति ।९॥ द्वितीयं प्रहरति–'पृथिवि दे· हिंसिषम्' इति। 'अपहतोऽररुः पृथिव्यै देवयजन्यै' इत्यादत्ते। 'व्रजं गच्छ गोस्थानम्' इति हरति। वेदिं प्रत्यवेक्षते—'वर्षतु ते द्यौः' इति। हृत्वोत्करे निवपति—'बधान···मा मौक्' इति। तृतीयं प्रहरति—'पृथिवि देव···हिंसिषम् इति। 'अपहतोऽररुः पृथिव्या अदेवयजनः' इत्यादत्ते। व्रजं गच्छ गोस्थानम्' इति हरति। वेदिं प्रत्यवेक्षते—'वर्षतु ते द्यौः' इति। हृत्वोत्करे निवपति—'बधान देव ··मौगररुस्ते दिवं मास्कान्' इत्यत्राऽनुवर्तयति। अत्रेति सन्निहिततृतीयपर्यायमात्र एवाऽररुस्ते इत्यस्य जपः इति केचित्। अन्ये तु अनुवर्तयतीत्यनुवर्तनग्रहणसामर्थ्याद् अत्रेत्यस्य प्रकृतमात्रपरत्वाच्चाऽऽररुस्त इत्यस्य प्रतिपर्यायमावृत्तिरित्याहुः ॥१०-१९॥

तूष्णीं चतुर्थं हरति—'सह बर्हिषा' ॥२०॥ अथ पूर्वं परिग्राहं परिगृह्णाति—'वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा' (तै० सं० १।१।९।३) इति दक्षिणतो 'रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसा' (तै० सं० १।१।९।३) इति पश्चात् 'आदित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसा' (तै० सं० १।१।९।३) इत्युत्तरतः ॥२१॥ अथ करणं जपति—इमां नराः कृणुत वेदिमेत्य वसुमतीं रुद्रवतीमादित्यवतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येद्' (तै० ब्रा० ३।७।७।१३) इति ॥२२॥

भव०—करणं मन्त्रो दृष्टार्थो जपतीति वचनात् प्रैषत्वेऽथ सम्प्रैषमाहेत्य-वक्ष्यत्। उच्चैस्त्वं चादृश्यत। आशिषि लिङ् लोट् न प्रैषः। तथा च सोमे करणं जपतीत्युक्त्वा वेदिकारा वेदिं कल्पयत (बौ० श्रौ० ६।२३।७) इति वचनम्। यद्ययं प्रैषोऽभविष्यत्तदनर्थकं स्यात् ॥२२।

सा०—तूष्णीं चतुर्थं हरति सह बर्हिषा। अत्र हरणं प्रहरणाद्वैनिवपनान्तस्योप-लक्षणम्। सह बर्हिषेति छिन्नावशिष्टेन बर्हिषा सह इत्येके। तथा च सूत्रम्—'तूष्णीं चतुर्थं [हरन्]सर्वंदर्भशेषं हरति (आप० श्रौ० २।१।१०) इति। अन्ये तु चतुर्थपर्याये सह बर्हिषेति वचनात्प्राक्तनपर्यायत्रये पांसुमात्रग्रहणम्, चतुर्थ एव पर्याये छिन्नेनाऽवशिष्टेन च बर्हिषा सह ग्रहणमिति। सोऽयं कर्मसमुदायः स्तम्बयजुर्हरणाख्य इति केचित्। सपांसुबर्हिर्हरणं स्तम्बयजुर्हरणमित्यन्ये ॥२०॥ अथ पूर्वं परिग्राहं परिगृह्णाति—'वसवस्त्वा···छन्दसा' इति दक्षिणतः, 'रुद्रास्त्वा···छन्दसा' इति पश्चात्, 'आदित्यास्त्वा···छन्दसा' इत्युत्तरतः। द्वैधे विशेषः—वेद्यै परिग्रहण इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनः श्रोणीं प्रथमां[1] परिगृह्णीयादथ दक्षिणमंसमथोत्तरमिति। पुरस्तादेवैनां प्रदक्षिणं परिगृह्णीयादित्यौपमन्यवः। अत्रौपमन्यवः पक्षः पूर्वकल्पसम्मतः, पुरस्तादारभ्य प्रदक्षिणं परिग्रहे मन्त्रक्रमानुगुण्यञ्च। बोधायनीये तु पक्षे प्रथमं श्रोणिपरिग्रहे तत्र विनियुक्तो 'रुद्रास्त्वा' इति मन्त्रः प्रथमः, द्वितीयो 'वसवस्त्वा' इति, तृतीय 'आदित्यास्त्वा' इति विवेकः। उदक्प्रागपवर्गत्वं चौत्सर्गिकम्। 'रुद्रास्त्वा' इत्यत्रोदकस्पर्शनं कर्तव्यं रौद्रत्वा-त्कर्मणः। अन्ये तु रुद्रप्राधान्याऽभावात्तदनुपकारकेऽस्मिन्कर्मणि नोदकस्पर्शनम्, ब्राह्मणे वसवस्त्वादिभिर्देवतोपकारश्रवणात्, तथा रौद्रेणानीकेन पाहि माग्ने (तै० सं० १।३।३।१) इत्यादाविति वदन्ति। अपरे तु एकस्मिन्नेव रुद्रेऽपामुपस्पर्शनमित्युपदेश इति वदन्ति। बहुवचने रुद्रशब्देऽपां स्पर्शनं नेच्छन्ति। तत्र किं मूलमिति चिन्त्यम्। न च रौद्रत्वे बहुत्वै-कत्वयोर्विशेष इति। न च वाच्यम् 'रुद्रो वै क्रूरः' (तै० सं० ६।१।७।७) इत्येकस्यैव क्रौर्याभिधानात्, न बहूनामिति, क्रूरसमुदायस्याक्रूरत्वे [2]नियामकाऽभावात्। 'तस्माद्रुद्रा

१. 'प्रथमं' इति मद्र० सं०। २. 'प्रमाणाऽभावात्' इति ग० कोशे।

घातुकाः' (तै० सं० ७।१।५।४) इति बहुष्वपि दर्शनाच्च। पित्रादिष्वपि तथा प्रसङ्गेन 'पितृभ्यस्त्वा पितृञ्जिन्व' इति तदभावप्रसङ्गात् ॥२१॥ अथ करणं जपति—'इमां नराः ...न रिष्येत्' इति। नाऽयं प्रैषमन्त्रः जपतीति वचनात्। सोमे चाऽस्य सद्भावेऽपि 'वेदिकारा वेदिं कल्पयत' (बौ० श्रौ० ६।२३।७) इति प्रैषोपलम्भात्। अतोऽत्र चातुःस्वर्यमुपांशुत्वञ्चेति ॥२२॥

अथ प्राचीं स्फ्येन वेदिमुद्धन्ति—'देवस्य सवितुः सवे कर्म कृण्वन्ति वेधसः' (तै० सं० १।१।९।३) इति ॥२३॥ अथाग्नीध्रमाह—'अग्नीदितस्त्रिर्हर' इति ॥२४॥ ततस्त्रिराग्नीध्रो हरति ॥२५॥ यदाग्नीध्रस्त्रिर्हरत्यथ संप्रैषमाह—'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि' इति ॥२६॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति—'ऋतमसि' (तै० सं० १।१।९।३) इति दक्षिणत 'ऋतसदनमसि' (तै० सं० १।१।९।३) इति पश्चाद् 'ऋतश्रीरसि' (तै० सं० १।१।९।३) इत्युत्तरतः ॥२७॥ अथ प्रतीचीं स्फ्येन वेदिं योयुप्यते—'धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्ते' (तै० सं० १।१।९।३) इति ॥२८॥

सा०—अथ प्राचीं स्फ्येन वेदिमुद्धन्ति—'देवस्य सवितुः...वेधसः' इति। प्राचीं प्राक्प्रवणामित्यर्थः, प्रागपवर्गत्वस्यौत्सर्गिकत्वात् ॥२३॥ अथाऽग्नीध्रमाह—'अग्नीदितस्त्रिर्हर' इति। यद्यप्यत्र प्रैषवचनादेवाऽऽग्नीध्रविषयत्वमवगतं तथाप्याग्नीध्रमाहेति पुनर्वचनमुत्तरार्थम्। ततश्च प्रोक्षणीरासादयेत्यादिवक्ष्यमाणस्य प्रैषस्याऽऽग्नीध्रविषयत्वं सिध्यतीति न पारिशेष्यात्तद्विषयत्वप्रतिपादनप्रयासः ॥२४॥ ततस्त्रिराग्नीध्रो हरति यदाऽऽग्नीध्रस्त्रिर्हरति ततः खातप्रदेशादाग्नीध्रः पाणिना त्रिवारं मृदमपनीयोत्करे क्षिपतीति शेषः। तथा च सूत्रम्—समुद्धतस्याऽऽग्नीध्र उत्करे त्रिर्निवपति (आप० श्रौ० २।२।५) इति। यदाऽऽग्नीध्रस्त्रिर्हरतीति, यदेति पदच्छेदः। एतदभिधानस्यैतत्प्रयोजनं, त्रिर्हरणानन्तरमेवोत्तरपरिग्राहार्थं संप्रैषो यथा न स्यादिति। अयमर्थः—यदा, यस्मिन् काले, आग्नीध्रस्त्रिर्हरति तदव्यवधानेन न सम्प्रैषः, अपि तु व्यवधानेन। अत एवोक्तम् - 'अथ सम्प्रैषमाह' इति। तत्तु तदेति, तस्माद्विज्ञायते— हरणप्रैषवचनयोर्नाऽव्यवहितमानन्तर्यमिति। दर्शे तावत्स्पष्टं—कालेन कर्मभिश्च व्यवधानं, हरणस्य पूर्वेद्युः क्रियमाणत्वात्। पौर्णमास्यां च हरणप्रैषवचनयोर्मध्ये वेदिकरणम्। अत एवोत्तरत्वं परिग्राहस्य। तथा च कर्मान्ते—अथेयं दार्शपौर्णमासिकी वेदिर्यजमानमात्री भवत्यपरिमिता वा। यथाऽऽसन्नानि हवींषि सम्भवेदेवं तिरश्ची। प्राञ्चौ वेद्यंसावुन्नयत्याऽऽहवनीयस्य परिगृहीत्यै। प्रतीची श्रोणी निरूहति गार्हपत्यस्य परिगृहीत्यै। पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये सन्नततरा भवतीत्येवमिव हि

योषेति। तस्यै वदति इयतीं खनतीति[1] प्रजापतिना [2]यजमानमुखेन सम्मिताम्। आ प्रतिष्ठायै खनतीति। [3]त्र्यङ्गुलं खेयेत्येकेषाम् चतुरङ्गुलं खेयेत्येकेषाम्। सीतामात्रीत्येकेषाम् रथवर्त्ममात्रीत्येकेषाम् यावत्पार्ष्ण्यै श्वेतमित्येकेषाम्। एतदेव [4]सदन्येषामनुक्रान्ततरं भवति। नैता मात्रा अतिखनेत्। दक्षिणतो वर्षीयसीं करोति। पुरीषवतीं करोति। प्राचीमुदीचीं प्रवणां निस्तिष्ठन्तीति (बौ० श्रौ० २४।२४।७-२४)। यजमानमात्री दैर्घ्येण। अपरिमिता, उक्तप्रमाणादधिका, न तन्न्यूना। तथा च कात्यायनः—'अपरिमितं प्रमाणाद्भूयः (का० शु० प० १।२३) इति। भारद्वाजश्च—तथाऽपरिमितशब्दः, सङ्ख्याया ऊर्ध्वम्' इति। पक्षद्वयेऽपि वेदिराहवनीयसञ्ज्ञता। गार्हपत्यात्प्राग्विशयः, तदभावे तूभयसञ्ज्ञता। तिर्यग्विस्तारप्रमाणमाह—यथासन्नानीति। आसन्नानि हवींषि यथासम्भवेत्सङ्गृह्णीयात् तथा तिर्यग्विस्तीर्णा। प्राञ्चौ वेद्यंसावुन्नयति, आहवनीयमभित उद्वहयति। प्रतीची श्रोणी निरूहति, नितरामूहति। अभितो गार्हपत्यं सम्बध्नातीत्यर्थः। पुरस्तादंहीयसी, पूर्वभागे तन्वी। पश्चात्प्रथीयसी, पृथुतरा। मध्ये सन्नततरा च, मध्ये तनुतरा। तदेतत्सर्वं शुल्बे निपुणतरं वक्ष्यामः। तस्यै इति षष्ठ्यर्थे चतुर्थी। वदति, ब्राह्मणमिति शेषः। इयतीं खनतीति, खननप्रमाणविशेषाऽनभिधानात् प्रमाणविकल्पान्नानाशाखोदितानाह—त्र्यङ्गुला खेयेत्येकेषामित्यादि। रथशब्दस्तच्चक्रवचनः। सीता फालकृष्टा रेखा। पार्ष्णिः पादस्य पश्चिमभागः। तस्य यावच्छुक्लो भागः तावत्खनति। ऐतदेवेति, एतदेव प्रमाणं सर्वेषां प्रमाणानामनुगतं सामान्यरूपम्, एतदुक्तप्रमाणाऽतिरिक्तं न खनेदित्यर्थः। तदेतत्सर्वमभिसन्धायोक्तं—आ प्रतिष्ठायै खनति (तै० सं० २।६।४।३) इति। यावता खननेन वेदिप्रतिष्ठा न निहन्यते, तावदुक्तप्रमाणेषु अन्यतरप्रमाणाश्रयणेन खनतीत्यर्थः। अत एवोक्तम्—नैता मात्रा अतिखनेदिति। निस्तिष्ठन्ति वेदिकरणाद्बहिरमन्तीत्यर्थः ॥२५॥ अथ सम्प्रैषमाह—'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि' इति। सम्प्रैषः, प्रसववचनप्रेरणम् ॥२६॥ प्रसूत उत्तरं परिग्राहं परिगृह्णाति। प्रसूतः, अनुज्ञातः। 'ऋतमसि' इति दक्षिणतः, 'ऋतसदनमसि' इति पश्चात्, 'ऋतश्रीरसि' इत्युत्तरतः। प्राग्दिशमारभ्य प्रादक्षिण्यं पूर्ववत् ॥२७॥ अथ प्रतीचीं स्फ्येन वेदिं योयुप्यते—'धा असि···यजन्ते' इति। प्रतीचीं प्रत्यगपवर्गाम्। योयुप्यते निम्नोन्नतसमीकरणार्थं घट्टयति। द्वैधे विशेषः—योयुपन इति। सूत्रं बोधायनस्य। चतुर्थेन योयुपित्वा पञ्चमेनोद्गृह्णीयादिति शालीकिः (बौ० श्रौ० २०।१९) इति। चतुर्थेन उदादायेत्यारभ्य स्वधामिरित्यन्तेन। पञ्चमेन तां धीरास इत्यनेनोद्गृह्णीयाद् उद्धृत्य गृह्णीयात्, स्फ्यमिति शेषः। अथ वा चतुर्थशब्दो मन्त्रचतुष्टयसमुदायवचनः ॥२८॥

---

१. 'इति' पदं कौ० सं० त्यक्तम् (तु०—तै० सं० २।६।४।२॥ तै० ब्रा० ३।२।९।१०)।
२. 'यज्ञमुखेन' इति कोशेषु।
३. 'द्व्यंगुलं खेयेत्येकेषां, त्र्यंगुलं०' इति कौ० सं०।
४. '०मनुनिक्रान्त०' इति कौ० सं०।

**अथान्तर्वेदि तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषमाह—'प्रोक्षणीरासादयेध्मा बर्हिरुपसादय। स्रुवं च स्रुचञ्च संमृड्ढि। पत्नीं संनह्याज्येनोदेहि' (तै० ब्रा० ३।२।९।१४) इति ॥२९॥**

भव०—अन्तर्वेदि तिरश्चीं लेखामालिख्य मध्ये तिर्यञ्चं स्फ्यं धारयन् ब्रवीति, वर्त्मन्निति वचनात्। प्रैषार्थश्चाध्वर्योरिति केचिन्न परप्रत्ययनार्थमानुपूर्व्य-स्मरणार्थमाध्वर्यवे समाम्नानादनुपूर्वतायै (तै० ब्रा० ३।२।९।१४) इति वचनात्। यथा तक्षा सूत्रं पातयित्वा तक्षति तथा प्रेषणं मनःसमाधानार्थम्। यथा लूयन्ते केदारा इति। आग्नीध्रकरणेऽर्थे समाख्यायामध्वर्युशब्दो गौणः स्यात्। संशयश्च किमग्नीत् प्रेषितो ब्रह्मयजमानौ वेति। सन्निधानाविशेषसमाख्याद्यभावात्तत्कार्ये च सर्वत्राग्नीद्ग्रहणात् परप्रेषणे च सर्वत्र नामग्रहणात्। प्रातर्यावभ्य (बौ० श्रौ० ७।२।१) इत्यादिष्विति तथा सति प्रैषो गौणः स्यात्। न ह्यात्मा प्रेष्यते। प्राप्तकालत्वे चात्मनि वचनमनर्थकं स्यात्, मध्यमपुरुषश्च विरुध्यते। न चात्मप्रेषणं प्रयोजनवत् सम्प्रैष इति वचनं क्वचिदात्मनि दृष्टम्। अनुपूर्वताया इति आग्नीध्रेऽपि तुल्यम्। प्रोक्षणीध्माद्याहरणे बहुवचनस्य प्रयोजनं वक्तव्यम्। करणमन्त्रवज्जपतीत्यवक्ष्यत्। सम्मार्गादिवत् समाख्यापि न विरुध्यते। अध्वर्युरवेक्षत इत्यध्वर्युग्रहणं ज्ञापकमितः प्राञ्चः पदार्था अन्येन कर्त्तव्या इति। सर्वत्र ब्रह्मा दक्षिणत आस्त इति तस्य चलनं नास्ति परिक्रीतैः कर्त्तव्यत्वाद् यजमानस्याप्यभावो होतुर्न तावत्कालः परिशेषादाग्नीध्रः। यच्च नामग्रहणादि[ति], होतः समिधो यजेति, उन्नेतराहरोपसृज (बौ० श्रौ० ७।६।७) इत्यवचनात्। प्रैषेऽनुक्तोऽपि सामर्थ्यात् सन्निहितः करोतीति गम्यते। मुखदघ्ने धारयन्नाह—आहरानय (बौ० श्रौ० १०।४८।२) इत्येवमादिषु कस्य नाम गृहीतमिति। इह वचने नामाग्रहणप्रयोजनं प्राक् स्रुक्सम्मार्गादनियमख्यापनार्थम्।

बहुपत्नीकस्य सर्वप्रयोगाङ्गीकरणात् प्रातिपदिकार्थस्य विद्यमानत्वात् प्रकृतित्वाच्चानूहः प्रातिपदिकार्थप्राधान्यात्, संनहनसम्बन्धस्याविवक्षितत्वात्। अविवक्षितमेकत्वं पत्नीसामान्यं विवक्षितम् ॥२९॥

सा०—अथाऽन्तर्वेदि तिर्यञ्चं, स्फ्यं स्तब्ध्वा सम्प्रैषमाह—'प्रोक्षणीरा… ह्याऽऽज्येनोदेहि' इति। अन्तर्वेदीत्यनेन वेदिं त्रेधा विभज्य पाश्चात्यवेदितृतीयं भागं विहाय तत्सन्निहित एव मध्यभागस्याऽपरार्धे स्फ्येनोदीचीं रेखामालिख्य तन्मध्ये तिर्यग्भूतं स्फ्यं स्तब्ध्वा स्थापयित्वा संप्रैषमाह। तथा च सूत्रम्—'पश्चार्धे वेदेर्वितृतीयदेशे (आप० श्रौ० ३।१।१०) इति। 'स्फ्यस्य वर्त्मन्त्सादयति' (तै० सं० २।६।४।४) इति लिङ्गाच्च रेखाकरणं सूचितम्। प्रैषवचनस्याऽऽग्नीध्रविषयत्वम्, अथाऽऽग्नीध्रमाहेति वचनस्यैतत्सम्बन्धित्वेन व्याख्यातत्वात्।

प्रोक्षण्यासादने च दक्षिणेनाऽध्वर्यु ताः स्फ्य उपनिनीयेत्येतदध्वर्यु व्यतिरिक्तस्याऽन्यकर्तृकत्वज्ञापनाच्च सुकरोऽवबोधः । तथाप्यत्राऽभियुक्तै रेवं[1] विचारितम् ।

"न परप्रत्यायनार्थमानुपूर्व्यस्मरणार्थम् आध्वर्यवे समाम्नानात्, 'अनुपूर्वतायै' (तै० ब्रा० ३।२।६।१४) इति वचनात् । यथा तक्षा सूत्रं पातयित्वा तक्षति तथा प्रेषणं मनःसन्धानार्थम् । आग्नीध्रः करणे समाख्यायामध्वर्यु शब्दो गौणः स्यात् । संशयश्च, किमग्नीत्प्रेषितो ब्रह्मयजमानौ वेति । सन्निधानाऽविशेषाद्विशेषसमाख्याद्यभावात् तत्कार्ये च सर्वत्राऽग्नीद्ग्रहणात् परप्रेषणे च सर्वत्र नामग्रहणात् प्रातर्यावभ्य इत्यादिष्विति । तथा सति प्रैषो गौणः स्यात् । न ह्यात्मा प्रेष्यते । प्राप्तकालत्वे चाऽऽत्मनि वचनमनर्थकं स्यात्, मध्यमपुरुषश्च विरुध्यते । न चाऽऽत्मप्रेषणं प्रयोजनवत्, सम्प्रैष इति वचनं क्वचिदात्मनि न दृष्टम् । अनुपूर्वताया इत्याग्नीध्रस्याऽपि तुल्यम् । प्रोक्षणीध्माद्याहरणे बहुवचनस्य प्रयोजनं वक्तव्यम् । करणे करणमन्त्रवज्जपतीत्यवक्ष्यत् । सम्मार्गादिवत्समाख्यापि न विरुध्यते । अध्वर्यु रवेक्षत इत्यध्वर्युग्रहणं ज्ञापकम्, इतः प्राञ्चः पदार्था अन्येन कर्तव्या इति । सर्वत्र ब्रह्मा दक्षिणत आस्ते इति तस्य चलनं नाऽस्तीति, अपरिक्रीतैरकर्तव्यत्वात्, यजमानस्य स्वामित्वात्, होतुर्नागतः कालः, परिशेषादाग्नीध्रः । यच्च नामाऽग्रहणादिति. होतः समिधो यजेति, उन्नेतराहरोपसृजेत्यवचनात् प्रैषेऽनुक्तोऽपि सामर्थ्यात्सन्निहितः करोतीति गम्यते । मुखदघ्ने धारयन्नाह,आहराप आनयेत्यादिषु कस्य नाम गृहीतमिति । इह च नामाऽग्रहणप्रयोजनं प्रावस्तु क्सम्मार्गादिनियमख्यापनार्थम् ।"

यत्राऽमन्त्रकाः पदार्था अनियतकर्तृका भवन्ति । तथा च बहुवचनं 'आहरन्त्येताः प्रोक्षणीः (बौ० श्रौ० १।११।३०) इति । अन्ये तु प्रैषस्याऽध्वर्यु विषयत्वं वैकल्पिकमाहुः । अपचारे यजमानस्य 'स्वयमात्मानमनुजानीयात्' इति न्यायेनाऽऽत्मन्यपि सम्प्रैषोपपत्तेश्च । न चैवं सम्प्रैषाऽनर्थक्यम्, कर्तृसंस्कारार्थत्वात् । अत एवोक्तम्—'अनुपूर्वताया' इति । तथा च कात्यः—यथा प्रेषितमन्यः करोति[2] पराधिकारात्स्वयं वाऽविरोधात् (का० श्रौ० २।६।२७,२८) इति । भारद्वाजोऽपि—आग्नीध्र एतानि कर्माणि कुर्यादित्येकमध्वर्यु रित्यपरम् (भा० श्रौ० २।३।१२) इति ।

पत्नीं सन्नह्येति, तदेतद्द्विबहुपत्नीकस्याप्येकवचनमेव, न प्रकृतावूहो विद्यत (आप० परि० ३।४८) इति सूत्रोक्तेः । ततश्चैकत्वमविवक्षितं वा स्याद् ग्रहं संमार्ष्टीतिवत् । पत्नीत्वजातिसद्भावपक्षे तु तद्विषयमेकवचनम् । तथा चोक्तं भट्टपादैः—पत्नीसन्नहनादौ तु व्यक्तिमाकृतिसङ्ख्यया' (श्लो० वा० १।१।५ वनवादश्लो० ८८) इति । भाष्ये च—'अर्हविशेषे चोद्यते प्रत्येकं परिसमाप्यते' इति । एवं सर्वाऽनूहप्रसङ्गे सूत्रमुपतिष्ठते न प्रकृताविति । केचित्तु प्रकृतावप्यूहमिच्छन्ति, यथा प्रकृतौ द्वादशाहेऽग्र सुत्यामित्युपदेश इति । अत एव गोपालः प्रकृतावूहविकल्पमाह—'अविकारोऽथ वोहेद्वा या सम्राडिति शासने' इति । एवं विकल्पसम्भवेऽपि न्यायसम्मतः सर्वाऽनूहपक्ष एव ॥२६॥

---

१. भवस्वामिव्याख्यानमत्रानुसंधेयम् । २. 'करोति' पदं कात्यायनश्रौतसूत्रे नास्ति ।

आहरन्त्येताः प्रोक्षणीरभिपूर्य ॥३०॥ दक्षिणेनाध्वर्युस्ता स्फ्य उपनिनीय स्फ्यस्य वर्त्मन्सादयति ॥३१॥ अथोत्करे स्फ्यं निहन्ति—'यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्णता च तस्येन्द्रवज्रेण शिरश्छिनद्मि' (तै० ब्रा० ३।७।६।४) इति ॥३२॥ हस्तौ प्रक्षाल्य स्फ्यं च प्रक्षालयति ॥३३॥ उपसादयन्त्ये-तदिध्माबर्हिर्दक्षिणमिध्ममुत्तरं बर्हिः ॥३४॥

भव०—आहरणे बहुवचनम् नियमार्थम्। यद्यप्यन्य आनेता उपनिनयनसादने स्वयंकर्तृके आसादनप्रैषार्थमनुसादयति। आहरणं निक्षेपणे वर्तते। तस्माद् आहृत्य निक्षिप्ताः स्वयं गृहीत्वा वर्त्मनि सादयति। आग्नीध्र एव वाहृत्य निनीय सादयति। अभिपूरणं बह्वीरासाद्याः (तै० ब्रा० ३।२।९।१५) इति वचनादुत्तरकार्य-प्रभावनार्थञ्च। एता इति पूर्वे निहिता इत्यर्थः। अपूर्वास्ता विज्ञापयिष्यति॥३०-३१॥ स्फ्योत्सादनकाले द्वेष्याध्यानं कर्त्तव्यं ब्राह्मणे (तै० ब्रा० ३।२।९।१५) उक्तत्वात् लिङ्गाच्च गत इति इह नोक्तम्। उपसादने बहुवचनमनियमार्थम्। प्रणीताभ्य उत्तरत इध्मस्तत उत्तरं बर्हिः ॥३४॥

नवमोऽध्यायः समाप्तः ॥

सा०—आहरन्त्येताः प्रोक्षणीरभिपूर्य। दक्षिणेनाऽध्वर्युः ताः स्फ्य उपनिनीय स्फ्यस्य वर्त्मन्सादयति। आहरन्तीति बहुवचनादमन्त्रकाणि कर्माण्यनेककर्तृकाण्यपि भवन्तीति सूचयति। अभिपूर्याऽऽहरन्तीयत्यन्वयः। अभिपूरणञ्च लौकिकाभिरद्भिः। ता अन्ये-नाऽऽहृता अध्वर्युर्दक्षिणेन हस्तेनाऽऽदाय एतावन्तं कालं दक्षिणस्य स्फ्यधारणव्यापृतत्वेऽपि, इदानीं सव्येन स्फ्यस्य धारणमर्थाद्भवति। स्फ्यस्य वर्त्मन् वर्त्मनि, प्राकृतायां रेखायां सादयति। द्वैधे विशेषः—प्रोक्षणीनामासादन इति। स्फ्यस्य वर्त्मन्नुपनिनीयाऽऽसादयेदिति बोधायनः। अनुपनिनीयैवेति शालीकिः (बौ० श्रौ० २०।९) इति ॥३०-३१॥ अथोत्करे स्फ्यं निहन्ति—'यो मा…च्छिनद्मि' इति। हस्तौ प्रक्षाल्य स्फ्यञ्च प्रक्षालयति। निहन्ति उदस्यति। तत्काले च भ्रातृव्यस्मरणम्। 'हस्ताववनेनिक्ते, आत्मानमेव पवयते' इत्यादि ॥३२-३३॥ उपसादयन्त्येतदिध्माबर्हिर्दक्षिणमिध्ममुत्तरं बर्हिः। अत्रापि बहुवचनेनाऽमन्त्रकत्वात्कर्तृनियमाऽभावः। आसादनदेशश्च कर्मान्ते दर्शितः—समान्येतानि कुर्यात्प्रणीता आहवनीयं ब्रह्माणमिध्माबर्हिरिति। यज्ञशिर इत्येतदाचक्षत (बौ० श्रौ० २४।२५।१६) इति प्रणीताभ्य उत्तरत इध्मः तदुत्तरं बर्हिरिति। द्वैधे विशेषः—इध्मा-बर्हिषोरासादन इति। सूत्रं बोधायनस्य। उत्तरमिध्ममिति शालीकिः (बौ० श्रौ० २०।९) इति।

अत्र प्रयोगक्रमः—

अथाऽध्वर्युरुत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तप्तायां पिष्टोद्वपन्यां सव्येन पवित्रं धारयन्दक्षिणहस्तेन कृष्णाजिनात्पिष्टानि संवपति—देवस्य त्वेत्यारभ्य अग्नये जुष्टं संवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधायेति पौर्णमास्याम्। अमावास्यायाम्—अग्नये जुष्टं संवपामीन्द्राग्निभ्यामित्यसन्नयतः। सन्नयतोऽग्नये जुष्टं संवपामीन्द्रायेतीन्द्रयाजिनः। महेन्द्रायेति तद्याजिनः। ब्रह्माऽपि संवपनप्रभृत्याभस्माऽभिवासनाद्वाग्यतो भवति। सुभृते पिष्टे परिकर्मिणमाह—आहराऽप आनयेति। परिकर्मी पात्रान्तरमादाय वेदेनोपयम्य स्रुवेण प्रणीताभ्य उपहृत्य तस्मिन्नानीय एवं मदन्तीभ्य आदाय तदप्यस्मिन्नानीय गार्हपत्यस्योत्तरतः प्रत्यङ्मुखस्तिष्ठन्नुभयीः पिष्टेष्वानयति। आनीयमाना अध्वर्युः प्रतिमन्त्रयते—'समापो···सृजध्वम्' इति। भूमौ पिष्टोद्वपनीं निधाय तप्ताभिरनुपरिप्लावयति—'अद्भिः पृच्यध्वम्' इति। मेक्षणेन मिश्रयति—'जनयत्यै···मि' इति। त्रेधा कृत्वाऽभिमृशति—'अग्नये त्वा, अग्नीषोमाभ्यां त्वा, इन्द्राय वैमृधाय त्वा' इति पौर्णमास्याम्। अमायान्तु द्वेधा कृत्वाऽभिमृशति—'अग्नये त्वेन्द्राग्निभ्यां त्वा' इत्यसन्नयतः। सन्नयतस्तु—'अग्नये त्वेन्द्राय त्वा' इति, 'महेन्द्राय त्वा' इति तद्याजिनः। प्रथमभागं पिण्डं करोति—'मखस्य शिरोऽसि' इति, अश्वशफमात्रं सङ्कुचितकूर्माकृतिमिव करोति। दक्षिणकपालाङ्गारान्प्रत्यूह्याऽऽग्नेयमधिश्रयति—'घर्मोऽसि विश्वायुः' इति। सर्वेषु कपालेषु यथा व्याप्नोति तथा प्रथयति—'उरु प्रथ···ताम्' इति।

लौकिकमाज्यमानीय विलीनमप्यदृष्टार्थं गार्हपत्येऽधिश्रित्याऽऽज्यस्थाल्यामुदगग्रं पवित्रं निधाय तां सव्येन गृहीत्वा दक्षिणेनाऽऽज्यं निर्वपति—'महीनां पयो देवयज्यायै' इति। गार्हपत्यस्योत्तरतस्तत्क्षेत्र एव भस्ममिश्रानङ्गारान्निरूह्य तेष्वाज्यस्थालीमधिश्रयति। पवित्रं प्रोक्षण्यामेव निदधाति। अग्नीषोमीय-वैमृधयोरपि मखस्येत्यारभ्य प्रथनान्तं समानम्। अमावास्यायामाज्यं निरुप्याऽसन्नयतः—'ऐन्द्राग्नं' सन्नयतः—'ऐन्द्रं', 'माहेन्द्रं' तद्याजिनः। पुरोडाशोत्तरे शृतं, तदुत्तरतो दधि। पिष्टोद्वपन्यामप आनीय सोदकेन पाणिनाऽऽग्नेयं पुरोडाशं श्लक्ष्णीकरोति 'त्वचं गृह्णीष्व' इति त्रिर्मन्त्रेण। एवमुत्तरयोरपि।[1]त्रिरावृत्तिर्मन्त्रस्य क्रियायाश्च। ज्वलतोल्मुकेन सर्वाणि साज्यानि हवींषि पर्यग्निकरोति 'अन्तरितं···यः' इति सकृन्मन्त्रमुक्त्वा त्रिः कर्म करोति। पुरोडाशानां चिह्नानि करोत्यविपर्यासाय।

गार्हपत्य आदीपितैर्दर्भैर्दक्षिणं पुरोडाशं श्रपयति—'देवस्त्वा···धाक्' इति। गार्हपत्यमभिमन्त्रयते—'अग्ने हव्यं रक्षस्व' इति। एवमुत्तरयोरपि पुरोडाशयोर्देवस्त्वेत्यादिश्रपणाऽऽवेक्षणे। दक्षिणपुरोडाशस्योपरि धृष्टचा भस्माऽभिवास्य वेदेन साङ्गारं भस्माऽभिवासयति—'सम्ब्रह्मणा पृच्यस्व' इति त्रिर्मन्त्रः क्रिया च त्रिः। तथोत्तरयोरपि पुरोडाशयोर्भस्माभिवासनम्। 'अविदहन्तः श्रपयत' इत्याग्नीध्रं सम्प्रेष्य वाचं विसृजते। आग्नीध्रः परिभोजनीय-

१. इदं वाक्यं नास्ति वृ० कोशे।

दर्भैर्हवींषि सुभृतानि करोति। पिष्टोद्वपनीं संक्षाल्य तस्यां हस्तावपि सङ्क्षाल्य तां गार्हपत्यसमीपे धारयन् गार्हपत्याज्ज्वलितोल्मुकेनाऽवाग्भूतेनोपरिगृहीतेन पात्रीस्थमुदकं तापयित्वोल्मुकमग्नौ प्रक्षिपति। पात्रीस्थमुदकं निरवशेषं हृत्वाऽन्तर्वेदि स्फ्येन प्रागायताः प्रागपवर्गास्तिस्रो लेखा लिखित्वा, अप उपस्पृश्य, पात्रीस्थमुदकं हस्तेन प्रागारभ्य प्रत्यगपवर्गं लेखासु निनयति 'एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा' इति। एकतायेदं "द्वितायेदं त्रितायेदं पृथिव्यै अन्तरिक्षाय दिवे वा। अग्नये आदित्याय वैद्युताय वा। पित्रे पितामहाय प्रपितामहाय इति वा।

वेदमादत्ते—'अयं वेदः…करोतु' इति। वेदेन वेदिं सकृन्मन्त्रमुच्चारयन् त्रिः सम्मार्ष्टि—'वेदेन वेदिं…दानिः' इति। स्फ्यादानादारभ्य तिष्ठन्नेव करोति। ब्रह्मा स्फ्यादानप्रभृत्या प्रोक्षणीनामासादनाद्वाचंयम आस्ते। अध्वर्युर्जघनेन वेद्यां तिष्ठन्दर्भाभ्यां सह स्फ्यमादत्ते—'देवस्य त्वा…माददे' इति। आदायाभिमन्त्रयते—'इन्द्रस्य…शततेजाः' इति। स्फ्यं सव्येन गृहीत्वा दक्षिणेन हस्तेन हस्तस्थबर्हिषोरन्यतरेण द्विगुणभुग्नेन दर्भेण मूलादारभ्याऽग्रात्स्फ्यमुन्मार्ष्टि—'वायुरसि…वधः' इति। परिमार्जनदर्भं निरस्याऽप उपस्पृश्यापरेणाऽऽहवनीयं, यजमानमात्री वेदिः तां त्रेधा विभज्य, पाश्चात्यभागद्वयं विहाय पौरस्त्यभागं त्रेधा विभज्य तस्य पाश्चात्यतृतीयं भागं विहाय मध्यमभागे पूर्वगृहीतं दर्भम् उदगग्रं पृष्ठचादेशे निदधाति—'पृथिव्यं वर्म…भव' इति। तृणं स्फ्येन प्रहरति—'पृथिवि…हिंसिषम्' इति। अप उपस्पृश्य, स्फ्येन मूलतश्छिन्नतृणसहितान्पांसूनुपादत्ते 'अपहतोऽररुः पृथिव्यै' इति। हरति उत्करदेशपर्यन्तं 'व्रजं गच्छ गोस्थानम्' इति। वेदिमीक्षते—'वर्षतु ते द्यौः' इति।

हृत्वोत्करे देशे निवपति—'वधान…मौग्' इति। आग्नीध्रः प्राङ्मुख आसीनस्तदञ्जलिनाऽभिगृह्णाति। एवं द्वितीयं तृणमध्यमप्रदेशे प्रहृत्य हरति। तृणादाने विशेषः—'अपहतोऽररुः पृथिव्यै देवयजन्यै' इति। तथा तृतीयं तृणस्योत्तरभागे प्रहृत्याऽग्रप्रदेशं किञ्चिद्वंद्यामवशेष्य 'अपहतोऽररुः पृथिव्या अदेवयजनः' इत्यादत्ते। निवपने—'अररुस्ते दिवं मास्कान्' इति मन्त्रान्तः। तूष्णीं चतुर्थम्। अवशिष्टतृणं स्फ्येन प्रहृत्याऽप उपस्पृश्य सर्वं बर्हिःशेषं पांसूंश्चादाय हृत्वा वेदिमवेक्ष्य, उत्करदेशे निवपति। पर्यायचतुष्टयेऽपि आग्नीध्रोऽञ्जलिनाऽभिगृह्णाति। अध्वर्युः स्फ्येन पूर्वं परिगृह्णाति। वेद्या दक्षिणमंसमारभ्याऽऽदक्षिणायै श्रोण्यै रेखां लिखति—'वसवस्त्वा…छन्दसा' इति। दक्षिणश्रोणिप्रभृत्योत्तरायै श्रोण्यै रेखां करोति—'रुद्रास्त्वा…छन्दसा' इति। अप उपस्पृश्योत्तरां श्रोणिमारभ्योत्तरादंसाल्लिखति—'आदित्यास्त्वा…छन्दसा' इति। करणमन्त्रं जपति—'इमां…न रिष्येत्' इति। स्फ्येन प्राक्प्रवणां वेदिं खनति—'देवस्य सवितुः…धसः' इति।

अप उपस्पृश्याग्नीध्रमाह—'अग्नीदितस्त्रिर्हर' इति। आग्नीध्रः खाताद्देशात्पांसूंस्त्रिरादायोत्करे निवपति। अन्तेऽपामुपस्पर्शनम्। अध्वर्युर्ब्रह्माणमाह—'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि' इति। ब्रह्माऽभ्यनुजानाति—'बृहस्पते…धेह्यो परिगृहाण' इति। अध्वर्युः

पूर्ववदुत्तरं परिग्राहं स्फ्येन परिगृह्णाति—'ऋतमसि' इति दक्षिणतः, 'ऋतसदनमसि' इति पश्चात्, 'ऋतश्रीरसि' इत्युत्तरतः। स्फ्येनोदगग्रेण प्रत्यगपवर्गं समीकरोति—'धा असि ·· यजन्ते' इति। वेदेः पश्चिमतृतीयभागे स्फ्येन तिरश्चीं लेखां लिखित्वा, तस्यां तिर्यञ्चं स्फ्यं स्तब्ध्वा, सम्प्रैषमाह—'प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवञ्च स्रुचश्च संमृड्ढि पत्नीं सन्नह्याऽऽज्येनोदेहि' इति। पत्न्यामनालम्भुकायामप्यविकारेण सम्प्रैषः। द्वि-बहुपत्नीप्रयोगेऽप्यनूहः। प्रैषार्थनाग्नीध्रः करोति। प्रोक्षणीर्लौकिकाभिरद्भिरभिपूर्याऽध्वर्यवे प्रयच्छति। अध्वर्युः सव्येन स्फ्यं गृहीत्वा दक्षिणेन ताः स्फ्यस्य वर्त्मनि किञ्चिदुपनिनीय तस्मिन्सादयति। उत्करे स्फ्यं प्रत्यगग्रं निरस्यति—'यो मा हृदा···छिनद्मि' इति। हस्तौ प्रक्षाल्य [1]स्फ्यं प्रक्षालयति। आग्नीध्र उत्तरेणाऽऽहवनीयं प्रणीतां प्रागग्रमिध्माबर्हिरुपसादयति। दक्षिणमिध्ममुत्तरं बर्हिः॥

॥ इति प्रथमे प्रश्ने नवमोऽध्यायः॥

॥ नवमोऽध्यायः समाप्तः॥

—:०:—

१. 'स्फ्यञ्च' इति मद्र० सं०।

# दशमोऽध्यायः

अथैताः स्रुचः समादत्तो दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवाँ प्राशित्रहरणं वेदपरिवासनानोति ॥१॥ गार्हपत्ये प्रतितपति—'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि' (तै० सं० १।१।१०।१) इति ॥२॥ अथ स्रुवं संमार्ष्टि—'गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहं संमार्ज्मि' (तै० सं० १।१।१०।१) इति ॥३॥ त्रिरन्तरतस्त्रिर्बाह्यतस्त्रिरेवं मूलैर्दण्डं संमृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छति ॥४॥

भव०—अथेति उत्तरं समन्त्रकत्वादिध्माद्युपसादनवद् अनियमनिवृत्त्यर्थम् । एता इति पात्राणां धार्यत्वं दर्शयति । सव्यविधित्सया दक्षिणानुवादः, दक्षिणस्याचारत एव प्रकृतत्वाद्यथा चक्रवर्तनीविधित्सया हविर्धानानुवादः ॥१॥ गार्हपत्यग्रहणं नियमार्थम् ॥२॥ इतरस्मिन् संमृज्याद्भिरित्यविशेषादन्तरतोऽग्रैः प्रागपवर्गो बाह्यतोऽग्रैरेव प्रत्यगपवर्गः । अथ प्रत्यगपवर्गः मूलैर्दण्डमधः प्रत्यगारभ्योपरि प्रागपवर्गः ॥४॥

सा०—अथैताः स्रुचः समादत्ते दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनानि इति । एता इत्युपयुक्तानां स्रुचामादानकर्मतामाह । अथेति अध्वर्युव्यतिरिक्तं कर्तारमाह । स चाऽग्नीध्र एव[1], समन्त्रकत्वात् प्रतितपनादेः । न चाऽन्य आदत्ते अन्यः प्रतितपतीति सम्भवति । दक्षिणहस्तेन ग्रहणस्याऽऽचारप्राप्तत्वेऽपि सव्यविधित्सया तदनुवादः । अन्यथा सर्वेषां सव्येन ग्रहणमापद्येत ॥१॥ गार्हपत्ये प्रतितपति—'प्रत्युष्टं··· निष्टपामि' इति । गार्हपत्यग्रहणं नियमार्थम् ॥२॥ अथ स्रुवं संमार्ष्टि—'गोष्ठं मा··· साहं संमार्ज्मि' इति । वेदपरिवासनैरिति शेषः । अत्र द्वैधे विशेषः—वेदपरिवासनेष्विति । पञ्चधा विभज्य स्रुचः संमृजेदिति बोधायनः । समस्तैरेवाऽभ्याकारमिति[2] शालीकिः इति (बौ० श्रौ० २०।१०) । स्रुक्सङ्ख्यया वेदपरिवासनानां पञ्चधा विभागः । तथा च न विनियुक्तविनियोग इत्येकः पक्षः । शालीकिमते तु[3] अभ्याकारमिति ब्राह्मणे (तै० ब्रा० ३।३।१।४) श्रवणात्पुनः पुनस्तैरेव सम्मार्जनमिति ॥३॥ त्रिरन्तरतः त्रिर्बाह्यतस्त्रिरेवं मूलैर्दण्डं संमृज्याऽद्भिः संस्पर्श्य[4] प्रतितप्योत्प्रयच्छति । त्रिरन्तरतः, अग्रैरिति शेषः । संमृज्येत्यनु-

१. 'एव' नास्ति वृ० कोशे ।
२. '०रेवाद्भिरभ्या०' इति कै० सं० ।
३. 'तु' नास्ति वृ० कोशे ।
४. 'संस्पृश्य' इति वृ० कोशे ।

पङ्क्तः। त्रिर्बाह्यतः, तथैव प्रागपवर्गत्वं प्रत्यगपवर्गत्वञ्च। मूलेदण्डं, त्रिरेवं समृज्येति दण्ड-संमार्जने प्रत्यगपवर्गं प्रागपवर्गञ्च बाह्याभ्यन्तरभागापेक्षयाऽनुलोम्याय। तथा च ब्राह्मणम्—'अधस्तात्प्रतीचीं, दण्डमुत्तमतः (तै० ब्रा० ३।३।१।४) इत्यादि। अद्भिः संस्पर्श्य'[1] संमृष्टं लौकिकोदकस्पर्शनकर्मतामापाद्य न तु प्रक्षाल्योत्प्रयच्छति, परिकर्मिणो हस्ते समुद्धृत्य प्रयच्छति न त्वधः स्थापयति, नाऽपि नीचैः प्रयच्छतीत्यर्थः। एवमुत्तरत्राऽपि ॥४॥

अथ जुहूं संमार्ष्टि—'वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं संमार्ज्मि' (तै० सं० १।१।१०।१) इति ॥५॥ तथैव संमृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छति ॥६॥ अथोपभृतं संमार्ष्टि—'चक्षुः श्रोत्रं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं संमार्ज्मि' (तै० सं० १।१।१०।१) इति ॥७॥ तथैव संमृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छति ॥८॥ अथ ध्रुवां संमार्ष्टि—'प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीं संमार्ज्मि' (तै० सं० १।१।१०।१) इति ॥९॥ तथैव संमृज्यादभिः संस्पर्श्य प्रतितप्योत्प्रयच्छति ॥१०॥ अथ प्राशित्रहरणं संमार्ष्टि—'रूपं वर्णं पशुभ्यो मा निर्मृक्षं वाजिनं त्वा सपत्नसाहीं संमार्ज्मि' इति ॥११॥ तथैव संमृज्यादभिः संस्पर्श्य प्रति-तप्योत्प्रयच्छति ॥१२॥ अथैतानि स्रुक्संमार्जनान्यदभिः संस्पर्श्य गार्हपत्ये-ऽनुप्रहरति—'दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितं तेन वयं सहस्र-वल्शेन सपत्नं नाशयामसि स्वाहा' (तै० ब्रा० ३।३।२।१) इति ॥१३॥ अथाग्रेणोत्करं तृणानि संस्तीर्य तेषु स्रुचः सादयित्वा ॥१४॥

सा०—अथ जुहूं संमार्ष्टि—'वाचं प्राणं···सम्मार्ज्मि'[2] इति। तथैव सम्मृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छति। अथोपभृतं सम्मार्ष्टि—'चक्षुः श्रोत्रं··· सम्मार्ज्मि' इति। तथैव सम्मृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छति[3]। अथ ध्रुवां संमार्ष्टि—'प्रजां योनिं···सम्मार्ज्मि' इति। तथैव सम्मृज्याद्भिः संस्पर्श्य प्रतितप्यो-त्प्रयच्छति[3]। अथ प्राशित्रहरणं सम्मार्ष्टि—'रूपं वर्णं···सम्मार्ज्मि' इति[4]। तथैव सम्मृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छति[3]। द्वये विशेषः—प्राशित्रहरणस्य सम्मार्जन

१. 'संस्पृश्य' इतीहोत्तरत्र च वृ० कोशे।
२. अथ जुहूं वाचं प्राणं० वाजिनीं त्वा सपत्नसाहीं संमार्ज्मि' इति वृ० कोशे।
३. 'तथैवमुत्प्रयच्छति' इति वृ० कोशे।
४. 'इति' नास्ति मद्र० सं०।

इति। सूत्रं बोधायनस्य। तूष्णीं सम्मृजेदिति शालीकिः। न सम्मृजेदित्यौपमन्यवः (बौ० श्रौ० २०।१०)। अस्मिन्पक्ष न प्राशित्राऽऽदानम्, निष्टपनञ्चाऽनुपयोगादित्येके। अन्ये तु विशेषनिषेधस्य शेषाऽभ्यनुज्ञाविषयत्वात्, सम्मार्जननिषेधाद् अन्यथा प्रसक्त्यभावाद् इडापात्रादिवद् इति ॥५-१२॥ अथैतानि स्रुक्सम्मार्जनान्यद्भिः संस्पर्श्य[1] गार्हपत्येऽनुप्रहरति—'दिवः शिल्पः···स्वाहा' इति। अनुप्रहरतीति आनुपूर्व्येण प्रहरणमाह। ततश्च प्रस्तरप्रहरणधर्मोऽत्राप्यनुसन्धेयः। 'अथैतानि स्रुक्सम्मार्जनानि' इत्यथशब्दोपादानाद्धवनरूपत्वाद् अनादिष्टेष्वध्वर्युणैव होतव्यम् (बौ० श्रौ० २४।८।७) इति कर्मान्तोक्तेश्चाध्वर्युरेव वेदपरिवासनान्यनुप्रहरतीत्येके। अन्ये तु प्रहरणस्य प्रतिपत्तिमात्रत्वात्सञ्चरे वोत्करे वा निरसनस्याप्युपदेशात्प्रैषाऽनन्तर्मविऽप्याग्नीध्र एव कर्तेत्याहुः। द्वैधे तु—स्रुक्सम्मार्जनानामनुप्रहरण इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनोऽद्भिरभ्युक्ष्याऽसञ्चरा उदस्येदुत्करे वा। एवमिध्मसन्नहनानीति (बौ० श्रौ० २०।१०)। अत्र दामोदरः सूत्रव्याख्यातृभिरभिहितप्रकारेणाऽसञ्चरोत्करयोर्निरसनं विकृतिविषयमाह। न चात्र कल्पे सूत्रे वा ज्ञापकमुपलभामहे ॥१३॥ अथाऽग्रेणोत्करं तृणानि संस्तीर्य तेषु स्रुचः सादयित्वा। सम्मार्जनक्रमानुरोधेन सादनक्रम इति याज्ञिकप्रसिद्धिः ॥१४॥

अथैतां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य जघनेन दक्षिणेन गार्हपत्यमुदीचीमुपवेश्य योक्त्रेण संनह्यति—'आशासाना सौमनसं प्रजां सौभाग्यं तनूमग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम्' (तै० सं० १।१।१०।१) इति ॥१५॥ [[2]अथैनां वाचयति—'युक्तं क्रियाता आशीः कामे युज्याते' (तै० ब्रा० ३।३।३।४) इति।]

भव०—तीर्थेन प्रपादनमुत्पन्ने तीर्थे यैः प्रवर्तितव्यं तेषां नियमः। नेह देशलक्षणः। अनुत्पन्ने त्वनियमः। तथा दीक्षणीयायां पत्न्या अपरद्वारदेशेन प्रपदनं विहितम्। अपरे पुनर्देशलक्षणेति। आधानेऽनुत्पन्ने तीर्थे वेद्युत्करावुद्देशेन प्रपद्य (बौ० श्रौ० २।६।५) इति वचनात्। प्राङ्मुखत्वासनमपोदितमुदीचीमित्यनेन द्रष्टव्यम् इह, तथापि पञ्चचोडास्वनूदितं (तै० सं० ४।४।३) तस्मात् पश्चात् प्राची पत्न्यन्वास्त इति प्रयोजनमन्यत्र प्राङ्मुखमुपविशति। संनह्यतीति हेतुकर्तरि यथा बहुहोत्रेयः कृन्ततीति वचनाद् हेतुकर्तृत्वम्। सकृदेवैनाः सर्वाः (बौ० श्रौ० २०।१०) इति च। परपुरुषसंस्पर्शनप्रतिषिद्धत्वात् स्वयं सा संनह्यति। इतरो बन्धयतीति केचित्। मुख्यासम्भवे लक्षणा न्याय्या, संभवति चात्र मुख्यः। बर्हिरादिषु 'संनह्यति' इति कर्तैवोच्यते। संनह्यत इति च कर्मत्वमुपपद्यते। कर्तृत्वे परस्मैपदं स्यात्।

१. 'संस्पृश्य' इति वृ० कोशे।
२. इदं सूत्रं न सार्वत्रिकमिति कै० सं० पादटिप्पणम्।

कर्मकर्तृत्वं च विशेषाभावादनर्थकं हेतुकर्तृत्वं च सकृदेवैना इति च पक्षान्तरम्। तथा च एकैकमेवासाम् (बौ० श्रौ० २०।१०) इति दुहितृवद् गुरुत्वात् संस्पर्शो न दुष्यति। तथा चोक्तम्—को नु खल्वृत्विक्षु धर्म इति, य आचार्य इति (बौ० श्रौ०२४। १२।१७,१८)। व्रते विकल्पः संनहनार्थत्वादे व्रतोपायनश्रवणात्। सति हि व्रतोपायने तदनर्थकं स्यात् असमाम्नानाच्च लिङ्गञ्च एकैकामेवासां संनह्यैदेकैकां गार्हपत्य-मीक्षयेत् (बौ० श्रौ० २०।१०) इति स्वयमेव प्राङ्मुखीयावद्वाचनमिति वाचनमीक्षणं च सुखाद्भवति ॥१५॥

**सा०**—अथैतां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य, जघनेन दक्षिणेन गार्हपत्य-मुदीचीमुपवेश्य, योक्त्रेण सन्नह्यति—'आशासाना…सुकृताय कम्' इति। एतां पत्नीमिति, यया सहाऽऽहिता अग्नयस्तामित्यर्थः। तेन नोत्तरकालमूढायाः पत्नीत्वम्। सत्य-प्यन्यन्तराऽपेक्षया पत्नीत्वे, सहाऽऽधानाऽभावादत्राऽप्रवेशो यथा स्यादिति। अन्तरेण वेद्युत्करा-विति, वेद्युत्करमध्यदेशस्य तीर्थत्वं प्राक्प्रतिपादितम्, भाव्यपेक्षया मुख्यवृत्त्या त्विदानीमेव वेदिकरणाऽनन्तरमेव तीर्थता। अत एवाऽत्राप्यन्तरेण वेद्युत्करौ प्रपाद्येत्यभिहितम्। प्रपाद्येति, आग्नीध्रप्रेरितायाः प्रपदनं गम्यते। अन्यथा स्वतन्त्रप्रवेशेषु प्रपद्येत्यवक्ष्यत्। जघनेन दक्षिणेन गार्हपत्यमिति। जघनशब्दः पश्चिमदिगुपलक्षकः। तेन गार्हपत्यापेक्षया दक्षिणपश्चिमायां दिश्युदङ्मुखीमुपवेश्य योक्त्रेण सन्नह्यति सन्नाहयतीत्यर्थः। अत एव पत्नी स्वयमेव सन्नह्यतीति गम्यते। अन्यथा पत्न्यनेकत्वे समकालं सन्नहनपक्षाऽनुपपत्तेः। मन्त्रलिङ्गविरोधश्च। आशा-साना…सन्नह्ये' इति मन्त्रवाक्यार्थः। प्रैषवचनवदत्राऽपि सर्वत्र पत्नीविषयमेकवचनमविव-क्षितम्। अत एव द्विबहुपत्नीकत्वे ज्येष्ठानुक्रमेणाऽऽगमनोपवेशनादीनि। उपवेशनदेशश्च ज्येष्ठापृष्ठभागे कनीयस्या इति। अन्यथा दक्षिणपश्चिमदेशाऽनुपपत्तेः। सन्नहनञ्च पत्नी-क्रमाद्युगपदेव वा पत्नीकर्तृकत्वात्। अत्र सुकृताय कमित्यस्याऽनन्तरं युक्तं क्रियाता आशीः कामे युज्यातै' (तै० ब्रा० ३।३।३।४) इत्यस्याऽपि पत्न्या वाचनं ब्राह्मणप्रमाणकम्। तथा च गोपालः—योक्त्रेण सन्नह्य यजुः स एव युक्तं क्रियाता इति वाचयीत ॥१५॥

अथैनां तिरःपवित्रमप आचामयति—'पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र संसृज' (तै० सं० १।५।१०।२) इति ॥१६॥ अथैनां गार्हपत्ये समिध आधापयति—'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा, वायो व्रतपते, आदित्य व्रतपते, व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां स्वाहा' (तै० सं० १।५।१०।३) इति ॥१७॥ अथ जघनेन गार्हपत्यमुपसीदति—'सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् (तै० सं० १।१।१०।१)। इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा।

अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय (तै० ब्रा० ३।७।५।१०-११)॥ मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्। उताहमस्मि संजया पत्युर्मे श्लोक उत्तमः' (ऋ० १०।१५९।३; आप० मं० १।१६।३)इति ॥१८॥ [ 'अथैनां वाचयति—'ऊनेऽतिरिक्तं धीयातै' (तै० ब्रा० ३।३।३।४) इति च] अथैनां गार्हपत्यमीक्षयति—'अग्ने गृहपत उप मा ह्वयस्व देवानां पत्नीरुप मा ह्वयध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीः' (का० सं० १।१०) इति ॥१९॥

सा०—अथैनां तिरःपवित्रमप आचामयति—'पयस्वती···संसृज' इति। यजमानाऽऽचमनोक्त एव न्यायोऽत्राऽप्यनुसन्धेयः। अनेकपत्नीकत्वे तु युगपत्क्रमेण वाऽऽचमनम् ॥१६॥ अथैनां गार्हपत्ये समिध आधापयति—'अग्ने व्रतपते ··राध्यतां स्वाहा, वायो व्रतपते···आदित्य व्रतपते···व्रतानां व्रतपते ··राध्यतां स्वाहा' इति। अत्राऽऽधापयतीति वचनादस्वाहाकार एव पाठः। नाऽप्युद्देशत्यागः। एवं सर्वत्र आधापयतीत्यादिष्विति केचित्। सस्वाहाकार एव पाठो याज्ञिकप्रसिद्धः। अत एव सूत्रे प्रस्तरप्रहरणे न स्वाहाकरोति (आप० श्रौ० ३।६।७) इत्युक्तम्। अत एव प्रहरणवदाधापनेऽपि स्वाहाकाराऽप्रसक्तिरिति। अनेकपत्नीकत्वे क्रमादेव[1] समिदाधानं, हवनरूपत्वात्, द्रव्यत्यागवाचकवर्तित्वाच्च। यजमानकर्तृको हि द्रव्यत्यागः, पत्न्याः साहित्यपक्षेऽन्वयपक्षस्य जागरूकत्वात्। सहत्वेनाऽनन्वयपक्षेऽपि स्वामित्वं यजमानस्यैवेति निर्णयः ॥१७॥ अथ जघनेन गार्हपत्यमुपसीदति—'सुप्रजस ··उत्तमः' इति। अत्राऽपि 'ऊनेऽतिरिक्तं धीयातै' (तै० ब्रा० ३।३।३।५) इत्यन्तो[3] जपः पूर्ववत् प्रमाणकः। गोपालश्च—ऊनेऽतिरिक्तं यजूरत्र लिङ्गात्पत्नीं पुरस्ताज्ज्वलनेक्षणाच्च ॥१८॥ अथैनां गार्हपत्यमीक्षयति—'अग्ने गृहपत···हिंसीः' इति। अनेकपत्नीकत्वे तु प्राङ्मुखोपवेशनं, गार्हपत्याऽवेक्षणञ्च क्रमात्समकालं वा ॥१९॥

अथैनामाज्यमवेक्षयति—'महीनां पयोऽस्योषधीनां रसोऽदब्धेन त्वा चक्षुषावेक्षे सुप्रजास्त्वाय' (तै० सं० १।१।१०।३) इति ॥२०॥ अथैनद् गार्हपत्येऽधिश्रयति—'तेजोऽसि' (तै० सं० १।१।१०।३) इति ॥२१॥ समिधमुपयत्य प्राङ् हरति—'तेजोऽनुप्रेहि' (तै० सं० १।१।१०।३) इति ॥२२॥ अथैनदाहवनीयेऽधिश्रयति—'अग्निस्ते तेजो मा विनैद्' (तै० सं०

१. इदं सूत्रं न सार्वत्रिकमिति कै० सं० पादटिप्पणम्।
२. '०पत्नीकत्वे ह समि०' इति वृ० कोशे।
३. 'इत्यन्ते' इति वृ० कोशे।

१।१।१०।३) इति ॥२३॥ अत्रैतां समिधं मध्यत आहवनीयस्याभ्यादधाति [स्वाहेति] ॥२४॥ अथैनदग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्धे वेद्यै निधाय यजमानमाज्यमवेक्षयति—'निमील्यावेक्षेत' (तै० ब्रा० ३।३।५।२) इति ब्राह्मणम् ॥२५॥ अथैनद्यथाहृतं प्रतिपर्याहृत्योत्तरार्धे वेद्यै निधायाध्वर्युरवेक्षते—'अग्नेर्जिह्वासि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव' (तै० सं० १।१।१०।३) इति ॥२६॥

भव०—आज्यावेक्षणमेकस्या एव प्राप्तं दृष्टार्थत्वाद् द्वैवे सर्वेषु पक्षेषु सर्वासामुक्तं यद्येवं पक्षान्तरं यद्वा न दृष्टार्थमध्वर्युयजमानयोरीक्षणवचनमदृष्टार्थं दृष्टार्थत्वेऽन्यतरेणैव सिद्धे स्फ्यस्य वर्त्मनि निधाय यजमानमवेक्षयेत्। एवमुत्तरार्धे वेदेः। अत्रापि स्फ्यस्य वर्त्मनि दृष्टत्वात्। अर्धनिमीलितेक्षणेनैव द्वारेणोपपत्तेरिति केचित्। अपरे पूर्वं निमील्य पश्चादवेक्षते। एवमर्थवादोपपत्तिरिति केचित्। अध्वर्युग्रहणमितः प्राक् सम्मार्गादारभ्य अन्यः कर्ता। यदि स एव स्याद्यथा पूर्वेष्वध्वर्युग्रहणं न कृतं तथेहापि न कर्त्तव्यं स्यात् ॥२०-२६॥

सा०—'अथैनामाज्यमवेक्षयति—'महीनां···स्त्वाय' इति। अत्र पत्न्यनेकत्वेऽप्येकामेवेक्षयेदिति केचित्[1]। तदनुपपन्नं, पत्नीसंस्कारत्वात्। आज्यसंस्कारत्वे तु, पत्न्यवेक्षणकृतममेध्यत्वश्रवणमनुपपन्नं स्यात्। उक्तं हि—'अमेध्यं वा एतत्करोति, यत्पत्न्यवेक्षते। [2]गार्हपत्येऽधिश्रयति मेध्यत्वाय (तै० ब्रा० ३।३।४।२) इति। अतः पत्नीसंस्कारत्वात्सर्वाभिरेव[3] कार्यम्। निमील्याऽवेक्षणञ्चाऽत्राऽप्यनुसन्धेयम्, आज्याऽवेक्षणत्वात्। ईक्षणाऽनन्तरं वा निमीलनम्। न चाऽऽग्नीध्रस्याऽपि मन्त्रजप इति भ्रमितव्यम्, वाचयीतेति श्रवणात्। पत्न्यसन्निधाने जपत्यागो वा, यजमानकर्तृको वेति द्वैधेऽभिधानात्। तथाहि—पत्नीनां सन्नहन इति। स ह स्माऽऽह बोधायन एकैकामासां सन्नह्येदेकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति। अत्रो ह स्माऽऽह शालीकिः सकृदेवैनाः सर्वाः सन्नह्येदेकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति। अत्रो ह स्माऽऽहौपमन्यवः सकृदेवैनाः सर्वाः सन्नह्येत्सकृद् गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदिति। एकैकामासां[4] सर्वेण सर्वेण कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः (बौ० श्रौ० २०।१०)। ग्रन्थिकरण इति। अवाचीनपाशम् [5]ऊर्ध्वंनिर्मोचनमित्याचार्ययोः। ऊर्ध्वंपाशमवाचीननिर्मोचनमिति[6] दीर्घवा-

१. 'अथैनामाज्यमवेक्षयेदिति केचित्' इत्येव वृ० कोशे।
२. 'गार्हपत्ये' इति नास्ति वृ० कोशे।
३. '०भिरपि क्रमात् कार्यम्' इति ख-कोशे वृ० कोशे च।
४. '०कामेवासां' इति कौ० सं०।
५. ऊर्ध्वंनिम्लोचन०' इति वृ० कोशे।
६. '०निम्रोचन०' इति वृ० कोशे।

त्स्यः। एवमिव हि प्रजाः प्रजायन्त इति (बौ० श्रौ० २०।१०)। पत्न्यामविद्यमानाया-मिति। स ह स्माऽऽह बोधायनो यजमानाऽऽयतन आसीनो यजमान एवैतान्मन्त्रा-न्निगदेदिति। अत्रो ह स्माऽऽह शालीकिः पत्नीसंयोजकाः खल्वेते मन्त्रा दृष्टा भवन्ति। तस्यामविद्यमानायां नैवैनानाद्रियेतेति (बौ० श्रौ० २०।१०)।

पत्न्यामविद्यमानायां यजमानेनैव स्वायतने तन्मन्त्रजप- कार्य इत्येकः पक्षः। एतान् मन्त्रान्नाद्रियेत, तेषां लोप एवेत्यपरः पक्षः।

अत्रेदं विचार्यते, अविद्यमानत्वमनालम्भुकत्वादिना पत्न्यायतनासंनिहितत्वम्, आहोस्वित् प्रवासादपि मरणेन[1] वा, अनुद्वाहेन वेति। अविद्यमानायामिति वचनाद्, अभावस्य सर्वत्राऽवि-शेषाद् अपत्नीकस्याऽग्निहोत्रसम्बधः स्याद्, आहोस्विद् अपत्नीकस्याऽग्निहोत्रसम्बन्धस्याऽभावाद् अविद्यमानायामित्यसन्निधानमात्रपरमिति। तत्राऽपत्नीकस्याऽग्निहोत्रसम्बन्धस्तावत् कार्य इव प्रतिभाति, तस्याः कर्माङ्गमात्रत्वात्। न ह्येकतराङ्गवैकल्ये प्रधानलोपः। विधिश्च यजमानमेवा-धिकरोति—'ज्योतिष्टोमेन स्वर्गकामो यजेत' (तु०—आप० श्रौ० १०।२।१) 'अग्निहोत्रं जुहुयात्स्वर्गकामः' (मै० श्रा० ६।३७) 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' (तु०—आप० श्रौ० ३।१४.८) इत्यादिकः, तामपरुध्य यजेतेति च। न हि तस्या यजमानसाम्येऽपरुध्य यागो भवति, तन्मन्त्रलोपो वा। यजमानेनैव जप इति कल्पान्तरकारैरप्ययमेव पक्षो ज्ञापितः। भारद्वाजेन तावत्—अथ यद्यपत्नीकः स्यादुभाभ्यां तस्य संस्कारः (भार० प० १८३)। अत्राऽपत्नीकस्याऽप्यौपासनाग्निहोत्राभ्यां संस्कारं ब्रुवता, अर्धाधानिन उभाभ्याम्, अनाहिताग्ने-रौपासनेनैव, सर्वाधानिनोऽग्निहोत्रेणैवेति अपत्नीकस्याऽप्यौपासनाऽग्निहोत्राधिकारो ज्ञापितः। तलवकारकल्पे जैमिनिश्चाह—आहिताग्नेश्चेत्पूर्वं जाया म्रियेत, तां निर्मन्थ्येन दहेत् सान्तपनेन वा' (जै० गृ० २।५।१) इति। आश्वलायनोऽपि—आहार्येणाऽनाहिताग्निं पत्नीञ्च' (आश्व० श्रौ० ६।१०।६) इति अनाहिताग्निसाम्यं पत्न्या ब्रुवता अग्न्याधाने सन्नि-हिताया अपि सहत्वेन साहित्येन [2]सान्वयेन यजमानसाम्यमिति द्योतितम्। बह्वृचब्राह्मणमपि—'तस्माद पत्नीकोऽप्यग्निहोत्रमाहरेत्' (ऐ० ब्रा० ७।१०) इति। शिष्टाचारश्च—भगवता दाशरथिना पत्न्याः प्रवासादसन्निधानेऽपि अश्वमेधः कृतः, भीष्मेण त्वनुद्वाहे, विभाण्डकेन तु मृतायामिति। तस्मादपत्नीकोऽग्निहोत्रपक्षो न्याय्यः, शिष्टाद्दृतश्चेति।

नैतत्सारम्। अविद्यमानायामित्यस्याऽनालम्भुकत्वादिना निमित्तेन पत्न्यायतनाऽसन्नि-धानेऽपि तद्ग्रामसीमाऽनतिलङ्घनेन सन्निधानार्थत्वात्। तथात्वे वाऽग्नीनां लौकिकत्वेन पुनरा-धानश्रवणात। उभौ त्वेव निष्क्रामतो ग्रामान्ते ग्रामसीमान्ते वाऽग्निहोत्रमेव लुप्येताऽविकृतमग्न्या-धेयं कुर्वीतेति। यजमानप्रवासेऽपि पत्नीसन्निधानेऽग्नीनां लौकिकत्वाऽभावश्च श्रूयते—

प्रोषिते यजमाने तु पत्न्यपि प्रवसेद्यदि।
हुत्वा वास्तोष्पतीयं स्यात्प्रवसेदग्निभिः सह॥ इति।

---

१. 'मरणे वा' इति मद्र० सं०। २. 'वान्वयेन' इति वृ० कोशे।

न युक्तं भगवद्दाशरथिभीष्माद्यनुष्ठानश्रवणादस्मादृशैरपि तथाऽनुष्ठातुम्, तेषां तपःप्रभावविशेषात्प्रत्यवायाऽनुपपत्तेः। युगान्तरव्यवस्थया वा तथाऽनुष्ठानादिति। श्रूयते च—क्षौमे वसानौ जायापती अग्निमादधीयाताम् (आप० श्रौ० ५।४।१०) इति, 'नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः'[1] इति। 'आहरेच्च ततो दारामग्नींश्चैवाविलम्ब्रयन्' इति च। सूत्रञ्च—'पत्नीवदस्याऽग्निहोत्रं भवति' (आप० श्रौ० ६।५।१) इति। न च वाच्यं, अपरुध्य यागश्रवणात्पत्नीमन्त्राणाञ्च लोपो वा यजमानेन जपो वेति दर्शनात् पत्न्या अतन्त्रत्वमिति। यजमानप्रवासे याजमानमन्त्रेष्वपि समानत्वात् पुत्रान्तेवासिप्रतिनिधियोजनस्योक्तत्वाच्चेत्यलमतिविस्तरेण। प्रकृतमनुसरामः ॥२०॥ अथैनद् गार्हपत्येऽधिश्रयति—'तेजोऽसि' इति। एनत् पत्न्यवेक्षितमाज्यम् ॥२१॥ समिधमुपयत्य प्राङ् हरति—'तेजोऽनु प्रेहि' इति। समिधमुपयत्य—समिधमाज्यस्थाल्या अधो निधाय ॥२२॥ अथैनदाहवनीयेऽधिश्रयति—'अग्निस्ते···विनैत्' इति। एनदाहृतमाज्यम्। तथा च द्वैधे—'अथैनामाज्यमवेक्षयतीति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायनः पत्न्या तदवेक्षितमुपयच्छेत्[2]—'तेजोऽसि' इति। अथैनच्छकलेनोपयत्य हरेत्—'तेजोऽनु प्रेहि' इति। अथैनदाहवनीयेऽधिश्रयेत्[3]—'अग्निस्ते···विनैत्' इति। पूर्वकल्पसमानार्थो द्वैधः ॥२३॥ अत्रैतां समिधं मध्यत आहवनीयस्याऽभ्यादधाति। अत्र समिदाधानममन्त्रकम्। कल्पसारे तु स्वाहाकारमात्रमुक्तम्—'स्वाहाकृतिः स्यात्समिधस्तु मन्त्र' इति ॥२४॥ अथैनदग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्धे वेद्यै निधाय यजमानमाज्यमवेक्षयति। 'निमील्याऽवेक्षेत' इति ब्राह्मणम्। एनद् आहवनीयाऽधिश्रितमाज्यम्। अग्रेण प्रोक्षणीः, प्रोक्षण्यग्रेण पर्याहृत्य हरणं स्फ्यस्य वर्त्मन्यासादनाय। एतदन्तं आग्नीध्रकर्तृकं, प्रैषार्थस्यैतावति समाप्तेः। अत एव निधायेति ल्यब्वचनस्य आस्त इति पूरणम्। अन्यथाऽवेक्षयितृत्वाऽपेक्षया समानकर्तृकत्वप्रसङ्गात्। अत एवाऽवेक्षयतीति निमित्तकर्ताऽध्वर्युः, साक्षात्कर्ता तु यजमानः। एतदर्थमेव ब्राह्मणोदाहरणम्। अत एवाऽध्वर्युयजमानयोरुभयोरपि निमील्याऽऽवेक्षणं सिध्यति। अन्यथा याजमानप्रकरण एव ब्रूयात्। अध्वर्योर्निमित्तकर्तृतया 'आज्यमसि' इत्यादि मन्त्रवाचनमपि गम्यते ॥२५॥ अथैनद्यथाहृतं प्रतिपर्याहृत्योत्तरार्धे वेद्यै निधायाऽध्वर्युरवेक्षते—'अग्नेर्जिह्वासि···भव' इति। यथाहृतमित्यनेन वेद्युत्तरार्धे सादनेऽपि स्फ्यस्य वर्त्मनीति गम्यते। निमील्याऽवेक्षणञ्च तस्याऽभिघाररूपत्वात्। तथा च कर्मान्ते—किमभिघारितं नु खल्वाज्यं भवतीति। सत्याऽभिघारितमित्येव ब्रूयात्। विज्ञायते च[4] सत्येन त्वाऽभिघारयामि तस्य ते भक्षीयेति (बौ० श्रौ० २४।२७।६-८) ॥२६॥

अथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति—'शुक्रमसि ज्योतिरसि तेजोऽसि' (तै० सं० १।१।१०।३) इति ॥२७॥ अथ प्रोक्षणी-

---

१. द्र०—गोपालकारिका। २. '०मुपयच्छीत' इति कौ० सं०।
३. '०धिश्रयति' इति वृ० कोशे। ४. नास्ति कौ० सं०।

रुत्पुनाति—'देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः' (तै० सं० १।१।१०।३) इति पच्छः ॥२८॥ प्रोक्षणीषु पवित्रे अवधायादत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रतिष्ठाप्य तस्यां गृह्णीते—'शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि' (तै० सं० १।१।१०।३) इत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा संमृश्योत्प्रयच्छति ॥२९॥ अथोपभृति गृह्णीते—'ज्योतिस्त्वा ज्योतिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि' (तै० सं० १।१।१०।३) इत्येतेन यजुषाष्टगृहीतं गृहीत्वा भूयसो ग्रहान् गृह्णानः कनीय आज्यं गृह्णीते ॥३०॥ तथैव संमृश्योत्प्रयच्छति ॥३१॥ अथ ध्रुवायां गृह्णीते —'अर्चिस्त्वार्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि' (तै० सं० १।१।१०।३) इत्येतेन यजुषा चतुर्गृहीतं गृहीत्वाभिपूर्य तथैव संमृश्योत्प्रयच्छति ॥३२॥

भव०—पुनराहारमनूद्यच्छन्नेव पुनराहृत्य उद्यच्छतीति त्रिभिर्मन्त्रैरेकैकेनोत्पुनाति, उत्प्रदानमन्यस्य हस्ते। जुह्वां पूर्णान् स्रुवान् उपभृत्यूनान् एतद् भूयस्त्वं कनीयस्त्वं चेति केचित्। तदनुपपन्नम्। कनीय आज्यमित्याह इतरथा कनीयसः स्रुवानित्यवक्ष्यत्। तस्माच्चतुर्गृहीताद् घनमष्टगृहीतं द्रव्यमभिपूरणं विभावनार्थम् ॥२७-३२॥

॥ इति दशमोऽध्यायः समाप्तः ॥

सा०—अथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति—'शुक्रमसि ज्योतिरसि तेजोऽसि' इति। एनदवेक्षितमाज्यं, पुनराहारम् 'पुनराहृत्याऽऽहृत्य आहरणे पौन:पुन्यवचनात् तदनुषङ्गिप्रेरणस्याऽपि तादृक्त्वमवगम्यते। ततश्च प्रेरणाऽऽहरणयोर्विपर्ययः। एवं त्रिरुत्पुनाति, उत्पवनं पवित्रसाध्यस्यैवंविधस्य कर्मणो नामधेयम्। उत्पवनत्रयेऽनुद्यच्छता क्रियमाणेऽप्याहाराऽऽवृत्तित्रयमपेक्ष्य शुक्रमसीत्यादि मन्त्रविनियोगः। एकमन्त्रत्वपक्षे तन्मन्त्रोच्चारणसमकालमेव त्रिरुत्पवनमिति। २७॥ अथ प्रोक्षणीरुत्पुनाति 'देवो वः···रश्मिभिः' इति पच्छः। उदगग्राभ्यामेव पवित्राभ्यामिति। द्वैधे विशेषः—अथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वाऽवेक्षितोत्पुनुयादाज्यवतीभ्यां' प्रोक्षणीरिति। आज्यस्याऽवेक्षण इति।

१. 'पु राहृत्य'हृत्याहरणे' इति वृ० कोशे।
२. '०वेक्षितो०' '०वेक्षेतो०' '०वेक्षतो०' इति पाठान्तराणि कै० सं० प्रदर्शितानि। तत्र '०वेक्षित्वो०' इति सायण-पाठः स्वीकृतः। '०वेक्षितो०' इत्येव सायण-पाठः स्यादिति 'अवेक्षिता' प्रतीक-व्याख्यानाद् आक्षिप्यते। मूले '०वेक्षित्वो०' इति तु लिपिकरप्रमादः।

सूत्रं बोधायनस्य । सर्वैरेवाऽवेक्षितमाज्यमुत्पुनुयादिति शालीकिः (बौ० श्रौ० २०।१०) इति । अवेक्षिता[1] अवेक्षणकर्ताऽध्वर्युः । आज्यवतीभ्याम् आज्यलिप्ताभ्यां पवित्राभ्याम् । सर्वैरेव मन्त्रैः प्रोक्षण्युत्पवनार्थैरथा[2]ऽऽज्यमुत्पुनुयादित्यर्थः । अस्मिन्पक्षे प्रोक्षण्युत्पवनममन्त्रकम् ।।२८।। प्रोक्षणीषु पवित्रे अवधायाऽऽदत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रतिष्ठाप्य तस्यां गृह्णीते—'शुक्रन्त्वा···गृह्णामि' इत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा सम्मृश्योत्प्रयच्छति । अथोपभृति गृह्णीते—'ज्योतिस्त्वा···गृह्णामि' इत्येतेन यजुषाऽष्टगृहीतं गृहीत्वा भूयसो ग्रहान्गृह्णानः कनीय आज्यं गृह्णीते । तथैव सम्मृश्योत्प्रयच्छति । अथ ध्रुवायां गृह्णीते—'अर्चिस्त्वा···गृह्णामि' इत्येतेन यजुषा चतुर्गृहीतं गृहीत्वाऽभिपूर्य तथैव सम्मृश्योत्प्रयच्छति । उपभृत्यष्टकृत्वो ग्रहणेन कनीय इति वचनं जुह्वाज्यसाम्याय, जुह्वाज्यादिषु न्यूनत्वाय वा । जुह्वाधारणमधिकम् । औपभृतं तु प्रयाजाऽनूयाजार्थमेवेति । सम्मृश्योत्प्रयच्छति, सम्मर्शनं दक्षिणहस्तेनाऽदृष्टार्थम्, उत्प्रयच्छति उद्धृत्य प्रयच्छति । अन्यस्य हस्ते इत्यभियुक्ताः । केचित्तु प्रस्तरयजमानयोः साम्यविवक्षया प्रस्तराऽऽसादनीयानामासां साज्यपूर्णानां स्रुचां यजमानहस्ते प्रदानमिच्छन्ति । एवञ्च जुहूमात्रस्य प्रस्तराऽऽसादनपक्षो न स्यात् । एकैव जुहूर्यजमानहस्ते प्रदातव्या स्यात्, सूत्रे च नोत्कर आज्यादि सादयति (द्र० आप० श्रौ० २।७।१०) इति निषेधात् । उत्तरदिगासादनमेव न्याय्यम् । आचार्यश्चाऽविशेषेणोः प्रयच्छतीत्याह सम्मार्जनवत् । अभियुक्ताश्चान्यहस्त इत्याहुः । न चाऽन्यशब्दो यजमानमाचष्टे । तथात्वे वा कथं स्रुग्धारणे व्यापृतो यजमानः प्रस्तरं बिभृयात् ? तथात्वे वा कथं वा[3] यजमानायेति पक्षः प्रसक्तिमासादयेत् ? तस्माद्यजमानादन्यस्यैव हस्ते प्रयच्छतीति युक्तम् । द्वैधे विशेषः—आज्यानां[4] ग्रहण इति । स ह स्माऽऽह बोधायनोऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात् पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानो[5]ऽनुमन्त्रयेतेति । अत्रो ह स्माह शालीकिः । अध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । न याजमानैर्यजमानोऽनुमन्त्रयेतेति । अत्रो ह स्माऽऽहौपमन्यवो यथाविधि[6] पौरोडाशिका मन्त्रा नाऽभिनिवर्तन्त एवमेवाऽपि याजमाना मन्त्रा नाऽभिनिवर्तन्त[7] इति (बौ० श्रौ० २०।१०) । पौरोडाशिकाः शुक्रन्त्वा इत्यादयः । याजमानाः पञ्चानान्त्वेत्यादयः । एतैरुभयैरप्यध्वर्युराज्यं गृह्णीयादित्येकः पक्षः । अमुमेव पक्षमभिसन्धाय कर्मान्ते पौरोडाशिकप्रकरण एव पञ्चानान्त्वा इत्यादयो व्याख्याताः । तथा हि—पञ्चानान्त्वा··· मीत्यनुदिशं वाताः । विष्वग्वात एवैषां पञ्चमो भवति । पञ्चानान्त्वर्तूनां···मीति हेमन्तशिशिरावत्र समासङ्गच्छतः । पञ्चानान्त्वा दिशां···मीति इयमेवाऽऽसामूर्ध्वा

१. 'अवेक्षितावेक्षितकर्ता' इति वृ० कोशे ।
२. '०पवनार्थैरप्याज्य०' इति वृ० कोशे ।
३. नास्ति वृ० कोशे ।
४. 'आज्यग्रहाणां ग्रहण' इति कै० सं० ।
५. '०ऽनुमन्त्रयीयेति' वृ० कोशे ।
६. 'यथापि' इति कै० सं० ।
७. '०भिनिवर्तेरन्' कै० सं० । '०तिनिवर्तन्ते' इति वृ० कोशे ।

दिक् पञ्चमी भवति। पञ्चानान्त्वा पञ्चजनानां…मीति देवा मनुष्या असुरा राक्षसा गन्धर्वा एवैषां पञ्चमा भवन्ति। चरोस्त्वा पञ्चबिलस्य…मीत्ययमेवैष आकाशश्चरुः पञ्चबिलो भवति। दिशोऽस्य[1] पञ्च बिलानि भवन्ति वायुर्मेक्षणमिति। [2]अथाऽप्युदाहरन्ति—संवत्सर एवाऽपि चरुः पञ्चबिलो भवत्यृतवोऽस्य बिलानि भवन्ति वायुर्मेक्षणमिति (बौ० श्रौ० २४।२७।१६-१८)। अत्राज्यग्रहणे पञ्चावत्तिनामपि चतुर्ग्रहणमेव। कामनाविशेषात्तु पञ्चग्रहणं सर्वेषामविशिष्टम्। तथा च सूत्रम् पशुकामस्य वा पञ्चगृहीतं ध्रुवायां यथाप्रकृति इतरयोः, दशगृहीतमुपभृति पञ्चगृहीतमितरयोरित्येके (आप० श्रौ० २।७।५,६) इति। तद्भाष्यम्—पशुकामस्य वा अकामस्य वा (धूर्त० भा०) इति। अत्र श्रीरामस्वामी—पशुकामस्य वा अकामस्य वेति। अस्यार्थः। पशुकामस्य पञ्चगृहीतमिति एतावता काम्यपक्षे सिद्धे विकल्पनिर्देशात्कामनारहितस्याऽपि पञ्चगृहीतं लभ्यते चतुरवत्तिनोऽपि। यथा प्रकृतीतरयोरित्यस्याऽभिप्रायः पञ्चगृहीतमितरयोरित्यादि पञ्चावत्तिनां वक्ष्यमाणत्वात्। तदत्राऽपि प्रसज्यत इति शङ्का मा भूत् (राम० वृ०) इति। तदेतदन्यैः सूत्रव्याख्यातृभिः प्रत्याख्यातम्—पशुकामस्य वेत्यादि यथाप्रकृति चतुरष्टकृत्वश्चेत्यर्थः। वाशब्दः पूर्वविधिविकल्पार्थः, पक्षव्यावृत्त्यर्थो वा। दशगृहीतमित्यादि, नाऽयं कल्पः काम्येन पूर्वेण विकल्प्यते, किन्तु पूर्वेतरेण नित्येन। स चाऽयं पञ्चावत्तिविषय इति केचित्। तदयुक्तम्, द्विः पञ्चावत्तिन इत्यादिवद्विशेषाऽवचनात्। आज्यभागप्रभृत्यवदानविधिष्वेतद्वचनाच्च तस्मादविशेषात्सर्वविषय एवाऽयं विकल्पो युक्तः (रुद्र०)। एवं सति श्रीरामस्वाम्यनुसारेण कल्पसारे यदुक्तं, तदपि वार्त्तिककारोक्तन्यायेन प्रत्याख्यातं वेदितव्यम्। तथाहि—

> निर्वापमारभ्य च पञ्चकृत्वः पञ्चावदानस्य भवन्ति पञ्च।
> निर्वपणाऽऽवापघृतग्रहाऽवदानानि[3] सेडानि वदन्ति तानि॥

अत्र घृतग्रहस्य पृथक् परिगणनादेव निर्वापादिषु नाऽन्तर्भावः सिद्धः। तथा च 'पञ्चावत्तस्य प्रक्रमणे' (बौ० श्रौ० २०।१६) इत्युपक्रम्य निर्वापाऽवदानप्रदानचातुष्प्राश्यानां चतुर्णामिव द्वेधोक्तानां पञ्चावदानधर्मसंयुक्तानामुपलम्भाद् घृतग्रहणस्याऽपि तदतिरिक्तस्य तद्धर्मवत्तया गणने किं मूलमिति चिन्त्यम् ॥२९-३२॥

अत्र प्रयोगक्रमः—

आग्नीध्रो दक्षिणहस्तेन स्रुवं जुहूपभृतौ, सव्येन ध्रुवां प्राशित्रहरणं वेदिपरिवासनान्यादाय जघनेन गार्हपत्यं प्राङ्मुख उपविश्य गार्हपत्ये प्रतितपति—'प्रत्युष्टं…मि' इति। सर्वेषां सम्भूय सकृन्निष्टपनम्। गार्हपत्यस्योत्तरतः प्राङ्मुख उपविश्य वेदाग्रेण पाणिमावेष्ट्य तदग्रेण स्रुवबिलाभ्यन्तरं प्रागपवर्गं त्रिः संमृज्य, प्रत्यग्बिलं न्यग्गृहीत्वा त्रिरेव बाह्यतः प्रत्यग-

१. 'ऽस्य' नास्ति वृ० कोशे। २. 'अत्रा०' इति कै० सं०।
३. 'निर्वापमादायघृतग्रहा' इति वृ० कोशे।

पवर्गं, प्रत्यग्दण्डं गृहीत्वाऽधस्तान्मूलैः प्रत्यगपवर्गं त्रिः सम्मृज्य, दण्डोपरिभागमपि प्रागपवर्गं मूलैरेव त्रिः सम्मृज्य, दक्षिणहस्तेनाऽद्भिः प्रोक्ष्य, प्रताप्योत्तरतः स्थितपरिकर्मिहस्ते प्रयच्छति। अयमेव क्रमो जुहूपभृद्ध्रुवाप्राशित्रहरणानां सम्मार्जनेऽपि। क्रमान्मन्त्राः—'गोष्टं...वाजिनं त्वा...साहम्' इति स्रुवस्य[1]। 'वाचं...वाजिनीं...साहीं' इति जुह्वाः। 'चक्षुः...वाजिनीं ...साहीं' इत्युपभृतः। 'प्रजां...वाजिनीं...साहीं' इति[2] ध्रुवायाः। 'रूपं वर्णं...वाजि त्वा...साहि' इति[2] प्राशित्रस्य। सम्मार्जनतृणान्यद्भिः प्रोक्ष्य[3] विन्नस्याऽध्वर्युराग्नीध्रो वा गार्हपत्येऽन्वग्रं प्रहरति—'दिवः शिल्पं ...मसि स्वाहा' इति। 'प्रजापतय इदं...' इति[4] यजमान आह। न्यासपक्षेऽपि—अग्रेणोत्करं दर्भान्संस्तीर्य तेषु प्रागग्राण्युत्तानानि यथा सम्मार्गं स्रुवादीनि संसादयति।

आग्नीध्रः पत्नीं वेद्युत्करावन्तरेण प्रपाद्य गार्हपत्यस्य दक्षिणपश्चिमदेशे ऊर्ध्वज्ञुमुदङ्मुखीमासीनां पत्नीमन्यतरतः पाशेन योक्त्रेण प्रदक्षिणमभ्यन्तरं वाससः सन्नह्यति। उत्तरेण नाभिं ग्रन्थिं निष्टर्क्यं कृत्वा प्रव्यूह्य दक्षिणेन नाभिमवाचीनपाशमूर्ध्वनिर्मोचनं बध्वा वाचयति—'आशासानासौ...यकं, युक्तं क्रियाता आशोः कामे युज्यातै' इति। पत्न्यास्तिरःपवित्रमाचामनं समिदाधानञ्च यजमानवद् गार्हपत्ये। उद्देशत्यागं यजमानः कुर्यात्। पत्न्याः प्रागग्न्याधेयान्मन्त्राणामध्ययनम्। गार्हपत्यस्य पश्चात्पत्नी तृणं निरस्याऽप उपस्पृश्य मन्त्रेणोपसीदति—'सुप्रजसस्त्वा...इन्द्राणी ...ऊनेतिरिक्तं धीयातै' इति। पत्नीं गार्हपत्यमीक्षयति—'अग्ने गृहपत...हिंसीः' इति। आग्नीध्र आज्यस्थालीमुद्धृत्याऽऽज्यमवेक्षयति—'महीनां...सुप्रजास्त्वाय' इति। पत्न्यवेक्षितमाज्यं गार्हपत्येऽधिश्रयति—'तेजोऽसि' इति। समिधमधस्तादुपयत्य प्राङ् हरति—'तेजोऽनु प्रेहि' इति। आहवनीयेऽधिश्रयति—'अग्निस्ते तेजो मा विनैत्' इति। स्वाहाकारेण समिधमाहवनीयेऽभ्यादधाति। आज्यमग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्धे स्फ्यस्य लेखायां निधाय यजमानमाज्यमवेक्षयति—'आज्यमसि ... भक्षीय' इति। अथैनद्यथाहृतं प्रतिपर्याहृत्योत्तरार्धे वेद्यै स्फ्यस्य रेखायां[5] निधायाऽध्वर्युरवेक्षते—'अग्नेर्जिह्वा...भव' इति।

अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति—'शुक्रमसि ज्योतिरसि तेजोऽसि' इति। आज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीस्त्रिरुत्पुनाति—'देवो वः...रश्मिभिः' इति पच्छः। प्रोक्षणीषु पवित्रेऽवधायाऽऽदत्ते, दक्षिणेन स्रुवं सव्येन जुहूम्। अन्तर्वेद्युदगग्रे वेदे प्रतिष्ठाप्य तस्यामाज्यं गृह्णाति। ब्रह्मा तदारभ्याऽऽसादनाद्वाचंयमो भवति। 'शुक्रं त्वा' इति चतुर्जुह्वां गृह्णाति। प्रतिग्रहणं मन्त्रावृत्तिः। यजमानो गृहीतं गृहीतमनुमन्त्रयते—'पञ्चानान्त्वा...मि' इति प्रथमं, 'पञ्चानान्त्वर्तूनां...मि' इति द्वितीयं, 'पञ्चानां त्वा दिशा...मि' इति तृतीयं, 'पञ्चानान्त्वा पञ्चजनानां...मि' इति चतुर्थम्।

---

१. 'इति स्रुवस्य' नास्ति वृ० कोशे।
२. नास्ति वृ० कोशे।
३. 'प्रोक्ष्याध्वर्यु०' इति वृ० कोशे।
४. 'इदं न ममेति' वृ० कोशे।
५. 'लेखायां' इति वृ० कोशे।

अध्वर्युर्जुहूं सम्मृश्योत्तरतः परिकर्मिहस्ते प्रयच्छति, सोऽपि पूर्वाऽऽसादितस्थाने सादयति। अथोपभृतं वेदे प्रतिष्ठाप्य तस्यां 'ज्योतिस्त्वा' इति प्रतिग्रहणमावृत्यात्पशोऽष्टकृत्वो गृह्णाति। गृहीतं गृहीतं यजमानोऽनुमन्त्रयते—'चरोस्त्वा ··मि' इति१, 'ब्रह्मणस्त्वा तेजसे ···२, क्षत्रस्य त्वौजसे···३, विशे त्वा···४, सुवीर्याय त्वा···५, सुप्रजास्त्वाय ··६, रायस्पोषाय ··७, ब्रह्मवर्चसाय···८। अध्वर्युस्तथैव सम्मृश्य प्रयच्छति। सोऽप्युत्तरेण जुहूमासादयति। ध्रुवां वेदे प्रतिष्ठाप्य 'अर्चिस्त्वा' इति प्रतिग्रहणमावृत्त्या चतुर्गृह्णाति। गृहीतं गृहीतं यजमानोऽनुमन्त्रयते—'भूरस्माकम् १, हविर्देवानाम् २, आशिषो यजमानस्य ३, देवानां त्वा देवताभ्यो गृह्णामि' ४। अध्वर्युः पञ्चम तूष्णीमाज्यस्थाल्या ध्रुवामभिपूरयति, तं यष्टाऽनुमन्त्रयते—कामाय त्वा गृह्णामीति। तथैव सम्मृश्योत्प्रयच्छति। तां परिकर्म्युत्तरेणोपभृतं सादयति।

॥ इति प्रथमे प्रश्ने दशमोऽध्यायः ॥

॥ इति दशमोऽध्यायः समाप्तः ॥

—:o:—

# एकादशोऽध्यायः

अथैतामाज्यस्थालीं सस्रुवां जघनेन वेद्यै निधाय प्रोक्षणीरुन्महयन्नुपोत्तिष्ठति—'आपो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये' (तै० सं० १।१।५।१) इति ॥१॥ अद्भिरेवापः प्रोक्षति—'प्रोक्षिताः स्थ प्रोक्षिताः स्थ' (तै० सं० १।१।५।१) इति त्रिः ॥२॥ अथेध्मं विस्रस्य प्रोक्षति—'कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा' (तै० सं० १।१।११।१) इति ॥३॥ वेदिं प्रोक्षति—वेदिरसि वर्हिषे त्वा स्वाहा' (तै० सं० १।१।११।१) इति ॥४॥ बर्हिः प्रोक्षति—'बर्हिरसि स्रुग्भ्यस्त्वा स्वाहा' (तै० सं० १।१।११।१) इति ॥५॥ आहरन्त्येतद्बर्हिरन्तरेण प्रणीताश्चाहवनीयं च ॥६॥ तदन्तर्वेदि पुरोग्रन्थ्यासाद्य प्रोक्षति—'दिवे त्वा' (तै० सं० १।१।११।१) इत्यग्राणि 'अन्तरिक्षाय त्वा' (तै० सं० १।१।११।१) इति मध्यानि 'पृथिव्यै त्वा' (तै० सं० १।१।११।१) इति मूलानि ॥७॥

भव०—एतामिति प्रकृतार्थं कदाचित् कार्यार्थमन्या स्यादिति ॥१॥ इध्मविस्रंसनं समिधामसम्बन्धार्थम् ॥३॥ आहरणमग्रेणेध्मम्। प्रणीताहवनीययोर्मध्येन तिष्ठन्नेवाग्रमध्यमूलानि। तिष्ठन् प्रह्व इत्यादिपक्षान्तरत्वाद्विकल्पः ॥६-७॥

सा०—अथैतामाज्यस्थालीं सस्रुवां जघनेन वेद्यै निधाय प्रोक्षणीरुन्महयन्नुपोत्तिष्ठति—'आपो देवीरग्रेपुवो···वृत्रतूर्ये' इति। एतामिति प्रकृतामाज्यस्थालीम्। वेद्या जघनेन विशये, तदभावेऽग्रेण गार्हपत्यमित्यर्थः। उन्महयन्निति। व्याख्यातम् ॥१॥ अद्भिरेवापः प्रोक्षति—'प्रोक्षिताः स्थ प्रोक्षिताः स्थः' इति त्रिः। व्याख्यातम् ॥२॥ अथेध्मं विस्रस्य प्रोक्षति—'कृष्णोऽस्या···स्वाहा' इति। इध्मविस्रंसनं समिधामसम्बन्धार्थं तथा सति सर्वाः समिधः प्रोक्षिताः स्युः इति। ल्यब्वचनादध्वर्युरेव विस्रंसनकर्तेति गम्यते ॥३॥ वेदिं प्रोक्षति—'वेदिरसि···स्वाहा' इति। प्रतीचीमारम्य प्रागपवर्गं यथाऽऽहवनीये विप्रुषो न पतेयुरिति ॥४॥ बर्हिः प्रोक्षति—'बर्हिरसि···स्वाहा' इति। मूलादारभ्याऽऽग्रात्। इंचे विशेषः—इध्माबर्हिषः प्रोक्षण इति। त्रिस्त्रिरेकैकं प्रोक्षेदिति बोधायनः। सकृत्सकृदिति शालीकिः (बौ० श्रौ० २०।१०) ॥५॥ आहरन्त्येतद्बर्हिरन्तरेण प्रणीताश्चाऽऽहवनीयञ्च। बहुवचनेनाऽऽहरणस्याऽन्यकर्तृकत्वमाह। इध्मादुत्तरं बर्हिरासादनपक्षे तदग्रेणाऽऽह-

रणमित्यभियुक्ताः ॥६॥ तदन्तर्वेदि पुरोग्रन्थ्यासाद्य प्रोक्षति—'दिवे त्वा' इत्यग्राणि, 'अन्तरिक्षाय त्वा' इति मध्यानि, 'पृथिव्यै त्वा' इति मूलानि। पुरोग्रन्थीति वचनाद्दूर्वाग्रमासादनं गम्यते। द्वैधे विशेषः—बर्हिषः प्रोक्षण इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बौधायनस्तिष्ठन्—'दिवे त्वा' इत्यग्राणि प्रोक्षेत्, प्रह्वः 'अन्तरिक्षाय त्वा' इति मध्यानि, उपविश्य 'पृथिव्यै त्वा' इति मूलानि (बौ० श्रौ० २०।११)। औत्सर्गिकमुपविश्य प्रोक्षणं शालीकेर्मतम् ॥७॥

सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्यातिशिष्टाः प्रोक्षणीर्निनयति दक्षिणायै श्रोणेरोत्तरायै श्रोणेः—'स्वधा पितृभ्य ऊर्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छत' (तै० सं० १।१।११।१) इति उदूह्य प्रोक्षणीधानं बर्हिर्विस्रस्य पुरस्तात् प्रस्तरं गृह्णाति—'विष्णोः स्तूपोऽसि' (तै० सं० १।१।११।१) इति ॥८॥ तस्मिन् पवित्रे अपिसृजति—'यजमाने प्राणापानौ दधामि' (तु०-तै० ब्रा० ३।३।६।६) इति वा तूष्णीं वा ॥९॥ तं यजमानाय वा ब्रह्मणे वा प्रयच्छति ॥१०॥

भव०—सह स्रुचेति स्रुक्पाणिभ्याम्। प्रत्यञ्चमिति प्रत्यङ्मुख्या स्रुचा क्रियत इति। अनादेशे नित्यत्वात् प्रोक्षणीनिनयने प्राचीनावीतं केचिदिच्छन्ति पितृसम्बद्धत्वात्। प्राचीनावीती पित्र्याणि (बौ० श्रौ० २।२।२६) इति वचनात्। एतदेव स्वाध्यायब्राह्मणे यज्ञोपवीतिनः स्वाध्याययजनयाजनवचनात् सर्वत्र सिद्धे दर्शपूर्णमासयोरुपव्ययत इति पुनर्वचनम्, तेनोत्सर्गेण यत्र प्राप्तिस्तदर्थं क्वचिच्चाप्राप्तिः पितृसम्बन्धे तस्मादत्र विशेषेण विहितत्वादवचनाच्च न प्राचीनावीतम्। तथाग्निहोत्रे दक्षिणत प्राचीनावीती (बौ० श्रौ० ३।६।१५)इति सिद्धवचनात्तथा सति दर्शपूर्णमासतद्विकारेभ्यः सोऽन्यत्र वचनादृते न प्राचीनावीतीति। द्वैधे पुनर्विधिनियमस्यासनं नियमार्थं वा न प्राचीनावीतविधानार्थम्, यथोक्तश्रुतिविरोधात् ॥८॥ पवित्रे अपि संसृजेत्। आच्छिद्रोऽयं प्राणश्चापानश्चेति वैकल्पिक इति केचित् ॥९॥

सा०—सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्य। पुरस्तात्स्थितं ग्रन्थिं स्रुक्सहितेन हस्तेन प्रत्यञ्चं, प्रत्यङ्मुख प्रत्युक्ष्य। प्रादक्षिण्येन प्रत्यङ्मुखत्वं स्रुग्घस्तयोः। स्रुचैव निनयनमिति गम्यते। अतिशिष्टाः प्रोक्षणीर्निनयति दक्षिणायै श्रोणेरोत्तरायै श्रोणेः—'स्वधा पितृभ्यः···गच्छत' इति। अत्र प्रोक्षणीनिनयने प्राचीनावीतं केचिदिच्छन्ति पितृसम्बन्धात्। दक्षिणामुखः प्रसव्यं प्राचीनावीती पित्र्याणि (बौ० श्रौ० २।२।२६) इति परिभाषोक्तेः। एतदपरे न क्षमन्ते। स्वाध्यायब्राह्मणे—यज्ञोपवीत्येवाऽधीयीत याजयेद्यजेत वा यज्ञस्य (तै० आ० २।१) इति वचनात्सर्वत्रोपवीतित्वे सिद्धे दर्शपूर्णमासप्रकरणे पुनरुपव्ययत इति विधानं बाधकबाधनार्थम्। तच्च बाधकं परिभाषाप्राप्तं पित्र्येषु प्राचीनावीतित्वम्।

तदनेनोपव्ययत इति दर्शपूर्णमासप्रकरणे विधानेन बाध्यते, तथैव तद्विकारेष्विति। अतो दर्शपूर्णमासतद्विकारेषु वचनादृते प्राचीनावीतत्वं न कर्तव्यम्। अग्निहोत्रे दक्षिणतः प्राचीनावीती (बौ० श्रौ० ३।६।१५) इति वचनं सिद्धानुवाद इति। केचित्तु प्रोक्षणीनिनयनस्य पौर्णमास्यां पितृयज्ञस्थनीयत्वमिति, तत्र वाचनिकतया तद्वदत्राऽपि वाचनिकत्वं प्राचीनावीतस्येति तथात्वमिच्छन्ति। यदुक्तं कर्मान्ते—क उ खलु पौर्णमास्यां पितृभ्यो दीयत इति। यदेवैतच्छ्रोण्यां[1] निनयतीति (बौ० श्रौ० २४।२७।४-५)। द्वैधे च—सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्याऽतिशिष्टाः प्रोक्षणीर्निनयेत् दक्षिणायै श्रोणेरोत्तरायै श्रोणेः—'स्वधा पितृभ्य…गच्छत' इति (बौ० श्रौ० २०.११)। उदूह्य प्रोक्षणीधानम्। द्वैधे—स्रुच उदूहन इति। अग्रेणाऽऽत्मानमुदीचीमुदूहेदिति बोधायनः। जघनेनाऽऽत्मानमुदीचीमुदूहेदिति शालीकिः (बौ० श्रौ० २०।११) इति[2]। बर्हिर्विस्रस्य पुरस्तात्प्रस्तरं गृह्णाति—'विष्णोः स्तूपोऽसि' इति। पुरस्तात्पूर्वदिगाभिमुख्येन। तथा च सूत्रम्—कर्षन्निवाऽऽहवनीयं प्रति प्रस्तरमपादत्ते (आप० श्रौ० २।८।५) इति। अनेन सूत्रोक्ताः कर्षणनियमविशेषा अप्युपलक्षिताः ॥८॥ तस्मिन्पवित्रे अपिसृजति—'यजमाने…दधामि' इति वा तूष्णीं वा। द्वैधे च—प्रस्तरे पवित्रे अपिसृजति—'यजमाने…दधामि' इति वा तूष्णीं वेति। पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः (बौ० श्रौ० २०।११) इति। अपिसृजति, उपगूहतीत्यर्थः ॥९॥ तं यजमानाय वा ब्रह्मणे वा प्रयच्छति। व्यवस्थितोऽयं विकल्पः। यत्र ब्रह्मयजमानयोरसन्निधिः, यथा सर्वतोमुखे स्वायतने यजमानस्तिष्ठति, ब्रह्माणस्तु स्वस्वायतनेषु। तद्विषयं ब्रह्महस्ते प्रदानम्। अनेन गृहीताज्यानां स्रुचां यजमानहस्ते प्रदानवचनमप्यसमञ्जसं वेदितव्यम्। द्वैधे च—तं यजमानाय वा ब्रह्मणे वा प्रयच्छति इति। पूर्वः कल्पः शालीकेरुत्तरो बोधायनस्य (बौ० श्रौ० २०।११) इति ॥१०॥

**अथैतानि बर्हिःसंनहनान्यायातयति दक्षिणायै श्रोणेरोत्तरादंसात् ॥११॥ अथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिं स्तृणाति—'देवबर्हिरूर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः' (तै०सं० १।१।११।१) इति ॥१२॥ तां बहुलां पुरस्तात्प्रतीचीं त्रिवृतमनतिदृश्नं स्तृणाति ॥१३॥**

भव०—संहननानीति बहुवचननिर्देशाद्विस्रस्येति गम्यते। इतरथैकस्मिन् बहुवचनं न स्यात् ॥११॥ स्तरणे द्वितीयानिर्देशाद् बर्हिरभिधानम्। ततश्च सन्निपातितत्वान्मन्त्रस्य प्रतिधातु प्रतिमुष्टि वा मन्त्रावृत्तिः। मन्त्रसंस्कृतेन वेदेरुपकार इति इतरथा वेदिसंस्कारार्थत्वे मन्त्रस्यैकत्वाद्वेदेः सकृदेव मन्त्रः स्यात्। सोमेऽप्येकत्वाद् धातोः सकृदेव मन्त्रः ॥१२॥ बहुलां सुप्रच्छन्नां दक्षिणाद्वेद्यन्तादेवं मध्ये एवं पश्चात् प्रागग्रैरनतिदृश्नं बर्हिरतीत्य यथा वेदिर्न दृश्यते तथा स्तृणाति ॥१३॥

---

१. 'यदेवैतच्छ्रोण्योर्नि०' इति कै० सं०।

२. 'इति' नास्ति मद्र० सं०।

सा०—अथैतानि बर्हिःसन्नहनान्यायातयति दक्षिणायै श्रोणेरोत्तरादंसात्। सन्नहनानीति बहुवचनेन बर्हिःसन्नहनस्य विस्रस्याऽऽस्तरणं गम्यते। द्वैधे विशेषः—शुल्बस्यायतन[1] इति। सूत्रं बोधायनस्य। शुल्बं विस्रस्य दक्षिणे वेद्यन्ते स्तृणीयादिति शालीकिः (बौ० श्रौ० २०।११) ॥११॥ अथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिं स्तृणाति—'देवबर्हि···देवेभ्यः' इति। दक्षिणे वेद्यन्ते स्तरणमुपक्रम्यौत्तराद्वेद्यन्तात्स्तृणातीत्यर्थः। प्रतिमुष्टि मन्त्रावृत्तिः बर्हिःसंस्कारत्वात्। अत एव मुष्टिमिति द्वितीयानिर्देशः, दक्षिणे वेद्यन्ते इत्यधिकरणनिर्देशश्च। वेदिसंस्कारत्वे तु सकृदेव मन्त्रः। तं पक्षमङ्गीकृत्योक्तम्—तां बहुलामित्यादि ॥१२॥ तां वहुलां पुरस्तात्प्रतीचीं त्रिवृतमनतिदृश्नं स्तृणाति इति। तां वेदिं, वहुलां बहुभिर्दर्भस्तम्बैः स्तीर्यमाणत्वात्, पुरस्तात्प्रतीचीं प्राचीमुपक्रम्य प्रत्यगपवर्गस्तरणवतीं, त्रिवृतमनतिदृश्नमिति च क्रियाविशेषणम्। त्रिरावृत्याऽन्तर्दर्शनाऽभावो[2] यथा भवति तथा स्तृणातीत्यर्थः। अत्र प्रतिमुष्टि मूलानां मुष्ट्यन्तराग्रैराच्छादनं गम्यते। महापितृयज्ञे अनाच्छादनविधानात्, तथा च वक्ष्यामः। द्वैधे विशेषः—वेद्यै स्तरण इति। सूत्रं बोधायनस्य। अत एवैनां प्राचीं धातुशः स्तृणीयादिति शालीकिः (बौ० श्रौ० २०।११) इति। धातुशब्दः सन्धिवचनः, धारणाहेतुत्वात्। प्रागपवर्गत्वेऽप्यग्रैर्मूलाच्छादनम् ॥१३॥

अथ प्रस्तरपाणिः प्राङभिसृप्य परिधीन् परिदधाति—'गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडितः' (तै० सं० १।१।११।१) इति मध्यमम्,—'इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितः' (तै० सं० १।१।११।१) इति दक्षिणम्—'मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः' (तै० सं० १।१।११।२) इत्युत्तरम् ॥१४॥ अथ सूर्येण पुरस्तात् परिदधाति—'सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्याः' (तै० सं० १।१।११।२) इति ॥१५॥ ऊर्ध्वे समिधावादधाति—'वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमह्यग्ने बृहन्तमध्वरे' (तै० सं० १।१।११।२) इति दक्षिणां तूष्णीमुत्तरामभ्याधाय ॥१६॥

सा०—अथ प्रस्तरपाणिः प्राङभिसृप्य परिधीन्परिदधाति—'गन्धर्वोऽसि··· ईडितः' इति मध्यमम् 'इन्द्रस्य···ईडितः' इति दक्षिणम्, 'मित्रावरुणौ···ईडितः' इत्युत्तरम्। ब्रह्मणो यजमानस्य वा हस्ते स्थितं प्रस्तरं यथाहृतमानीतं पाणौ धारयन्परिधीन् परिदधातीत्यन्वयः। अतः प्रागभिसर्पणं प्रस्तरग्रहणात्पुरस्तात्पश्चाद्वा भवति। अन्यथा-प्रस्तरग्रहणव्यापृतेन पाणिना परिधिपरिधानं विहितं स्यात्। द्वैधे विशेषः—परिधीनां

---

१. '०स्यायातन' इति कै० सं०, वृ० कोशे च।
२. 'त्रिरावृत्याद्यन्तदर्शना०' इति वृ० कोशे।

परिधान इति। स ह स्माऽऽह बोधायनोऽध्यस्येद्दक्षिणमुपोहेदुत्तरमिति। अनीकसंस्पृष्टानेनैनान्[1] परिदध्यादिति शालीकिः (बौ० श्रौ० २०।११) इति। दक्षिणं परिधिं मध्यमस्योपरि स्थापयेदुत्तरं परिधिं मध्यमस्याधस्तात्स्थापयेत्। अत्राऽपि विशेषमाह—अनीकसंस्पृष्टानिति। अनीको मूलप्रदेशः, तन्मात्रसंस्पृष्टानेव परिदध्यादित्यर्थः ॥१४॥ अथ सूर्येण पुरस्तात्परिदधाति—'सूर्यस्त्वा···शस्त्याः' इति। द्वैधे विशेषः—अथ सूर्येण पुरस्तात्परिदधातीति। सूत्रं बोधायनस्य। आहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः (बौ० श्रौ० २०।११) इति ॥१५॥ ऊर्ध्वे समिधावादधाति—'वीतिहोत्रं ··अध्वरे' इति दक्षिणां, तूष्णीमुत्तरामभ्याधाय। द्वैधे विशेषः—ऊर्ध्वे समिधावादधातीति। सूत्रं बोधायनस्य। ऊर्ध्वे एवैने अभ्याधायाऽनतिपातयेदिति शालीकिः (बौ० श्रौ० २०।११)। अतिपातः, आहवनीयावतिक्रम्य पातः। स न कार्य इति शालीकिनोक्तम् अनतिपातयेदिति, अनतिक्रम्य पातयेत्। प्रकृतत्वादाहवनीयमिति गम्यते। बोधायनपक्षे त्वतिपातेऽपि न विरोधः। सूत्रव्याख्यातारस्तु ऊर्ध्वे इत्यस्योर्ध्वाग्रे इत्यर्थमाहुः ॥१६॥

**अन्तर्वेद्युदीचीनाग्रे विधृती तिरश्ची सादयति—'विशो यन्त्रे स्थः' (तै० सं० १।१।११।२) इति ॥१७॥ विधृत्योः प्रस्तरम्—'वसूनां रुद्राणामादित्यानां सदसि सीद' (तै० सं० १।१।११।२) इति ॥१८॥ प्रस्तरे जुहूम्—'जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद' (तु०—तै० सं० १।१।११।२) इति ॥१९॥**

भव०—प्रस्तरः पाणौ यस्य सोऽयं प्रस्तरपाणिः। परिधिपरिधानविधिरुक्तो द्वैधे (बौ० श्रौ० २०।११)। विधृती परिभोजनीयेभ्यः ॥१७॥ प्रस्तरे जुहूमिति। तस्मिन्निति सिद्धे प्रस्तरग्रहणं सशाखापवित्रार्थम्। एवं हि स प्रस्तीर्णतरो भवति। एवं स्थिते द्वैधे (बौ० श्रौ० २०।१२) एतस्मिन् प्रदेशे विस्रस्य वा अविस्रस्य वेति विकल्पः ॥१९॥

सा०—अथ अन्तर्वेद्युदीचीनाग्रे विधृती तिरश्ची सादयति—'विशो यन्त्रे स्थः' इति। विधृती प्रस्तरबर्हिषोरसङ्कराय मध्ये स्थापनीयौ दर्भौ। तयोरविशेषाभिधानात्, परिभोजनीयेभ्य आदानमिति गम्यते। द्वैधे तु—विधृत्योः करणं इति। सूत्रमाचार्ययोः। अत्रो ह स्माऽऽह दक्षिणाकारो राथीतर उभे एवैते वेदिं व्यतिषज्येयातामिति। मध्यमाद्धातोरनन्तर्गर्भे स्यातामित्यौपमन्यवः (बौ० श्रौ० २०।११)। दक्षिणाकार इति राथीतरविशेषणम्। बर्हिषाऽऽस्तीर्णां वेदिं विधृती एव व्यतिषज्येते, सम्बध्येते, न तु प्रस्तरः। मध्यमाद्धातोरिति। अत्र धातुशब्दो मुष्टिवचनः ॥१७॥ विधृत्योः प्रस्तरम्—'वसूनां रुद्राणा···सीद' इति। सादयेदित्यनुषज्यते। द्वैधे तु प्रस्तरे शाखापवित्रमासादयेदित्याह—

१. '०स्पृष्टानेवैनान्' इति वृ० कोशे।

दोहनपवित्रस्यासादन इति । विस्रस्य प्रस्तर आसादयेदिति बोधायनः । अविस्रंस्यैवेति शालीकिः (बौ० श्रौ० २०।१२) इति ।।१८।। प्रस्तरे जुहूम्—'जुहूरसि···सीद' इति । प्रस्तरग्रहणं नियमार्थं, प्रस्तर एव न तु शाखापवित्र इति । प्रस्तरे जुहूमेवेति वा नियमः । अत एवाऽऽह—बर्हिषीतरे (बौ० श्रौ० ६।१८।२१) ।।१९।।

उत्तरामुपभृतम्—'उपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद' (तु०—तै० सं० १।१।११।२)इति ।।२०।। उत्तरां ध्रुवाम्—ध्रुवासि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद' (तै० सं० १।१।११।२) इति ।।२१।। अथ स्रुचः सन्ना अभिमृशति—'एता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम्' (तै० सं० १।१।११।२) इति ।।२२।। अथ 'विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानि'(मै० सं० १।१।१२) इत्याज्यान्यभिमन्त्रयते ।।२३।।

भव०—स्रुचामभिमर्शने मन्त्रस्तन्त्रं बहुवचननिर्देशात् । सहाज्यानीति सहाज्यस्थाल्या ।।२२-२३।।

।। इति एकादशोऽध्यायः समाप्तः ।।

सा०—उत्तरामुपभृतम्—'उपभृदसि···सीद' इति । उत्तराम् उदक्संस्थाम् ।।२०।। उत्तरां ध्रुवाम्—'ध्रुवाऽसि···सीद' इति । द्वैधे विशेषः—स्रुचां सादन इति । स ह स्माऽऽह बोधायन ईषत्प्रत्यग्वहृतामिवोपभृतं सादयेद्विधृतीभ्यां चैनामवगृह्णीयादिति । अत्रो ह स्माऽऽह शालीकिरनुपूर्वा एवैनाः सादयेन्न[1] चोपभृतं विधृतीभ्यामवगृह्णीयादिति (बौ० श्रौ० २०।१२) । उपभृतम् ईषत्प्रत्यवहृतामिव, किञ्चित्प्रत्यगवहृतामिव एनामुपभृतं विधृतीभ्यामवगृह्णीयाद्विधृत्योरधः स्थापयेदित्यर्थः । शालीकिमते तु—एनाः स्रुचः, अनुपूर्वा अनुगतपूर्वा एव, न त्वीषत्प्रत्यगवहृतोपभृदित्यर्थः । विधृतीभ्याञ्च नाधःकरणमुपभृत इति ।।२१।। अथ स्रुचः सन्ना अभिमृशति 'एता असदन्···यज्ञनियम्' इति । '[2]विष्णूनि···प्राजापत्यानि' इत्याज्यान्यभिमन्त्रयते । अत्र बहुवचननिर्देशात्सकृदेव[3] मन्त्रः । अभिमर्शनञ्च[4] सकृदेव आज्यस्थालीगतस्याऽपि भवति, आज्यानीत्यविशेषनिर्देशात् ।।२२-२३।।

---

१. 'न' इति नास्ति वृ० कोशे । २. 'अथ विष्णूनि' इति कै० सं० ।
३. 'सकृन्मन्त्रः' इति ग-कोशे, वृ० कोशे च ।
४. 'च' इति नास्ति वृ० कोशे ।

अत्र प्रयोगक्रमः—

आज्यस्थालीं स्रुवं जघनेन वेद्यां निधाय पूर्ववत्प्रोक्षणीरावायोपोत्तिष्ठति—'आपो देवी ··तूर्यं' इति। स्रुक्स्थाभिरद्भिः स्रुक्स्था अपः प्रोक्षति—'प्रोक्षिताः स्थ प्रोक्षिताः स्थ' इत्यस्य त्रिरावृत्त्या। इध्मं स्वयमेव विस्रस्य सकृत्प्रोक्षति—'कृष्णोऽस्या······स्वाहा' इति मूलादारभ्याऽऽग्रात्। वेदिं प्रतीचीमारभ्य प्रागपवर्गं सकृत्प्रोक्षति—'वेदिरसि···स्वाहा' इति। बर्हिरविस्रंसयन्मूलादारभ्याऽऽग्रात्सकृत्प्रोक्षति—'बर्हिरसि······स्वाहा' इति। बर्हिरावायान्तरेणेध्मं प्रणीताश्च प्राञ्चं नीत्वा प्रणीताऽऽहवनीययोर्मध्येन पश्चादानीय वेद्यां पुरोग्रन्थ्यासाद्योपविश्य सव्यहस्तेन बर्हिरारभ्य 'दिवे त्वा' इत्यग्राणि सकृत्प्रोक्षति। 'अन्तरिक्षाय त्वा' इति मध्यानि सकृत्, 'पृथिव्यै त्वा' इति मूलानि[1] सकृत्प्रोक्षति। पाणिधृतपुष्करां स्रुचं बर्हिषो दक्षिणत आनीय प्रत्यङ्मुखया तया प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति। बर्हिषां प्रदक्षिणं प्रत्यग्ग्रन्थिं कृत्वा पूर्वाग्रं निदधाति।

प्रोक्षणीशेषं दक्षिणां श्रोणिमारभ्य आोत्तरायै श्रोणेः सन्ततं निनयति—'स्वधा पितृभ्यः···गच्छत' इति। 'पितृभ्यो बर्हिषद्भ्य इदं न मम' इति यजमान आह। उद्धृह्य प्रोक्षणीधानं प्राञ्चमुद्गूढं ग्रन्थिं प्रत्यञ्चमायच्छति। सन्नहनं विस्रस्य प्रथमं प्रस्तरं पूर्वदिगभिमुखेन गृह्णाति 'विष्णोः स्तूपोऽसि' इति। प्रस्तरे पवित्रे अन्वग्रमुपगूहति—'यजमाने प्राणापानौ···मि' इति। तं यजमानाय प्रयच्छति, सोऽपि धारयन्नास्ते। अध्वर्युर्बर्हिःसन्नहनानि विस्रस्य दक्षिणां श्रोणिमारभ्य आोत्तरावंसात् स्तृणाति। आहरणक्रमेण प्रथममुष्टिमादाय विस्रस्य दक्षिणांसमारभ्यौत्तरादंसात्सन्ततं स्तृणाति—'देवबर्हिः' इति। मध्यमं मुष्टिमादाय वेद्याः मध्ये दक्षिणं वेद्यन्तमारभ्य आोत्तराद्[2] वेद्यान्तात् स्तीर्णबर्हिर्मूलान्यग्रैः प्रच्छादयन् संततं स्तृणाति—'देवबर्हिः' इति। तृतीयं मुष्टिमादाय वेद्याः श्रोणिप्रदेशे दक्षिणां श्रोणिमारभ्यौत्तरायै श्रोणेर्मध्यममुष्टिमूलान्येतदग्रैः प्रच्छादयन् संततं स्तृणाति—'देवबर्हि···भ्यः' इति। यजमानहस्तात्प्रस्तरमादाय दक्षिणेन हस्तेन धारयन् तेनैव हस्तेनाऽऽहवनीयस्यापरमेखलायामुदगग्रं मध्यमं परिधिं निदधाति—'गन्धर्वोऽसि · ईडितः' इति। यजमानोऽनुमन्त्रयते—'ध्रुवोऽसि · त्' इति। अध्वर्युर्दक्षिणमेखलायां मध्यमपरिधिमूलादुपरि दक्षिणपरिधिमूलं यथा भवति तथा [3]प्रागग्रं निदधाति—'इन्द्रस्य बाहु···ईडितः' इति दक्षिणम्। तं यजमानोऽनुमन्त्रयते—'उग्रोऽस्यु ··त्' इति। अध्वर्युरुत्तरमेखलायां मध्यमपरिध्यग्रादधःकृतमूलं परिधिं प्रागग्रं निदधाति—'मित्रावरुणौ · ईडितः' इति। तं यजमानोऽनुमन्त्रयते—'अभिभूरसि···त्' इति।

सूर्येण पुरस्तात्परिदधाति—'सूर्यस्त्वा···शस्त्याः' इति। यजमानोऽग्निं परिधिभिर्म-

---

१. 'मूलान्यपि' इति वृ० कोशे।

२. वृ० कोशे मद्र० सं० चात्र लिपिकरप्रमादावृत्तिः संजाता।

३. 'प्रागग्रं' इति नास्ति वृ० कोशे।

नसा योजयञ्जपति—'युनज्मि···वेदः' इति। आहवनीयस्य दक्षिणपूर्वभागे तदूर्ध्वदेश एवाऽग्नौ यथा न पतति तथा समिधमादधाति—'वीतिहोत्रं···मध्वरे' इति। तथैव तूष्णी-मुत्तरपूर्वभागे समिधमादधाति। तत्काले यजमानो जपति—'इन्धाना···वयन्ते' इति। परिभोजनीयाद्वा मध्यमपुष्टेर्वा समावनन्तर्गर्भौ दर्भौ विधृती करोति। वेदिमध्ये उदीचीनाग्रे विधृती तिरश्ची सादयति—'विशो यन्त्रे स्थः' इति। तयोः प्रस्तरं शाखापवित्रेण सह सादयति सन्नयतः—'वसूनां रुद्राणां ··सीद' इति। प्रस्तरे जुहूं सादयति—'जुहूरसि··· सीद' इति। ¹तदुत्तरामुपभृतम्—'उपभृदसि···सीद' इति। तदुत्तरां ध्रुवाम्—'ध्रुवाऽसि··· सीद' इति। तदुत्तरत आज्यस्थालीं स्रुवञ्च तूष्णीं सादयति। आसन्नाः स्रुचः सकृदेवाभि-मृशति—'एता असदन्···नियम्' इति। 'विष्णूनि स्थ···पत्यानि' इत्यन्तर्वेदि स्थितान्या-ज्यान्यभिमन्त्रयते॥ इति प्रथमे प्रश्ने एकादशोऽध्यायः॥

॥ इति एकादशोऽध्यायः समाप्तः॥

—:०:—

१, 'उत्तरामुप०' इति मद्र० सं०।

# द्वादशोऽध्यायः

अथादत्ते दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन पात्रीं वेदमिति ॥१॥ एतत्समादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य पात्र्यां द्वेधोपस्तृणीते—'स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः' (तै० ब्रा० ३।७.५।२-३) इति ॥२॥

भव०—दक्षिणेनेत्यप्रमादार्थम् पात्र्यां जघनेन वा उत्तरेण वा । द्वेधेति वैमृधस्यानित्यत्वख्यापनार्थम् । अमावास्याख्यापनार्थममावास्याप्रक्रमः । द्वे उपस्तरणे, स्योनमिति समस्त उक्तः, द्वयोरर्धर्चयोः परस्परापेक्षत्वाद्वाक्यलिङ्गात्; सदनकरणसादनयोर्भेदेन, लिङ्गञ्च वाक्याद् बलीयः । तस्माद्विभज्योभयत्रेति न्यायविदः । आचार्याभिप्रायो नोपस्तरणानन्तरं भस्माङ्गारच्छन्नस्य सादनं भवतीति । अङ्गारापोहनादि मन्त्रलिङ्गात् प्राप्तम् । अत्र सादनं न सम्भवति इतरेषां मन्त्राणां लिङ्गं बाध्येत मन्त्रपाठक्रमादभिघारणानन्तरं विनियोगे सर्वसम्भवेऽपि न ह्यकल्पयित्वा स्थानमुद्वासनं सम्भवति । ततश्च उत्तरकाले सादने उत्तरोर्धर्चस्तस्मिन्नित्यसम्बन्धाद् अगमकः स्यात् । कस्मिन्नित्यविज्ञानात्तत्र श्रुतिरेव बाध्येत । ततः कल्पयामीति सीदेत्याशीर्नामत्वं तस्मिन्नासीदतामित्येवमर्थं एवञ्च लिङ्गबाधो न भविष्यतीति ।

कथं व्रीहियवयोरिति प्रकृतत्वादूहाभावेऽपि शाखान्तरीयो मन्त्र इहाम्नातः । सूक्तवाकादिषु देवता [पदवद्] विभज्य व्रीहियवयोर्व्रीहीणां मेध यवानां मेधेति च प्रयोक्तव्यम् इति केचित् । अन्ये स्वशाखायां व्रीहीणां मेधेति समाम्नातः । शाखान्तरे यवानामिति । उभयप्रदर्शनार्थमुभयं समाम्नातमाचार्येणेत्यपरे । उभयोर्विहितत्वाद् अनारभ्याधीतस्य च प्रकृत्यर्थत्वाविशेषात् प्रदर्शनार्थं समाम्नातमिति प्रदर्शितमाचार्येण इत्यपरे । यथाभिघारणे पुरोडाशस्तुतिपरत्वात् परार्थे यज्ञपतिशब्दवद् व्रीहिग्रहणमित्यविवक्षितत्वात् तयोरुभयोरत्रैव प्रयुज्यते । तस्मादन्याय्यनिगदत्वाद् विकृतावप्यनूह इत्यपरदर्शनम् ॥१-२॥

सा०—अथाऽऽदत्ते दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन पात्रीं वेदमिति । एतत्समादाय प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य पात्र्यां द्वेधोपस्तृणीते—'स्योनन्ते···मानः' इति । दक्षिणेन सव्येनेति नियमोऽप्रमादार्थः । दारुपात्र्यां द्वेधोपस्तृणीते । अनेन वैमृधस्य भिन्नतन्त्रत्वमपि द्योतयति । अन्यथा द्वेधा त्रेधा वेति

ब्रूयात् । अथवाऽमावास्याविवक्षयोक्तम् । द्वे वेत्यनेनैन्द्रस्य पुरोडाशस्याऽनित्यता निराकृता । ततश्च पुरोडाशसङ्ख्ययोपस्तरणं गम्यते । स्योनन्त इत्यादिकः सुमनस्यमान इत्यन्तोऽयं मन्त्रः सदनकरणाऽपरनामकेऽस्मिन्नुपस्तरण एव [1]विनियुक्तः, न तूत्तरार्धर्चस्याऽऽसादने विनियोगः । द्वयोरर्धर्चयोः परस्पराऽऽकाङ्क्षत्वात् । न हि साकाङ्क्षं वाक्यं समाप्तिमासादयति । तथा चोक्तम्—

साकाङ्क्षाऽवयवं भेदे पराऽनाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते ।। इति ।

ननु लिङ्गादत्र सदनकरणमासादनञ्चेति द्वयं प्रतीयते । वाक्याच्च लिङ्गं बलीयः । ततः क्रियाद्वयापेक्षया मन्त्रभेद एव युक्तः । आद्यः सदनकरणे विनियुक्त, अन्त्यः पुरोडाशस्याऽऽसादन इति । नैतदेवम् । न हि भस्माङ्गारच्छन्नस्याऽऽसादनमभिघारणं वा सम्भवति, अतस्तदनन्तरमासादने त्वस्योत्तरार्धर्चस्योत्कर्षः स्यात् । ओम् इति चेत्, तस्मिन्नित्यनेन किं परामृश्यते ? स्पष्टम् पूर्वार्धर्चे श्रुतं सदनमिति चेन्न, तस्याऽगमकत्वात् श्रुतिरेव बाध्येत । खमङ्क्ष्वेत्यस्याऽनन्तरं युक्तः तस्मिन्सीदेत्ययं मन्त्रः, तत्र प्रकृतपरामर्शी तच्छब्दः कथं नाम सदनं परामृशेत् ? तस्मान्न वाक्यभेदो युक्तः इति सिद्धम्, पाठक्रमादेव विनियोग इति ।

अत्र यवमये पुरोडाशे व्रीहीणां मेधेत्येव पाठः प्रकृतित्वेन, वचनं विनोहाऽनुपपत्तेः । केचित् व्रीहियवानां मेध इति पाठं मन्वानाः सूक्तवाकदेवतापदवद्विभज्य व्रीहियवयोर्विनियोग इति मन्यन्ते । अपरे तु स्वशाखायां व्रीहोणां मेधेत्येव पाठः, शाखान्तरे तु यवानां मेधेति । तयोरुभयोरप्याचार्येण सङ्गृह्याऽभिधानाद्यथार्थं विनियोगमाहुः ।।१-२।।

अथ धृष्टिमादाय दक्षिणस्य पुरोडाशस्याङ्गारानपोहति—'इदमहं सेनाया अभीत्वर्यै मुखमपोहामि' (तै० ब्रा० ३।७।५।१-२) इति ।।३।। अथैनं विदर्शयति—'सूर्य ज्योतिर्विभाहि महत इन्द्रियाय' (तै० ब्रा० ३।७।५।२) इति ।।४।। वेदेन विरजसं कृत्वाभिघारयति—'आप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये जुष्टमभिघारयामि' (तै० ब्रा० ३।७।५।२) इति ।।५।। यद्देवत्यो वा भवति ।।६।।

भव०—भस्मापोह्य प्रदर्शयति । विरजसं संशुद्धं कृत्वा ।।४-५।। यद्देवत्यो वा भवतीति यथा निर्वापे तथेड्याप्यानुपूर्व्येणाभिघारणे विध्यन्तरं द्रष्टव्यम् ।।६।।

सा०—अथ धृष्टिमादाय दक्षिणस्य पुरोडाशस्याऽङ्गारानपोहति—'इदमहं ... अपोहामि' इति । अत्र धृष्ट्यादानममन्त्रकम्, आदायेति क्रियान्तरशेषत्वेनाऽभिधानात्,

1. 'निनियुक्तः' इति बृ० कोशे, अन्यत्र 'नियुक्तः' इति पाठः ।

स्फ्यमादायोद्धन्तीतिवत् ।।३।। अथैनं विदर्शयति—'सूर्यं ज्योति···याय' इति । विदर्शयति प्रकाशयति, प्रकटयतीति यावत् ।।४।। वेदेन विरजसं कृत्वाऽभिघारयति—'आप्यायतां··· यामि' इति । वेदेन, वेदवातेन । विरजसं, सूक्ष्ममस्मरहितं, शुद्धं कृत्वेत्यर्थः । अभिघारयति, स्रुवेणाऽऽज्यमाश्चोतयति । एवञ्च सर्वत्राऽभिघारणस्य स्रुवसाधनत्वमौत्सर्गिकम् । प्रयाजानिष्ट्वा हविषामभिघारणे सामर्थ्यात्स्रुचेति गम्यते ।।५।। यद्देवत्यो वा भवति इति । या देवता यस्य पुरोडाशस्य तद्देवतानामाऽनुद्रवणेनाऽभिघारणं विदधाति । यथा निर्वापे तथेहाऽप्यानुपूर्व्येणाऽभिघारणम् । ततश्चाऽभिघारणसम्बन्धिनो द्वितीयस्यैवाऽग्निशब्दस्योहः । तेन तद्देवताऽनुगुण्येन 'इन्द्राय जुष्टमभिघारयामि, अग्नीषोमाभ्यामित्यादि द्रष्टव्यम् । प्रकृतावपि वचनादूहस्याऽऽश्रितत्वाच्च वचनमिदमेव 'यद्देवत्यो वा भवति' इति ।

अत्र दामोदरस्त्वाऽऽह—यद्देवत्यो वा भवतीत्यग्नीषोमीयाऽभिप्रायमिति केचित् । यथा प्रोक्षणादिष्विति । नैतदेवं, यद्देवत्य-यथादेवत शब्दयोर्भिन्नार्थत्वात् । यथा यथा देवता स्थिता तथाऽनुद्रुत्य प्रोक्षतीति तस्य शब्दस्यार्थः । यद्देवत्य इति तु, या देवता अस्येति तद्[1] देवतान्तात्तादर्थ्ये यत् (अष्टा० ५।४।२४) इति यत्प्रत्ययः । यद्देवत्यो वा भवतीत्याग्नेयस्य देवताविकल्पः । यथा पशौ यद्देवत्यो वा भवति (बौ० श्रौ० ४।५।३) इत्युक्तं, तद्वदिहापीति चेन्नैतदेवं, पशौ तु युक्तो देवताविकल्पो विद्यमानत्वात् । इह तु नित्यरूपस्याऽऽग्नेयस्य कथं विकल्पनिर्देश इति । यद्यप्याग्नेयस्य विकल्पो न विद्यते तद्विकृतिभूतः सौर्यश्चरुस्तु गृह्यते । तस्माददोषः । न तु तस्य चोदकेनैव सिद्धत्वात् किमनेन यत्नेनेति ? तत्संशयव्युदासार्थमेव यत्नः । अत्राऽऽम्नातत्वादग्नये जुष्टमभिघारयामीत्येतावानेव शक्य आम्नातः प्रकृतावूहाभावादितरेषां नाऽस्ति मन्त्रः । तस्मादग्नीषोमीयादीनां तूष्णीमभिघारणम् । आग्नेयतद्विकाराणामेव मन्त्र इति ।।६।।

अथैनमुद्वासयति— 'शृत उत्स्नाति जनिता मतीनाम् (तै० ब्रा० ३।७। ५।२) इति ।।७।। आज्येन सुसंतर्पयति—'आर्द्रः प्रथस्नुर्भुवनस्य गोपाः' (तै० ब्रा० ३।७।५।२) इति ।।८।। उपरिष्टादभ्यज्याधस्तादुपानक्ति— 'यस्त आत्मा पशुषु प्रविष्टस्तमङ्क्ष्व' (तै० ब्रा० १।२।१।२२) इति ।।९।।

सा० —अथैनमुद्वासयति—'शृत उत्स्नाति जनिता मतीनाम्' इति । उद्वासनं कपालेभ्य उद्धरणम् । अपर्यावर्तयन्, अभ्रामयन्, दक्षिणोद्धृतं तथैव सव्ये स्थापयेत् । पर्यावर्तनादौ प्रत्यवायप्रायश्चित्तयोः श्रवणात्—

उद्धृते तु पुरोडाशे वेपिते स्पन्दिते[2] तथा ।
भिन्ने संसर्पणे चाऽपि[3] प्रायश्चित्तं कथं भवेत् ।। इति ।

---

१. 'तद्' इति नास्ति वृ० कोशे ।
२. 'स्पृन्दिते' इति कै० सं० । ३. 'चापि' इति कै० सं० टिप्पणे ।

विज्ञायते—

उद्धृते तु कुलं हन्याद्वेपिते नश्यति प्रजा[1]।
भिन्ने संसर्पणे चाऽपि यजमानः प्रमीयते ॥ (बौ० श्रौ० २७।४।७,८)

इत्यारभ्य पतनफालनखण्डनाद्यनुक्रम्योक्तम्—प्रसिद्धमुद्वास्य बर्हिषदं कृत्वा प्रभूतेन सर्पिषा[2] प्रसिच्याऽभिमन्त्रयते—'किमुत्पतसि' (बौ० श्रौ० २७।४।६ इत्यादि ॥७॥ आज्येन सुसन्तर्पयति—'आर्द्रः···गोपाः' इति। सन्तर्पणम्, अभिवर्षणम्। एतदेव द्वितीयाऽभिघारणरूपम्। अत एव स्रुवेण[3] करणम्। ततो नाऽत्र प्रतिष्ठिताऽभिघारणम्। अस्यैवाऽनुवादः उपरिष्टादभ्यज्य इति ॥८॥ अधस्तादुपानक्ति—'यस्त आत्मा···क्ष्व' इति। अधस्तादुपाञ्जनस्याऽभिघारणरूपत्वाऽभावात्परिवर्तनस्य चाऽयुक्तत्वाद्धस्तकरणकत्वम्। तथा च सत्याषाढः—'अधस्ताद्धस्तेनोपानक्ति' (सत्या० श्रौ० १।८) इति। केचित्तूपरिष्टाद्धस्त्वाऽऽज्याऽभिवर्षणेनैव स्वयमेवाऽधस्तादुपाञ्जने सति मन्त्रजपमाहुः ॥९॥

एवमेवोत्तरं पुरोडाशमुद्वासयति ॥१०॥ अथ शृतमथ दधि ॥११॥ अथ सांनाय्ये अलंकरोति—'यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान्त्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यम्' ((तै० ब्रा० १।२।१।२२) इति ॥१२॥

भव०—एवमेवोत्तरमिति। धृष्ट्यादानादेरतिदेशः ॥१०॥ अथ शृतमिति एवमित्यनतिदेशात् तूष्णीमिति गम्यते। अथेत्यारभ्य यथाप्राप्तमभिघार्य उद्वासयति ॥११॥ अलङ्करणं स्रुवेण सर्वत्राभिघारणम्। प्रत्येकं मन्त्रः ॥१२॥

सा०—एवमेवोत्तरं पुरोडाशमुद्वासयति। आग्नेयपुरोडाशोद्वासनधर्माः सर्वेऽतिदिश्यन्ते। उद्वासितस्य हस्तस्थितस्य पुरोडाशस्य सदनकरणानुपूर्व्यात्पात्र्यां स्थापनमर्थसिद्धम्। उपांशुयाजस्य चरुपक्षे तत्राङ्गारापोहनाद्यभावात्तन्मन्त्राणां लोपः। अभिघारणन्तु यथादेवतं समन्त्रकमेव। द्वितीयाभिघारणन्तु प्रतिष्ठितस्यैव, अत्र विशेषाऽनादेशात्, स्मार्तचरुधर्माऽतिदेशो युक्त इति। उत्तरत्वस्याऽविशेषात् वैमृधादेरपि तद्धर्माऽतिदेशः। द्वैधे विशेषः—हविषामुद्वासन इति। अग्रेणाऽनुद्वासितानि जघनेनोद्वासितानीति बोधायनः। जघनेनाऽनुद्वासितान्यग्रेणोद्वासितानीति शालीकिः। [4]अवच्छेदमित्यौपमन्यवः (बौ० श्रौ० २०।१२)। अग्नेयादीनामुद्वासने विषये हविरन्तराणामग्रेणाऽनुद्वासितानि तेषां जघनेन प्रत्यग्यागेनोद्वास्य नीत्वोदक्स्थितायां पात्र्यां स्थापयेदित्येकः पक्षः। एतद्विपरीतो द्वितीयः। औपमन्यवे तु पक्षे प्रतीच्यां पात्रीमासाद्याऽवच्छिद्याऽवच्छिद्यैकैकं पुरोडाशं क्रमात्स्थापयेदिति। एतस्मिन्पक्षे

---

१. 'प्रजाः' इति वृ० कोशे।
२. 'सर्पिषाव्रसिच्या०' इति कै० सं०, 'सर्पिषा प्रसिच्या०' इति वृ० कोशे।
३. 'स्रुवः' इति वृ० कोशे। ४. 'अपच्छेद०' इति कै० सं०।

हविरन्तराणां जघनेनाऽग्रेण वोद्वासनमिति ॥१०॥ अथ शृतमथ दधि । अत्राऽतिदेशाऽभावात्तूष्णीमभिघारणम् । पुरोडाशेभ्य उत्तरतः शृतं तदुत्तरतो दधि च । पात्र्यामासाद्याऽपि तूष्णीमभिघारणम् ॥११॥ अथ सान्नाय्ये अलङ्करोति—'यस्त आत्मा…महद्यम्' इति । प्रातर्दोहसायंदोहयोरलङ्करणं, सर्वतोऽभिघारणम् । एतदेव प्रतिष्ठिताऽभिघारणम् । अथवा स्मार्तन्यायेन तूष्णीं प्रतिष्ठितमभिघार्यं तृतीयमिदं समन्त्रकं सर्वतोऽभिघारणमलङ्करणाख्यमिति । उभयत्र मन्त्रावृत्तिः ॥१२॥

प्रत्यज्य कपालान्युद्वासयति—'इरा भूतिः पृथिव्यै रसो मोत्क्रमीद्' (तै० ब्रा० ३।७।५।३) इति ॥१३॥ संख्यायोद्वासयति—'यजमानस्य गोपीथाय' (तै० सं० २।६।३।५) इति ब्राह्मणम् ॥१४॥

भव०—कपालाञ्जनमाज्येन, मन्त्रश्चावर्त्तेत इति केचित् । सकृदित्यपरे । उद्वासने मन्त्र आवर्तेतेति अपरे ॥१३॥ उद्वासनात् प्राक् प्रोक्षणादूर्ध्वं नाशे प्रायश्चित्तम् । ब्राह्मणग्रहणमयमर्थोऽभिप्रेतो न प्रागर्थकर्मण इति ब्राह्मणार्थोऽयमभिमत इति ॥१४॥

सा०—प्रत्यज्य कपालान्युद्वासयति—'इरा भूतिः…मीत्' इति । मन्त्रेण प्रत्यज्योद्वासयतीत्यन्वयः । अतः प्रत्यञ्जनं समन्त्रकं, न तूद्वासनम् । ननु प्रत्यज्येति प्रत्यञ्जनस्य गुणता प्रतीयते । उद्वासयतीति च प्राधान्यमुद्वासनस्य । स्नात्वा भुञ्जीतेतिवत्, कर्तृरुपाधितयोक्तत्वात् । ल्य वाच्यतया अप्राधान्यात् । नैतदेवम् । नाऽत्र प्रत्यञ्जनं कर्तृरुपाधितयोक्तं, न च गुणप्रधानभावः । अतो वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवत् ल्यब्वाच्यत्वेऽपि न प्राधान्यहानिः । आचार्याऽभिप्रायेणाऽपि प्रत्यञ्जन एव मन्त्रः । कथमन्यथा द्वैधे चर्वाशयप्रत्यञ्जनमनेन मन्त्रेण विदध्यात् ? तथाहि—प्रत्यञ्जन इति । स ह स्माऽऽह बोधायन उभयानि प्रत्यञ्ज्याचचरूणां चाऽऽशयान्कपालानि चेति । कपालान्येवेति शालीकिः (बौ० श्रौ० २०।१२)। अत्र प्रत्यञ्जनस्य कपालसंस्कारत्वमङ्गीकृत्य कपालान्येवेति पक्षः । हविःश्रपणस्थानप्रत्यञ्जनस्य हविःसंस्कारत्वमङ्गीकृत्य चर्वाशयप्रत्यञ्जनपक्षः । तत्राद्ये प्रतिकपालं मन्त्रावृत्तिः, प्रत्येकं कपालानां प्राधान्यात् । द्वितीये तु प्रतिगणं हविःप्राधान्यात् । तथा च सत्याषाढः कपालाञ्जनमन्त्रस्य प्रतिकपालयोगमावृत्तिः । अपि वा एकैकशः कपालानि इति । युज्यत इति योगः, समूहः, गण इत्यर्थः ॥१३॥ सङ्ख्यायोद्वासयति 'यजमानस्य गोपीथाय' इति ब्राह्मणम् । सङ्ख्याय, परिगणय्य । अत्र एकं द्वे त्रीणि चत्वारीत्यादिशब्दोच्चारणं याज्ञिकप्रसिद्धम् । ब्राह्मणग्रहणं कपालनाशे तदुक्तप्रायश्चित्तसूचनार्थम् । नाशकालश्च प्रोक्षणादूर्ध्वमुद्वासनादर्वाक्प्रत्यवायहेतुः । सूत्रे तु—यदि प्रयुक्तानां प्रागर्थकर्मणः कपालं नश्येत् (आप० श्रौ० ९।१३।१३) इति श्रवणात्, उपधानादूर्ध्वमर्वाक्पुरोडाशाऽधिश्रयणात् कपालनाशे प्रायश्चित्तपक्षोऽभियुक्तैः प्रत्याख्यातः । न तत्र युक्तिरुक्तेति । द्वैधे विशेषः—कपाला-

नामाध्वर्यवो[1] विमोक इति। उद्वासय हवींषीत्यत्राऽऽचार्ययोर्विमुञ्चेदभक्षयन्नेव[2]। भक्षाणां पारे कपालानि विमुञ्चेदित्यौपमन्यवः (बौ० श्रौ० २०।१२) कपालानां विमोकः, तदर्थो 'यानि घर्मे…विमुञ्चताम्' इति मन्त्रजपः। आध्वर्यवः, अध्वर्युकर्तृकः। एवञ्च यजमानप्रकरणे काले कपालान्युद्वासयतीति वचनादध्वर्युजमानौ सह कुरुत इति गम्यते। काल इति वचनान्नियमं[3] द्योतयति। स एव नियम उक्तः, विमुञ्चेदभक्षयन्नेव भक्षाणां पार इति वा। ऋत्विग्यजमानकर्तृकाणामिडाभक्षाणामन्त इत्यर्थः ॥१४॥

अथैनं स्रुवमाज्यस्य पूरयित्वान्तरेण पुरोडाशाववदधाति ॥१५॥ अथैनानि संपरिगृह्यान्तर्वेद्यासादयति—'भूर्भुवः सुवः' (तै० सं० १।६।२।२) इत्येताभिर्व्याहृतीभिः ॥१६॥

भव०—अन्तरेण पुरोडाशाविति देशलक्षणार्थम् ॥१५॥ व्याहृतीभिः सर्वदैवेत्येके। संवत्सराद्यन्तयोरित्यपरे ॥१६॥

॥ इति द्वादशोऽध्यायः समाप्तः ॥

सा०—अथैनं स्रुवमाज्यस्य पूरयित्वाऽन्तरेण पुरोडाशाववदधाति। बहुपुरोडाशसत्त्वेऽपि प्राथमिकयोरेव मध्येऽवदधाति नियतत्वादेतयोरिति। विकृतौ पुरोडाशद्वयेऽपि पुरोडाशाऽभावेऽपि ॥१५॥ अथैतानि[4] सम्परिगृह्याऽन्तर्वेद्यासादयति—'भूर्भुवः सुवः' इत्येताभिर्व्याहृतीभिः। एतानि हवींषि; सम्परिगृह्य सम्यग्गृहीत्वा। अनेनाऽऽधारभूतायाः पात्र्या अप्राधान्यं द्योतितम्। तेन बहुहविष्कत्वेन पात्र्यन्तराऽऽसादनेऽपि सहैव ग्रहणं द्योतयति। अत एव सोमे पुरोडाशधानाद्यासादने दारुपात्रीनियमाऽभावः समञ्जसः। भूर्भुवः सुवः इत्येतावतैव पर्याप्ते यदाह एताभिर्व्याहृतीभिः[5] इति, अनेन संवत्सराद्यन्तयोरेव व्याहृतीभिरासादनञ्च पक्षान्तरं ब्राह्मणप्रतिपादित सूचयति। स्पष्टीकरिष्यति च इममेवार्थं दशाध्याय्याम्—अथ भूर्भुवः सुवः इत्यग्निहोत्रम् (बौ० श्रौ० ३।१७।१) इत्यादिना। अतः प्रतिदर्शपूर्णमासं व्याहृतीभिरासादनम् आद्यन्तयोरेव वेति पक्षद्वयमप्याचार्याऽभिमतमिति सिद्धम् ॥१६॥

मध्यतः पुरोडाशावासादयति दक्षिणतः शृतमुत्तरतो दधि ॥१७॥ अथैनं स्रुवमग्रेण स्रुचः पर्याहृत्य जुहूं प्रस्तरे सादयति—'स्योनो मे सीद

---

१. 'व्यर्वे' इति कौ० सं०।
२. 'चार्यौ विमुञ्चतो भक्षयन्नेव' इति कौ० सं०।
३. 'अनियम' इति वृ० कोशेऽपपाठः।
४. 'अथैनानि' इति कौ० सं०, वृ० कोशे च।
५. 'व्याहृतीभिः' इति नास्ति मद्र० सं०।

सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके । दिवि सीद पृथिव्या-मन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः' (तै० ब्रा० ३।७.६।१०) इति ॥१८॥ अथैनं यथाहृतं प्रतिपर्याहृत्य ध्रुवायामवदधाति—'ऋषभोऽसि शाक्वरो घृताचीनां सूनुः । प्रियेण नाम्ना प्रिये सदसि सीद' (तै० ब्रा० ३।७।६।१०) इति ॥१९॥

सा०—मध्यतः पुरोडाशावासादयति दक्षिणतः शृतमुत्तरतो दधि । वेदिमध्ये पुरोडाशाऽऽसादनम् । द्विवचनमविवक्षितम्, एकस्य बहूनां वा पुरोडाशानां वेदिमध्य एवाऽऽसादनात् । तत्राऽपि क्रमो निर्वापक्रमानुरोधेन । अत एवोपांशुयाजस्य चरुपक्षे त्वाग्नेयानन्तरं चर्वाऽऽसादनम् । एवं मध्यशब्दस्य वेदिमध्यत्वविवक्षायां दक्षिणतः शृतमुत्तरतो दधीति परस्पराऽपेक्षम् । तेन च दोहयोर्देवतायागक्रमानुगुण्येन पुरोडाशोत्तरभागाऽऽसादनपक्षोऽप्यविरुद्धः । तथा च सूत्रम्—अपरेण स्रुचः पुरोडाशावासादयति (आप० श्रौ० २।११।७) इति उत्तरौ दोहौ (आप० श्रौ० २।११।६) इति । यदा तु दक्षिणतः शृतमुत्तरतो दधीति उत्तर-वाक्यापेक्षया मध्यतः पुरोडाशावसादयतीति मध्यशब्दः सान्नाय्यमध्यवचनः, तदाऽभितो हविषां दक्षिणोत्तरत्वं दोहयोः । अस्मिन्नपि पक्षे सूत्रम्—दक्षिणस्यां श्रोण्यां शृतमासादयति, उत्तरस्यां दधि (आप० श्रौ० २।११।६) इति ॥१७॥ अथैनं स्रुवमग्रेण स्रुचः पर्या-हृत्य दक्षिणेन जुहूं प्रस्तरे सादयति—'स्योनो मे···सपत्नाः' इति । तदेतदासादनं स्रुवाऽऽज्यस्यैव संस्कारः सर्वहविःसाधारण्यात् । केचित्तु जुह्वादिस्रुगाज्यसंस्कारत्वमाहुः ॥१८॥ 'अथैनद्यथाहृतं प्रतिपर्याहृत्य ध्रुवायामवदधाति—'ऋषभोऽसि···सीद' इति । एनत्, स्रौवमाज्यं; ध्रुवायामवदधाति, आसिञ्चति । अस्य ध्रुवाऽऽज्यसंस्कारत्वमेव, न त्वाऽऽघारोपांशुयाजार्थता, अवभृथेष्ट्यामस्याभावेऽपि स्रौवाऽऽघारदर्शनात् । प्रकृतावुपांशुयाजस्य चरुपक्षे विकृतौ चोपांशुयाजरहितायामस्य स्रौवाज्याऽऽनयनस्योपलम्भात् ॥१९॥

अत्र प्रयोगक्रमः—

अध्वर्युर्दक्षिणेन हस्तेनाऽऽज्यस्थालीं सस्रुवां सव्येन दारुपात्रीं वेदमित्येतत्समादाय, प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य, पश्चाद्गार्हपत्यस्योपविश्य, हविषामुत्तरत उदगायतां दारुपात्रीं निधायाऽऽज्यस्थाल्याज्यात्स्रुवेणोपहृत्य पात्र्यां यावत्पुरोडाशमुदगपवर्गाणि पृथक्पृथक्सदनानि करोति—'स्योनं···मानः' इति । प्रतिसदनकरणं मन्त्रावृत्तिः । तूष्णीं धृष्टिमादाय दक्षिणस्य पुरोडाशस्याऽङ्गारानपोहति—'इदमहं···हामि' इति । स्थूलं भस्माऽपोह्य प्रकाशयति—'सूर्यज्योति···वाय' इति । वेदवातेन सूक्ष्मभूतं पुरोडाशस्थं भस्माऽपोह्याऽभिघारयति—'आप्यायतां···अग्नये जुष्टमभिघारयामि' इति । पुरोडाशमादत्ते—'शृत उत्स्नाति

१. 'अथैनं यथा०' इति कै० सं०, वृ० कोशे च ।

जनिता मतीनाम्' इति । आज्येनोपरिष्टात्सन्तर्पयति—'आर्द्रः···गोपाः' इति । अधस्ताद्धस्तेनोदानक्ति—'यस्त आत्मा···मङ्क्ष्व' इति । तूष्णीं पात्र्यां दक्षिणे सदन आसादयति। एवं पुरोडाशान्तरेष्वपि वृष्ट्याद्यादानाद्यासादनान्तं समानम् । यथादेवतमभिघारणम् ।

तूष्णीं शृतदधिनी अभिघार्योद्वास्य, पात्र्यां दक्षिणतः शृतम् उत्तरतो दध्यासाद्य पुनस्तूष्णीमभिधार्य सर्वतोऽभिघारयति—'यस्त आत्मा···मह्यम्' इति । प्रतिदोहं मन्त्रावृत्तिः । स्रुवेण कपालानि प्रत्यनक्ति—'इराभूतिः···मीत्' इति । प्रतिकपालं प्रतिगणं वा मन्त्रावृत्तिः । एकं द्वे त्रीणीत्यादिभिः सङ्ख्यायोद्वास्य जपति—'यानि घर्मे···विमुञ्चताम्' इति । यजमानोऽप्यनेनाऽभिमन्त्रयते । आज्येन स्रुवं पूरयित्वा पुरोडाशावन्तरेणाऽवधाय युगपत्सर्वाणि हवींषि अन्तर्वेदि जघनेन स्रुचः सादयति—'भूर्भुवः सुवः' इति । तत्काले यजमानोऽपि 'भूर्भुवः सुवः' इति जपति । स्रुचोऽग्रेण स्रुवं पर्याहृत्य दक्षिणेन जुहूं प्रस्तरे सादयति—'स्योनो मे सीद···मत्सपत्नाः' इति । यथाऽऽहृतं पुनराहृत्य ध्रुवायामवनयति—'ऋषभो···सीद' इति । यजमानः सर्वाणि हवींष्यभिमन्त्रयते—'यन्मे अग्ने···उपस्थे' इति । अभिमन्त्रणं दृष्ट्वा जपः इति ॥ इति प्रथमे प्रश्ने द्वादशोऽध्यायः ॥

॥ इति द्वादशोऽध्यायः समाप्तः ॥

—:०:—

# त्रयोदशोऽध्यायः

अथेध्मात्समिधमाददान आह—'अग्नये समिध्यमानायानुब्रूहिं' (तै० ब्रा० ३।३।७।१) इति ॥१॥

भव०—अथ होत्रामन्त्रणप्रवेशानन्तरम् । समिधः समिदाधानासम्भवात् । एकविंशतिमिति वचनात् कपाल इति होच्यते । सामिधेन्यङ्गात् प्रैषस्य । तासां च यदन्तरा तत्सदेवम् (तै० सं० २।५।११।१) इति वचनादन्तरा स्वर एव सहकारी प्रत्ययो वा ॥१॥

सा०—अथेध्मात्समिधमाददान आह—'अग्नये समिध्यमानायाऽनुब्रूहि' इति । होतारं प्रतीदं प्रैषवचनम् । नाऽसन्निहिते होतुर्युपपद्यते । तत्सन्निधानञ्च स्वकाल एवेति [1]तद्भावज्ञापनाय होतरेहीति प्रैषवचनम् अनाम्नातमप्यार्थिकं सिध्यति । अथवा दर्शपूर्णमासयोर्हविःष्वासन्नेषु होताऽऽमन्त्रितः (आश्व० श्रौ० १।१।४) इत्याश्वलायनवचनात्; हवींष्यासाद्य होतारमामन्त्रयते (बौ० श्रौ० ३।२७।१) इति वक्ष्यमाणाऽऽचार्यवचनाच्च होतरेहीति प्रैषवचनं स्वकाले विहितमेव । एवमाहूतो होता यदान्तरेण वेद्युत्करौ प्रत्यङ्मुख आगच्छति तदेवाऽध्वर्युः प्राङ्मुख इध्मसमीपं गच्छति । एतयोः कस्याऽन्तरङ्गत्वमिति विचार्यते। प्रयोजनं चाऽस्य विचारस्य होतुरन्तरङ्गत्वेऽध्वर्युं बहिःकृत्य होतुर्वेद्यव्यवधानेन प्रवेशः । अन्यथाऽध्वर्युणाऽन्तरितस्य प्रवेश इति । किं तावत्प्राप्तम्, यथाकर्म ऋत्विजः (बौ० ध० १।१५।१२) इति वचनाद्धोतुः कर्मेदानीमन्तरङ्गतार्थस्य प्रपदनस्य विहितत्वात् । 'पूर्वेणोत्करमपरेण प्रणीताः, इध्ममपरेणाऽप्रणीते' इत्याद्यनेकेतिकर्तव्यतासध्रीचीनस्य सर्वर्त्विजां नियतस्य तीर्थप्रपदनस्येदानीं होत्रा क्रियमाणतयाऽन्तरङ्गत्वम्, अध्वर्योस्त्विदानीं गमनस्य नैतादृशत्वम्, अतोऽध्वर्योरेव बहिर्भाव इति । इमामाशङ्कान्त्वयमेवाऽऽचार्यः कर्मान्ते निराकरोति—अथाऽध्वर्योश्च होतुश्च प्रपदनमन्तरेण वेद्युत्करौ प्रागावृत्तोऽध्वर्युः प्रपद्यते प्रत्यगावृत्तो होताऽध्वर्युरनन्तरोऽग्नेः स्यात् (बौ० श्रौ० २४।२८।१) । अग्नेरन्तरः, अनन्यव्यवहितः । अत्र व्यवधानाऽन्तरस्याऽप्रसक्तत्वात्, होत्रा व्यवधानं निषेधति । तेन होतुरेव बाह्यत्वमिति ।

एवमिध्मसमीपमागत्येध्मात्समिधमाददान आह—अग्नये समिध्यमानायाऽनुब्रूहि इति । समिध्यमानः सम्यग्दीप्यमानः, तस्मा अग्नयेऽनुब्रूहि इति । सामिधेनीनामग्निसमिन्धने विनियुक्तानामग्निदेवताकत्वादग्नय इत्युक्तम् । तूष्णीमिध्माञ्जनञ्च स्मार्तन्यायेनाऽत्राप्यविरुद्धत्वादनुष्ठेयम् । अस्य प्रैषवचनस्य सामिधेन्यङ्गत्वान्मध्यमः स्वरः, न [2]मन्द्रोच्चादयः । तथा

१, तज्ज्ञापनाय' इति वृ० कोशे ।   २. 'मन्द्रक्रुष्टादयः' इति वृ० कोशे ।

च वक्ष्यति हौत्रशेषप्रश्ने[1]—अथ वै भवति—'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति। अथ वै भवति—'यत्क्रौञ्चमन्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत्सदेवम् (तै० सं० २।५।११।१) इति। सप्त वाच स्थानानि भवन्ति। उपांशुध्वाननिमंदोपब्दिमन्मन्द्रमध्यमताराणीति। करणवदशब्दमनःप्रयोग उपांशु। अक्षरव्यञ्जनानामनुपलब्धिः ध्वानम्। उपलब्धिर्निमंदः। सशब्दःमुपब्दिमत्। उरसि मन्द्रम्। कण्ठे मध्यमम्। शिरसि तारम्। मन्द्रादुच्चतरस्थानेन सामिधेनीरनुब्रूयात्। समेन निहिततरेण निविदं दध्यात्। मन्द्रेण प्रागाज्यभागाभ्याम्। मध्यमेनाऽऽस्विष्टकृतः। स्विष्टकृच्चोच्चैनेति। अनुब्रूहीत्यत्र तु, उकारस्य प्लुतत्वम्। ब्रूहिप्रेष्यश्रौषडवौषडावहानामादेः (अष्टा० ८।२।९१) इति स्मरणात् ॥१॥

अथ यत्र होतुरभिजानाति—'प्र वो वाजा अभिद्यवः' (तै० ब्रा० ३।५।२।१) इति तत्प्रथमामभ्यादधाति ॥२॥ प्रणवेप्रणवेऽभ्यादधाति ॥३॥

भव०—अथ यत्रेति काललक्षण इति केचित्। ततश्चाङ्गाङ्गिभावात्तिस्र एव सामिधेनीरनूच्य (तै० ब्रा० १।५।९।४) इत्येवमादिषु न पञ्चदशैवाधेयाः। चतुर्विंशतिम् (तै० सं० ५।१।८।५) इत्येवमादिषु च। तथा च लिङ्गं यन्नेध्माबर्हिर्भवति न सामिधेनीरन्वाह (तै० ब्रा० १।६।६।५) इति। अपर आह सामिधेनीरेवमाज्या इध्मः प्रथमाहूतीनां हूयते इत्यस्मिन् पक्षेऽङ्गाङ्गिभावात्तिस्र एवेत्येवमादिषु पञ्चदशैवाधेयाः। चतुर्विंशतिमिति एवमादिषु तावन्त एवेध्माः। एवं सर्वेषां विनियोगवचनमुपपन्नं भवति। चतुर्विंशत्यादिषु च सामिधेनीशब्दः समञ्जसो भवति। इतरथासां काश्चिदेव सामिधेन्यो ग्रहणं[2] लक्षयेयुः। एतत् समानश्रुतौ च स्रुगादापनेन सम्बन्धदर्शनात्। लिङ्गञ्च प्रयाजादिवन्नित्यानुवादः स्यात्। तत् प्रथमामिति प्रणवे प्रणवे इत्येवमपि सिद्धे अर्धर्चार्थं ग्रहणमिति केचित्। ततश्च प्रथमायां षट् ॥२-३॥

सा०—अथ यत्र होतुरभिजानाति 'प्रवो वाजा अभिद्यवः' इति तत्प्रथमामभ्यादधाति। 'प्रवो वाजा अभिद्यव' इत्येतद्वाक्यम्। तत् तदा, प्रथमां समिधमभ्यादधाति, अत्राऽऽदधातीति चोदितत्वान्नोद्देशत्यागः ॥२॥ प्रणवेप्रणवेऽभ्यादधाति इति। ऋगवसाने यः प्रणवो विहितः, प्रणवेनैव चाऽभिसन्धानम् इति तस्मिन्प्रणवे। प्रणवे प्रणव इति [3]वीप्सया ऋचामेकादशत्वेऽपि, त्रिः प्रथमामन्वाह, त्रिरुत्तमाम् (तै० सं० २ ५।७।१) इति वचनात् पाञ्चदश्यसिद्धिः। अतश्च पञ्चदशसामिधेनीरनुब्रूयादिति प्राकरणिको विधिरनुसृतो भवति। यद्यपि सप्तदश चतुर्विंशत्यपरिमितादिपक्षाः प्रकृतावपि श्रूयन्ते, तथाऽपि साप्तदश्यस्य तावच्छाखान्तरेऽनारभ्याऽधीतत्वेनाऽऽनुमानिकप्रकृतिसम्बन्धात्, न पाञ्चदश्येन सह विकल्पा-

---

१. अयं ग्रन्थशेषो नोपलभ्यत इति श्रौतिनः।

२. 'ग्रहणं' इति पदं दुरन्वयं प्रतीयते।

२. 'वीप्साया' इति मद्र० स०।

हंता । सप्तदशाऽनुब्रूयाद्वैश्यस्य (तै० सं० २।५।१०।२) इत्युपसंहाराच्च । केचित् साप्तदश्यस्य विशेषविध्यनुरोधेन प्रकृतीष्टीतरविषयतामाहुः । तथा च सूत्रं—पञ्चदश सामिधेन्यो दर्शपूर्णमासयोः, सप्तदशेष्टि-पशुबन्धानां यत्र श्रूयन्ते (आप० श्रौ० २४।३।२९-३०) इति । अतः प्रकृतौ पाञ्चदश्यमेव नियतम् । तथा च वक्ष्यति हौत्रशेषप्रश्ने—प्रवो वाजा अभिद्यव इत्येकादश सामिधेन्यः समाम्नातास्तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सम्पद्यन्ते । अथ वै भवति—'पञ्चदशसामिधेनीरन्वाह । पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशः संवत्सर आप्यते । तासां त्रीणि च शतानि षष्टिश्चाऽक्षराणि । तावतीः संवत्सरस्य रात्रयः । अक्षरश एव संवत्सरमाप्नोतीति' ब्राह्मणम् इति । तत्रैव बहुयाजिनमधिकृत्याऽपरिमितपक्षोऽप्यभ्यनुज्ञातः—अथ वै भवति—'सर्वाणि छन्दाँस्यनुब्रूयात् बहुयाजिन' इति । सोमयाजिन इत्येवेदमुक्तं भवतीति ।

अत्रेदं विचार्यते—इध्माभ्याधानसामिधेन्यन्वाख्यानयोरङ्गाङ्गिभावो वा स्यात् अथवा शङ्खध्वानभोजनयोरिव काललक्षकत्वमात्राभिप्रायेण यत्र होतुरभिजानाति, प्रवो वाजा अभिद्यव इति वचनमिति । आद्येऽपि पक्षे किं 'सामिधेन्यश्चाख्यानस्याङ्गत्वं, प्राधान्यं वेति । यद्यङ्गता अष्टाचत्वारिंशतमनुब्रूयात्तिस्र एव सामिधेनीरनूच्येत्येवमादिष्वपि पञ्चदशैव समिधः स्युः, न ह्यङ्गानुविधायि प्रधानं भवतीति न्यायात् । अथ प्राधान्यं सामिधेनीसङ्ख्यानुविधानं समित्सङ्ख्यायां स्यात् प्रधानानुविधायित्वादङ्गस्येति । काललक्षकत्वमात्रे तु नाऽन्योन्यसङ्ख्यानुविधानम् । तथा च मन्त्रसङ्ख्यान्यूनतायामतिरिक्तानां समिधाममन्त्रकं हवनं स्यात् । समित्सङ्ख्यान्यूनतायां त्वतिरिक्तानामृचां सामिधेनीशब्दो गौणः स्यादिति । किं तावत्प्राप्तम् ? सामिधेनीवृद्धौ काष्ठानि विवर्धन्ते (आप० श्रौ० २।१२।५) इति वचनात् सामिधेनीनामेव प्राधान्यम् । श्रुत्यन्तरञ्च—ब्रह्मवादिनो वदन्ति प्रेध्ममुक्षति प्रभवतीध्मः प्रथम आहुतीनां हूयते कथमत्र याज्यानुवाक्ये स्तः, अग्नये समिध्यमानायाऽनुब्रूहीति पुरोनुवाक्या सामिधेन्यो वै याज्या वषट्कार 'अपवाकः प्रणवः इति । अन्या च श्रुतिः – अग्नये समिध्यमानायाऽनुब्रूहीति पुरोनुवाक्या, सामिधेन्यो याज्या वषट्कारः प्रणवः, इध्म आहुतिरिति ॥३॥

अथ यत्र होतुरभिजानाति—'समिद्धो अग्न आहुत' (तै० ब्रा० २।५।८।६) इति तदन्ततोऽभ्यादधाति ॥४॥ परि समिधं शिनष्टि ॥५॥ अथ यत्र होतुरभिजानाति—'आजुहोता दुवस्यत' (तै० ब्रा० ३।५।२।३) इति तदेतेन वेदेन त्रिराहवनीयमुपवाजयति ॥६॥ अनूक्तासु सामिधेनीषु

१. 'सामिधेन्यन्वाख्या०' इति वृ० कोशे ।
२. 'उपवाकः' इति वृ० कोशे ।

**ध्रुवाज्ध्रात् स्रुवेणोपहत्य वेदेनोपयम्य प्राजापत्यं तिर्यञ्चमाघारमाघारयति—'प्रजापतये स्वाहा' इति मनसा ॥७॥**

भव०—तदन्तत इति च तस्यान्तस्तदन्तस्तदन्तादित्यर्थः। तदन्त इति चान्ये। सर्वत्र प्रणवे प्रणवत एव तत्प्रथमामिति तत आरभ्येति तिस्रः प्रथमायामेव तदन्त इति च सर्वत्रोपपद्यते ॥४॥ आजुहोतेत्यत्र प्रणव इति निवृत्तम्। आरम्भकाल एव। एतेनेति सर्वत्र गुणभावं दर्शयति। तन्त्रत्वं च वेदस्य। कथं निवृत्तिः प्रणव इत्यस्य? 'अनूक्तास्विति' वचनात्। अन्यथा उपवाजयत्यथ ध्रुवाज्यादित्यवक्ष्यत्। स्रुवग्रहणमन्यनिवृत्त्यर्थं प्रसङ्गश्च यजान्वः (तै० सं० २।६।३।१) इत्यादि वचनात्। आज्यग्रहणं च तस्य साधारणत्वं दर्शयति। एतत् ज्ञापितं सर्वार्थं ध्रौवमिति प्रदर्शनार्थं यजान्व इति। एवञ्चोपांशुयाजादिषु ध्रौवं सिद्धं भवति। तथा च पत्नीसंयाजादिषु वचनमनुमास्यते। तूष्णीमिति करणव्यापारनिवृत्त्यर्थम्। मन्त्रस्तु मानसः प्राजापत्यमिति वचनात्। तस्मान्मनसा प्रजापतये (तै० सं० २।५।११।५) इति दर्शनात् ॥६,७॥

सा०—अथ यत्र होतुरभिजानाति—'समिद्धो अग्न आहुत' इति तदन्ततोऽभ्यादधाति। यदा होतुः सकाशादभिजानाति, अवगच्छति, समिद्धो अग्न इत्येताम् ऋचं तत् तदानीम्, अन्ततोऽभ्यादधाति। यच्चरममभ्याधानं तस्याऽयं काल इत्यर्थः ॥४॥ परि समिधं शिनष्टि। एकां समिधमवशेषयति। अयमर्थः—एकविंशतिः समिधस्तत्र त्रयः परिधयः, द्वे आघारसमिधौ, प्रतिप्रणवमाधीयमानेषु पञ्चदशस्वाजुहोता दुवस्यतेत्यारभ्योत्तरप्रणवद्वयाधीयमानयोः पूर्वप्रणव एवाऽऽधीयमानेन सहाऽऽधानम्, आजुहोतेत्यस्य कर्मान्तरावरुद्धत्वात् ॥५॥

एतदेवाह—अथ यत्र होतुरभिजानाति—'आजुहोता दुवस्यत' इति तदेतेनैव [1]वेदेन त्रिराहवनीयमुपवाजयति इति। वीजनमेव वाजनं, तदेतददृष्टार्थमेव न त्वग्निदीपनार्थं, त्रिरिति नियमात्। एवमपि यदि स्याददृष्टार्थता, अवभृथेष्ट्यामुदकोपवीजनं न स्यात्। माऽस्त्विति चेत्, सत्याषाढवचनविरोधः। उक्तं हि तेन ऽवभृथे—उदकमुपवाज्य (सत्या० श्रौ० ६।५) इति। अतो दृष्टार्थोपवीजनाऽपरुद्धत्वादाजुहोतेति मन्त्रस्य, तस्मात्प्रागेव समित्त्रयं सहैवाऽन्ततोऽभ्यादध्यात्। अथवा प्रणवे प्रणवेऽभ्याऽऽदधातीति सिद्धेऽपि तत्प्रथमामभ्यादधातीति वचनस्यैतत्प्रयोजनं, प्रवो वाजा इत्येतच्छ्रवणसमय एव प्रथमां समिधमादध्यात्। एतदपेक्षया द्वितीयां प्रणव एव। एवमावृत्तित्रयेऽपीति षट् समिधः। एतदुक्तं भवति—प्रवो वाजा अभिद्यव इत्येतस्यास्त्रिरावृत्तौ [2]'ऋगुपक्रम' एका समिदाधेया, तदन्ततः प्रणव एका, एवं समनन्तरमेव द्वितीयवारोपक्रमेऽपि एका, तदन्ततः प्रणव एका, एवं तृतीयपर्यायेऽपीति षट् समिधः। अथ वाऽस्यामेवार्धर्चाऽवसाने प्रणवे चेति षट् समिधः। अस्मिन्पक्षे अथ यत्र होतुरभिजानाति प्रवो वाजा अभिद्यव इत्येतत्प्रतीकोपादानपरमिति। अयं प्रथमायां

---

१. 'तदेतेन वेदन' इति कॅ० सं०। २. 'प्रागुपक्रम' इति वृ० कोशे।

षट्समित्पक्षो दामोदरस्वामिना प्रत्याख्यातः—'प्रथमायामृचि यदि षट्समिध आदधीत परिधिमेवैतं परिदधाति, यदत उर्ध्वमस्यादध्यादिति च मन्त्रप्रयोजनं स्यात् । तस्मादादित आरभ्य प्रणवे प्रणवेऽस्यादध्यात्' इति । अयमर्थः—चरमयोः प्रणवयोः सहाऽऽहितसमिद्वृद्ध्यर्थत्वम् । वीजनं त्वमन्त्रकं, काललक्षणार्थमेव अथ यत्र होतुरभिजानात्याजुहोतेति वचनमिति ॥६॥

अनूक्तासु सामिधेनीषु ध्रुवाज्यात्स्रुवेणोपहत्य वेदेनोपयम्य प्राजापत्यं तिर्यञ्चमाघारमाघारयति 'प्रजापतये स्वाहा' इति मनसा इति । सामिधेनीषु अनूक्तासु, अग्ने महाँ असीत्येवमन्तमुक्तासु, ध्रुवाज्यात्स्रुवेणोपहत्य आदाय । ध्रौवस्य सर्वार्थत्वे सिद्धेऽपि पुनर्ध्रुवाज्यग्रहणं क्वचिन्निवृत्त्यर्थम् । तथा च पुरस्तादुपरिष्टाच्च स्रुवाहुतिषु आगन्तुकप्रायश्चित्ताहुत्यादिषु च ध्रौवनिवृत्तिः सिद्धा भवति । स्रुवग्रहणमनादिष्टे स्रुचैव होमो यथा स्यादिति । तथा च कर्मान्ते—अनादिष्टं पात्रमपि तु यथैव[1] तद्भवत्यञ्जलिना जुहोति, शूर्पेण जुहोति, कृष्णाजिनपुटेन जुहोति, मध्यमेन पर्णेन जुहोति, अन्तमेन पर्णेन जुहोति, अर्कपर्णेन जुहोति, पर्णमयेन स्रुवेण जुहोति, औदुम्बरेण स्रुवेण जुहोति, अङ्गुष्ठाभ्यां जुहोति, विस्रंसिकाण्डाभ्यां[2] जुहोति, गोमृगकण्ठेन जुहोति, अश्वशफेन जुहोति, अयस्मयेन कमण्डलुना जुहोति, अनादिष्टे स्रुचैव होतव्यम् (बौ० श्रौ० २४।८।७-९) इति । प्राजापत्यं प्रजापतिदेवताकम् । मनसा मनोव्यापारेण मन्त्रमुच्चार्य । अनेन स प्रजापतिस्तूष्णीमाघारमाघारयत् (तै० सं० २।५।११।२) इति दर्शनेऽपि न मन्त्रनिवृत्तिः करणव्यापारनिवृत्तिरेव, तस्मान्मनसा प्रजापतये जुह्वति (तै० सं० २।५।११।५) इति दर्शनात् । तिर्यञ्चं, दक्षिणपरिधिमध्यमारभ्य सन्ततमोत्तरपरिधिमध्यमाघारमाघारयति । वेदेनोपयम्य, वेदमधरीकृत्य । तदेतददृष्टार्थमेव । द्वयो विशेषः—आघाराविति । सूत्रं बोधायनस्य । [3]अभिसृताविव व्यतिषक्ताविति शालीकिः (बौ० श्रौ० २०।१२) इति । आघारावभिसृतौ अभितः सृतौ, सर्वदिक्सम्बन्धिनौ । अनेन प्राञ्चौ तिर्यञ्चौ दक्षिणोत्तरपरिधिसन्धिमारभ्य यथाक्रममक्ष्णया च प्रसृतौ संगृहीतौ । व्यतिषक्ताविति शालीकिमतेन प्राजापत्यस्य दक्षिणपरिधिमध्यारम्भः, ऐन्द्रस्य च मध्यमपरिधिमध्यारम्भो यथोक्ता चाक्ष्णया प्रवृत्तिः संगृहीता ॥७॥

अथ संप्रैषमाह—'अग्नीदग्नींस्त्रिस्त्रिः संमृड्ढि' (तै० ब्रा० ३।३।७।३) इति ॥८॥ अथैष आग्नीध्र इध्मसंनहनानि स्फ्य उपसंगृह्य परिधीन्संमार्ष्टि त्रिर्मध्यमं त्रिर्दक्षिणार्ध्यं त्रिरुत्तरार्ध्यं त्रिराहवनीयमुपवाजयति—'अग्ने वाजविद्वाजं त्वाग्ने सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै

१. 'यथैतद्' इति कै० सं०, वृ० कोशे च ।
२. 'विस्रंसिकाकाण्डा०' इति कै० सं० ।
३. 'अभीषू इव व्यतिषक्तौ स्यातामिति शा०' इति कै० सं० ।

संमार्ज्म्यग्निमन्नादमन्नाद्याय' (तै० ब्रा० ३।७।६।१०) इति ॥९॥ अथाग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति—'भुवनमसि विप्रथस्वाग्ने यष्टरिदं नमः' (तै० सं० १।१।१२।१) इति ॥१०॥

भव०—अग्नीनिति बहुवचनम्, आहवनीयस्यैकत्वात्तदर्थं परिध्युपसंग्रहार्थम् ॥८॥ अञ्जलिः संपुटः नमः सम्बन्धात् ॥१०॥

सा०—अथ सम्प्रैषमाह—'अग्नीदग्नीँस्त्रिस्त्रिः संमृड्ढि' इति । अग्नीनिति बहुवचनं परिध्यपेक्षम्, तत्सन्निहितत्वात् परिधीनाम्, गङ्गाशब्देन तटवत् । द्वैधे विशेषः—सम्प्रैष इति । अग्नीदग्नीनिति बोधायनः । अग्निमग्नीदिति शालीकिः । अग्नीत्परिधींश्चाग्निंचेत्यौपमन्यवः (बौ० श्रौ० २०।१२) । शालीकिपक्षे अग्निशब्दो मुख्यः । तत्राऽग्नेरेव सम्मार्गो न परिधीनामिति । न च वाच्यम् अग्निमिति जात्यपेक्षया एकवचनमिति परिधीनामप्युपसङ्ग्रह इति, मुख्यलाक्षणिकयोरेकशब्दप्रवृत्तिनिमित्तैकजातिसमावेशायोगात् । न हि मञ्चत्वं पुरुषेषु समाविशत इति । तथात्वे लक्षणाऽभावप्रसङ्गादिति । अतः शालीकिपक्षेऽग्नेरेव संमार्ग इत्यौपमन्यवपक्षाद्भेदः ॥८॥ अथैष आग्नीध्र इध्मसन्नहनानि स्फ्य उपसङ्गृह्य परिधीन्संमार्ष्टि त्रिर्मध्यमं त्रिर्दक्षिणार्ध्यं त्रिरुत्तरार्ध्यम्। त्रिराहवनीयमुपवाजयति—'अग्ने वाज · दन्नाद्याय' इति । एषः, एवं प्रेषितः । आग्नीध्र इत्येतावतैव पर्याप्ते एष इति निर्देशः सम्प्रैषाऽनुविधानद्योतनाय । अत एवाऽनूबन्ध्यार्थमैत्रावरुण्यामिक्षायां सत्स्वपि परिधिषु प्रैषाऽभावान्न तत्सम्मार्गः । अवभृथेष्टयामसत्स्वपि परिधिषु प्रैषानुगुण्येन सम्मार्ग इति । स च परिधिषु मध्यमस्योदगपवर्गत्वेन, अन्यत्र प्रागपवर्गत्वेनेति विवेकः । तथा च सूत्रम्—'परिधीन् यथापरिहितम्[1] अन्वग्रं त्रिस्त्रिः सम्मृज्य' इति 'त्रिरग्निं प्राञ्चम्' (आप० श्रौ० २।१३।१) इति च ॥९॥ अथाऽग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति—'भुवनमसि···नमः' इति । अञ्जलिः सम्पुटितो नमस्कारविनियुक्तो गृह्यते मन्त्रलिङ्गानुरोधेन । मन्त्रलिङ्गेन त्वाहवनीयनमस्कारः प्रतीयते । तद्ब्राह्मणञ्च—'तस्मा एव नमस्करोति (तै० ब्रा० ३।३।७।६) इति । आहवनीयाऽञ्जलिं[2] करोति (भार० श्रौ० २।१३।१) इति भारद्वाजवचनाच्च । अत एवोक्तं प्राञ्चमिति । अनेनाऽञ्जलेराहवनीयाऽऽभिमुख्यमाह । अग्रेण जुहूपभृताविति देशनियमः ॥१०॥

अथादत्ते दक्षिणेन जुहूं—'जुह्वेह्यग्निस्त्वा सविता ह्वयति देवयज्यायै' (तै० सं० १।१।१२।१) इति ॥११॥ सव्येनोपभृतम्—'उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै' (तै० सं० १।१।१२।१) इति ॥१२॥ सव्येना-

१. 'यथापरिधितम्' इति मैसूर सं० ।
२. 'आहवनीयाङ्गुलिं' इत्यपपाठः मद्र० सं० ।

त्याक्रामञ्जपति—'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृणुतम्' (तै० सं० १।१।१२।१) इति ॥१३॥ स्थानं कल्पयते—'विष्णोः स्थानमसि' (तै० सं० १।१।१२।१) इति ॥१४॥

सा०—अथाऽऽदत्ते दक्षिणेन जुहूम्–'जुह्वे···यज्यायै' इति । दक्षिणेन, हस्तेनेति शेषः॥११॥ सव्येनोपभृतम्—'उपभृदेहि···यज्यायै' इति । सव्येनोपभृदादानविधानेन तस्या अधरीभावं द्योतयति । एवञ्च सर्वत्र जुहूपभृतोरुत्तराऽधरीभावः सिध्यति । तथा च सूत्रम्—उपभृति जुहूमभ्यादधाति मुखतोऽभिहृत्य मुखत उपाऽवहरति, सर्वत्रैवमभ्याधानोपाहरणे भवतः । न च संशिञ्जयति । नाभिदेशे च स्रुचौ धारयति (आप० श्रौ० २।१३।३-४) इति । संशिञ्जनं, परस्परसंयोगाच्छब्दकरणम् ॥१२॥ सव्येनाऽत्याक्रामञ्जपति—'अग्नाविष्णू···कृणुतम्' इति । सव्येन चरणेन वेदिं लङ्घयञ्जपति । अनेनोदगत्याक्रमणं दक्षिणेन चरणेनेति गम्यते । अत्राऽप्यत्याऽऽक्रमणदेशनियमः सौत्रोऽनुसन्धेयः अविरुद्धत्वात्—अग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवक्रामं प्रस्तरम् (आप० श्रौ० २।१३।५) इति । अनवक्राममिति णमुलाऽऽभीक्ष्ण्यस्य प्रतीतेः, सर्वेष्वपि गमनाऽऽगमनेष्वयमेव नियम इति दर्शयति । द्वैधे विशेषः— अत्याक्रमण इति । सव्येन प्रदास्यन्नत्याऽऽक्रामेत् । हुत्वाऽमुतो दक्षिणेनेति बोधायनः । दक्षिणेन प्रदास्यन्नत्याक्रामेत् । हुत्वाऽमुतः सव्येनेति शालीकिः (बौ० श्रौ० २०।१२) । प्रदास्यन् हविर्दातुमिच्छन् । अनेन दक्षिणाऽतिक्रमणमुपलक्षयति । अमुत इति अस्मात्स्थानादवधिभूतादुदगतिक्रमणमित्यर्थः ॥१३॥ स्थानं कल्पयते—'विष्णोः स्थानमसि' इति । '[1]तिष्ठत्यस्मिन्निति स्थानम् आहवनीयाद्दक्षिणप्रदेशः । अनेन तिष्ठता हवनं सूचयति । विशेषतश्चाऽऽघारे प्रह्वताऽपि निषिद्धा । यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याघारयेत् (तै० सं० २।५।११।७) इति दर्शनात् ॥१४॥

अन्वारब्धे यजमाने मध्यमे परिधौ संस्पर्श्यजुं माघारमघारयति संततं प्राञ्चमव्यच्छिन्दन्—'इत इन्द्रो अकृणोद्वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहा' (तै० सं० १।१।१२।१) इति ॥१५॥ 'बृहद्भाः' (तै० सं० १।१।१२।१) इति स्रुचमुद्गृह्णाति ॥१६॥ अथासंस्पर्शयन् स्रुचावुदङ्ङत्याक्रामञ्जपति—'पाहि माग्ने दुश्चरितादा मा सुचरिते भज' (तै० सं० १।१।१२।१) इति ॥१७॥ जुह्वा ध्रुवां समनक्ति—'मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम्' (तै० सं० १।१।१२।१) इति त्रिः ॥१८॥

---

१. 'तिष्ठन्त्यस्मि०' वृ० कोशे ।

भव०—सव्येनात्याक्रमणं दक्षिणेनोद्गत्याक्रमणार्थम्। संततग्रहणमविच्छेदार्थम्। अविच्छेदवचनं विच्छेदेऽपि तत एवारम्भे संतत एव स्यात् तन्निवृत्त्यर्थम् ॥१५॥ ध्रुवाज्यं त्रिरभिघारयति। सं ज्योतिषा ज्योतिः (तै० सं० १।१।१२।१) इति लिङ्गात् ॥१८॥

सा०—अन्वारब्धे यजमाने मध्यमे परिधौ संस्पर्श्यर्जुमाघारमाघारयति सन्ततं प्राञ्चमव्यवच्छिन्दन्—'इत इन्द्रो...इन्द्रावान्त्स्वाहा' इति। अन्वारब्धे यजमाने, कर्तरि निष्ठा। यजमाने, अन्वारम्भकर्तरि। आरम्भ एवाऽन्वारम्भः स्पर्शः। समन्वारब्धे आधारयतीत्यन्वयः। अत्राऽन्वारम्भणकर्मताऽध्वर्योः स्रुच्याज्यस्य वा स्यात्, अविशेषोपादानात्। अन्तरङ्गत्वात्तावदाज्यस्यैव। तथा च सूत्रम्—स्रुच्यमन्वारभ्य (आप० श्रौ० ४।९।५) इति। एवञ्च सति यत्र विशेषोपादानं तत्र तस्यैव संस्पर्शः। तथा स्रुचः अभिमृशति (बौ० श्रौ० १।१३।२२) इति, पशोरवदानानि संस्पृशति (बौ० श्रौ० ३।९।१७) इति, तं निःसर्पन्तमन्वारभते (बौ० श्रौ० ७।७।२४) इति च। यत्र त्वन्वारब्धे यजमाने स्वाहेत्यादिषु न विशेषोपादानमस्ति, तत्राऽन्तरङ्गत्वाद्धविःसंस्पर्शः। सौत्रो वा विशेषोऽनुसन्धेय इति। मध्यमे परिधाविति पाठः, न तु परिधिसन्धाविति, प्राञ्चमित्यनेनाऽनन्वयात्। ऋजुम् अवक्रम्। सन्ततमित्यनेनैव सिद्धे यदुक्तमव्यवच्छिन्दन्निति तेन व्यवच्छिद्याऽपि विच्छेदस्थानात्सान्तत्यं निवारयति। अव्यवच्छिन्दन्नित्येतावतैवाऽलमिति चेत्सत्यम्। ब्राह्मणानुसारेण सन्ततत्वमनूद्य तस्यैवोपव्याख्यानत्वादिति ॥१५॥ 'बृहद्भाः' इति स्रुचमुद्गृह्णाति। उद्ग्रहणम् उद्धृत्य ग्रहणम्। एतच्चाऽदृष्टार्थम्—सुवर्गो वं लोको बृहद्भाः (तै० ब्रा० ३।३।७।९) इत्यर्थवादात् ॥१६॥ अथासंस्पर्शयन्स्रुचावुदङ्ङत्याक्रामञ्जपति—'पाहि माग्ने...भज' इति। स्रुचौ जुहूपभृतौ। असंस्पर्शयन्नित्यनेन यत्र 'संस्पर्श्योदङ्ङत्याक्रमण तत्र मन्त्राऽभावं द्योतयति। अथवा प्राथमिकानामेवाऽऽक्रमणप्रत्याक्रमणस्थानकल्पनानां समन्त्रकत्वं, नाऽन्येषामिति नियमः। उपसदादिषु तु विशेषवचनात् प्राथमिकेऽपि अमन्त्रत्वसिद्धिः। तथा च सूत्रम्—एते एवाऽऽक्रमणप्रत्याक्रमणे मन्त्रवती भवतः (आप० श्रौ० २।१४।१०) इति। एते एव, आदिभूते एव। अनेन स्थानकल्पनस्याऽप्यमन्त्रकत्वं द्योतयति, आदित्वाऽविशेषात् ॥१६॥ जुह्वा ध्रुवां समनक्ति—'मखस्य शिरो...रङ्क्ताम्' इति त्रिः। जुह्वा करणभूतया ध्रुवामिति तत्स्थमाज्यं लक्षयति। तन्मन्त्रे ज्योतिःसंशब्दनात्—ज्योतिषा ज्योतिरङ्क्तामिति। अत्राऽनक्तीति वचनाद्बिन्दुमात्रप्रक्षेपः, न तु धारारूपः, तथात्वे त्ववनयतीति ब्रूयात्, अभिघारयतीति वा। अतस्तदतिरिक्तमञ्जनं बिन्दुमात्रसम्पाद्यमिति गम्यते ॥१८॥

अथ यथायतनं स्रुचौ सादयित्वा प्रवरं प्रवृणोते ॥१९॥ उत्कर इध्मसंनहनानि स्फ्य उपसंगृह्य पृष्ठमाग्नीध्रोऽनूपाश्लिष्यति ॥२०॥ अथाश्रावयति—'ओ श्रावयास्तु श्रौषडग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकि-

१. 'संस्पृश्यो०' इति वृ० कोशे।

त्वान्मनुष्वद्भरतवदमुवदमुवद्ब्रह्मण्वदेह वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार' इति 'असौ मानुष' होतुर्नाम गृह्णाति ॥२१॥ उपोत्थाय होता विमुञ्चति ॥२२॥

सा०—अथ यथाऽऽयतनं स्रुचौ सादयित्वा। यथाऽऽयतनं, स्थानमनतिक्रम्य। प्रवरं प्रवृणीते। उत्कर इध्मसन्नहनानि स्फ्य उपसङ्गृह्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यति। अथाऽऽश्रावयति—'ओ श्रावय, अस्तु श्रौषट्, अग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवद्ब्रह्मण्वदेह वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारः'इत्यसौ मानुषः इति होतुर्नाम गृह्णाति इति। प्रवर आर्षेयः, गोत्रप्रवर्तकानामृषीणां सन्तत्यविच्छेदेन सम्बन्धः, तं वृणीते। वरणं नाम देवेज्यासम्बन्धप्रार्थनम्। यजमानविषये तु तत्सम्बन्धप्रकाशनम्। तथा चात्राऽऽर्षेयवरणं होतृवरणमित्युभयमङ्गाङ्गिभावेन वा पृथक्प्राधान्येन वाऽनुष्ठेयमं कध्येनोच्यते। होतृवरणञ्च द्विरूपं, दैवहोतृवरणं मानुषहोतृवरणमिति। तत्राऽग्निर्देवो होतेत्यादिना दैवहोतृवरणम्, असौ मानुष इति प्रकृतहोतुर्नामग्रहणं मानुषवरणमिति—दैवञ्च मानुषञ्च होतारौ वृत्वा (आप० श्रौ० ७।२४।५) इति सूत्रोक्तेः। द्वैधे विशेषः—प्रवरं इति। सूत्रं शालीकेः। अत्रो ह स्माऽऽह बोधायन उत्कर ऊर्ध्वाग्रं स्फ्यं निहत्य प्रवरं प्रवृणीयादत्र[1] चैव स्फ्यमुदस्येदुपरिष्टाद्वोपस्पृशेदिति[2]। होतुर्वरण इति। स ह स्माऽऽह बोधायनो यद्यस्य पिता वाऽऽचार्यो वा ज्यायान्वा होता स्यादुपांश्वेतेषां गुरूणां नामानि गृह्णीयादिति। उच्चैरेव होतुर्नाम गृह्णीयादिति शालीकिः (बौ० श्रौ० २०।१२)। अत्रैव काले, वरणसमनन्तरकालम् एव स्फ्यमुदस्येत्, निरस्येत्। उपरिष्टाद्वा, यदा होता सन्मार्गोऽसीत्यादिनाऽस्यात्मं मुखं इध्मसन्नहनाग्रेण निमार्ष्टि, तदुत्तरकालमित्यर्थः। पित्रादिषु गुरुषु होतृषु सत्सु तेषां नामानि नीचैर्गृह्णीयादित्येकः पक्षः। शालीकिपक्षे तु—यथाक्रमं ऋत्विजः (बौ० ध० १।१५।१२) इति वचनादध्वर्योरन्तरङ्गतया गुरूणामपि होतॄणां कर्मकाले नामग्रहणमविरुद्धमित्युच्चैष्ट्वमविरुद्धं नामग्रहणस्य। अन्यथा यजेत्यादिष्वेकवचनपक्षोऽप्यनुपपन्नः स्यात्।

कर्मान्ते त्वन्यद्विचारितम्—आर्षेयमसम्प्रजानानस्य प्रवरं ब्रूहीति, 'मनुष्वद्भरतवन्मनुवत्' इत्येव ब्रूयात्। विज्ञायते हि[3] 'मानव्यो हि प्रजा' इति ब्राह्मणम्। पुरोहितप्रवरो वा राज्ञोऽथाऽप्रज्ञातबन्धुराचार्याऽऽमुष्यायणमनुब्रवीत। आचार्यप्रवरमु हैव प्रवृणीत। अथ होतारं प्रवरयेत् (बौ० श्रौ० २४।२८ ४-७) इति। पूर्वपक्षप्रश्नः—आर्षेयमसंप्रजानानस्य प्रवरं ब्रूहीति। उत्तरम्—मनुष्वदित्यादि। तत्र प्रमाणोपन्यासः—विज्ञायत इत्यादि। अप्रज्ञातबन्धुः, अपरिज्ञातपित्रादिः। आचार्याऽऽमुष्यायणम्—आचार्यस्य पितृस्थानीयत्वेन तत्सम्बन्धं ब्रूयादमुष्य पुत्र इत्यादिषु। अविज्ञातप्रवरस्याऽयाज्यत्वमाशङ्क्य

---

१. '०दत्रैव च' इति कौ० सं०।
२. '०रिष्टाच्चोप०' इति कौ० सं०।
३. नास्ति कौ० सं०।

होत्रशेषप्रश्ने परिहृतम्—'अत्रार्षेयं वृणीत ऋषीणां हि देवाः पुरुषमनुबुध्यन्त इत्यृषिरेणै-वाऽऽर्षेयं वृणीत। अथ वै भवति—आर्षेयं वृणीते, बन्धोरेव नैत्यथो सन्तत्यै। परस्तादर्वाचो वृणीते तस्मात्परस्तादर्वाञ्चो मनुष्यान्पितरोनुप्रपिपते' इति ब्राह्मणम्। इतः पराचोऽध्वर्युर्वृणीते अमुतोऽर्वाचो होतेति ब्राह्मणम्। एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते न पञ्चाऽतिप्रवृणीत इति ब्राह्मणम्। एकं वृणीते द्वौ वृणीते त्रीन्वृणीते मन्त्रकृतो वृणीते यथर्षि मन्त्रकृतो वृणीत इति ब्राह्मणम्। आर्षेय-मविद्वानयाज्य इति ब्राह्मणम्। अप्याचार्यस्याऽऽर्षेयं विद्वान्याज्य इति ब्राह्मणम्।

इतः पराचोऽध्वर्युर्वृणीत इति सन्निहितमृषिं निर्दिशति। पराच इति प्राक्तनान्। अयमर्थः—अध्वर्युः प्रातिलोम्येन, तद्यथा भरद्वाजवद् बृहस्पतिवदङ्गिरोवदिति। अमुतोऽर्वाचो होतेत्यमुत इति व्यवहितकूटस्थनिर्देश इति। अर्वाच इति ततोऽवरान्परस्तादारभ्येत्यर्थः। तद्यथा—आङ्गिरसबार्हस्पत्यभारद्वाजेति। यथर्षि मन्त्रकृतो वृणीत इति सङ्ग्रहवाक्यम्। तस्यैवोपव्याख्यानम् एकं वृणीत इत्यादि। तद्यथा—शौनकेति होता, शुनकवदित्यध्वर्युः, वासिष्ठेति होता, वसिष्ठवदित्यध्वर्युरित्यादि। तथा वैश्वामित्रपौरणेति होता, पुरणवद्विश्वा-मित्रवदित्यध्वर्युः। आर्षेयाः सूत्रे उदाहृता भरद्वाजादयः। पञ्चार्षेयास्त्वाङ्गिरसबार्हस्पत्यभार-द्वाजसैन्यगार्ग्येति होता, गर्गवत्सिनिवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युरिति। न चतुरो वृणीते न पञ्चाऽतिप्रवृणीत इत्येतद् द्व्यामुष्यायणविषयम्। द्व्यामुष्यायणस्य गोत्रद्वयस्याऽपि द्व्यार्षेयत्वे चतुर्णां वरणप्रसक्तिः। त्र्यार्षेयत्वे तु षण्णाम्। पञ्चार्षेयत्वे द्व्यार्षेयादिसन्निपाते सप्तादीनामपि वरणप्रसक्तिः। तन्निषेधार्थमुक्तम्—न पञ्चातिप्रवृणीत इति। तत्र द्व्यामुष्या-यणस्य जन्मगोत्राद् द्वयोर्वरणं प्रविष्टगोत्रादेकस्य, जन्मगोत्रस्यैकार्षेयत्वे तु प्रविष्टगोत्रादेकस्यैव वरणमिति। एवं याज्यस्य द्व्यामुष्यायणत्वेऽपि यागाधिकार उक्तः। एवमृत्विजामपि द्व्यामु-ष्यायणानां स्वीकारोऽनिवृत्तः। तथा च वक्ष्यति—द्विप्रवरान्परिहाप्येति। अयाज्ययाजने हि याजकस्यैव प्रत्यवायः, यष्टुरभ्युदय एव। याज्यवैगुण्ये तु नाऽपूर्वसिद्धिः। अत एवाऽयाज्ययाजने प्रायश्चित्ताम्नानमुपपद्यते। तथा च धर्मे—

अथ खल्वयं पुरुषो याप्येन कर्मणा [लिप्यते] मिथ्या वा चरत्ययाज्यं वा याजयत्यप्रतिग्राह्यस्य वा प्रतिगृह्णात्यनाश्यान्नस्य वाऽन्नमश्नाति अचरणीयेन वा चरति। तत्र प्रायश्चित्तं कुर्या३न्न कुर्या३दिति। न हि कर्म क्षीयत इति। 'अपि तु कुर्यादेव (बौ० ध० ३।१०।२-६) इति।

अयं पुरुष इति क्षेत्रज्ञं निर्दिशति, परमात्मनः कर्मलेपशङ्काऽनुदयात्। तस्याऽविद्यमानत्वे वा सुतरां क्षेत्रज्ञ एवैतद्विचारविषयः। खल्वित्यवधारणे। याप्येन कर्मणाऽयं पुरुष एव लिप्यते नान्यः परमात्मा। तदभावपक्षे त्वयं पुरुषो लिप्यत एव, न तु कर्तृत्वाऽभिधानत्यागादिना न लिप्यत इति[2]। याप्यं कर्म, पापरूपम्। तदेव विवृणोति—मिथ्या वाऽऽचरतीत्यादिना।

---

१. 'कुर्यात्त्वेव' इति बना० सं०।
२. 'इति संभवतीत्यर्थः' इति बृ० कोशे।

मिथ्याचरणं नाम पुण्यव्यपदेशेन पापाचरणम् । यथाऽग्निष्टोम एव वर्तुलसुराचमसादिनाऽभिचारानुष्ठानादि । अथाऽयाज्यं वा याजयति, अयाज्यशब्दोऽयं यागप्रसक्तिमन्तं सदोषमाह । तथैवाऽप्रतिग्राह्योऽपि सदोषो दाता । अनाद्यान्नः अभोज्यान्नः । एवमादिषु यष्टुर्भोजयितुरभ्युदय एव । याजकादिस्तु प्रत्यवायभाग्भवति । उपलक्षणञ्चैतत् सर्वेषामपि पापकर्मणामित्याह—अचरणीयेन वा चरतीति । वा शब्दाद्विहिताऽननुष्ठानोपसङ्ग्रहः । तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसत इति शेषः । विचार्यमाणानाम् (अष्टा० ८।२।९७) इति प्लुतः । पूर्वपक्ष्याह—नहि कर्म क्षीयत इति, प्रारब्धकर्मणां भोगादेव क्षय इति श्रुतेः । स्मृतिरपि—

नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ इति ।

सिद्धान्त्याह—अपि तु कुर्यादेवेति । तु शब्दः पूर्वपक्षं व्यावर्तयति । भोगप्रक्षयः तत्प्रायश्चित्तादपि । प्रक्षयस्याऽऽगमैकगम्यत्वात् । लोके च मरणफलस्य सर्पदंशनादिकर्मणो मणिमन्त्रादिना निष्फलीकरणदर्शनात् । अतः पापस्य कर्मणः प्रायश्चित्तेनाऽपि, विना नरकोप २ न प्रक्षय इति । अलमतिप्रसङ्गेन । प्रकृतमनुसरामः ।

उत्कर इध्मसन्नहनानि स्फ्य उपसङ्गृह्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यति । इध्मसन्नहनानि स्फ्य आधारभूते उपसङ्गृह्याऽध्वर्युरुत्करदेशे तिष्ठति । तस्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यति, उपश्लिष्यन्निवाऽव्यवहितस्तिष्ठतीत्यर्थः । अथाऽऽश्रावयति इति, अनेनाऽऽश्रावणप्रत्याऽऽश्रावणयोरुभयोरप्युपसङ्ग्रहः । एतदेवोदाहरति—'ओ श्रावय, अस्तु श्रौषट्' इति । हौत्रशेषप्रश्ने प्लुतस्थानानि दर्शितानि । तदनुरोधेन प्लावयेत्—अथ वै भवति—आश्रावणे प्रथमं द्वितीयं चाक्षरं प्लवते । प्रत्याश्रावणे तृतीयम् । संयजनेऽप्याद्यं वर्धयेत् । याज्यान्तान्प्लावयेत् । प्लुतादिना वषट्कारेण वौषट्कारेण त्रिमात्रेणोरःकण्ठञ्चाऽभिप्लवते, उच्चैस्तरां वा वषट्कुर्यादिति । अत्राऽक्षरशब्दः स्वरवचनः, व्यञ्जनस्य प्लुताऽभावात् । संयजने, यजेत्यस्मिन्वचनेऽप्याद्यं स्वरं वर्धयेत्, द्विमात्रत्वेनोच्चारयेत्, वृद्धेर्द्विमात्रत्वनियमात् । वृद्धिरादैच् (अष्टा० १।१।१) इत्यत्र तपरकरणेन तत्कालग्रहणात्, तः परो यस्मात्तादपि परस्तपर इति च वृद्धिसंज्ञकानां त्रयाणामपि स्वराणां द्विमात्रत्वनियमात् । प्लुतादिना वषट्कारेणेत्यस्यैवोपव्याख्यानं-वौषट्कारेण त्रिमात्रेणेति । अनेन प्लुतस्य सर्वत्र त्रिमात्रत्वं द्योतयति ॥१९-२१॥ उपोत्थाय होता विमुञ्चति । स्वकर्म कृत्वा होताऽध्वर्युं विमुञ्चति ॥२२॥

विमुक्तोऽध्वर्युरुपविशति ॥२३॥ प्रसवमाकाङ्क्षन्नास्ते ॥२४॥

भव०—अध्वर्युरुपविशति । प्रसवमाकाङ्क्षन्होतेति प्रथमानिर्दिष्ट आस्त इत्यनेन सम्बध्यते । स एवं चोपविष्ट आप्रसवादास्ते । प्रसवश्च घृतवतीमिति ॥२३-२४॥

॥ इति त्रयोदशोऽध्यायः समाप्तः ॥

सा०—तेन होत्रा विमुक्तोऽध्वर्युरुपविशति। प्रसवमाकाङ्क्षन्नाऽऽस्ते। प्रसवोऽभ्यनुज्ञानम्॥२३,२४॥

अत्र प्रयोगक्रमः—

उत्तरस्या वेदिश्रोणेरुत्तरतस्तृणानि संस्तीर्य 'होतरेहि' इत्यध्वर्युणाऽऽहूते होतरि यथोक्तनियमेन तीर्थप्रपदनं कुर्वाणेऽध्वर्युमन्तरङ्गीकृत्य होतरि होतृषदने तिष्ठति सति इध्मात् समिधमाददानोऽध्वर्युः 'अग्नये समिध्यमानायाऽनुब्रूहि' इति ब्रूयात्। ब्रह्मणोऽपि वाग्यमनमाप्रवरप्रवरणात्। यदा होता—'प्रवो वाजा' इति ब्रूयात्तदा प्रथमां समिधमभ्यादधाति। अत ऊर्ध्वं प्रणवे प्रणवेऽभ्यादधाति। यजमान इध्ममभ्याधीयमानमनुमन्त्रयते—'उच्छुष्मो अग्ने···मन्द्रजिह्व' इति। यदा होता 'समिद्धो अग्न' इति ब्रूयात्तदा एकामवशिष्य समित्त्रयप्रक्षेपः। यदा होता 'आजुहोत' इति ब्रूयात्तदाऽध्वर्युरेतेन वेदेन त्रिराहवनीयमुपवाजयति। अनूक्तासु सामिधेनीषु 'अग्ने महाँ असि' इत्युक्ते ध्रुवाज्यात्स्रुवेणोपहत्य वेदेनोपयम्य प्राजापत्यं तिर्यञ्चमाघारमाघारयति दक्षिणपरिधिमध्यमारभ्य सन्ततमोत्तरपरिधिमध्यात् 'प्रजापतये स्वाहा' इति मनसा। आघारमाघार्यमाणमनुमन्त्रयते यष्टा—'मनोऽसि प्राजापत्यं मनसा माभूतेनाऽऽविश' इति। 'प्रजापतय इदं न मम' इति। यजमानो होतृप्रवरमनुमन्त्रयते—'अमर्त्यस्य · सुवीर्याय' इति · याजमानपाठक्रमात् स्रौवाघारात्पूर्वं होतृप्रवरानुमन्त्रणमिति केचित्।

अध्वर्युराग्नीध्रं सम्प्रेष्यति—अग्नीदग्नींस्त्रिस्त्रिः सम्मृड्ढि' इति। आग्नीध्रः इध्मसन्नहनैः सह स्फ्यं गृहीत्वा परिधीन्त्सम्मार्ष्टि—मध्यमपरिधिमूलमारभ्याऽग्रात्त्रिरुदगपवर्गं, प्राङ्मुख उपविश्य सम्मार्ष्टि। अग्रेणाऽऽहवनीयं परीत्य, ब्रह्माऽऽहवनीययोर्मध्य उदङ्मुख उपविश्य दक्षिणपरिधिमूलमारभ्याऽग्रात् त्रिः प्रागपवर्गं सम्मार्ष्टि। यथागतमेत्याऽऽहवनीयस्योत्तरत उपविश्य दक्षिणामुख उत्तरपरिधिमूलमारभ्याग्रात् त्रिः प्रागपवर्गं सम्मार्ष्टि। आहवनीयस्य पश्चिमोत्तरदेशे प्राङ्मुख उपविश्याहवनीयं स्फ्याग्रेण प्रागपवर्गं त्रिः सम्मार्ष्टि—'अग्ने वाजजित्··· अन्नाद्याय' इति। अध्वर्युर्वेदेरुत्तरत उपविश्य, जुहूपभृतोरग्रेण प्राङ्मुखमञ्जलिपुटं करोति—'भुवनमसि···नमः' इति। आदत्ते दक्षिणेन हस्तेन जुहूं—'जुह्वेहि··· यज्यायै' इति। सव्येन हस्तेनोपभृतमादत्ते—'उपभृदेहि · यज्यायै' इति। सव्येन पादेन स्रुचोऽग्रेण मध्यमं परिधिमपरेण प्रस्तरमनवक्रम्य दक्षिणाऽत्याक्रामन् जपति—'अग्नाविष्णू ···क्रमतम्' इति। आहवनीयस्य दक्षिणत उदङ्मुख ऊर्ध्वस्तिष्ठति—'विष्णोः स्थानमसि' इति। यजमानो जुहूगतमाज्यमन्वारभते।

अध्वर्युर्जौहवाज्येन मध्यमपरिधिमध्यमारभ्य प्राञ्चमविच्छिन्दन्नवक्रमाघारयति इध्मकाष्ठाग्रपर्यन्तं—'इत इन्द्रो···वान्स्वाहा' इति। यजमान आघार्यमाणमाघारमनुमन्त्रयते—'वागस्यैन्द्री ··विश' इति, 'इन्द्रायेदं' इति। अध्वर्युः 'बृहद्भाः' इति जुहूमुद्गृह्णाति। जुहूपभृतावसंस्पर्शयन्दक्षिणेन पादेनोदङ्ङत्याक्रामन् जपति—'पाहि माऽग्ने···भज' इति।

स्रु च्याघारेऽत्याक्रमणप्रत्याक्रमणस्थानकल्पनानामेव समन्त्रकत्वम्। जुह्वाज्यबिन्दुना ध्रु वाज्यं त्रिः समनक्ति—'मखस्य ··रङ्क्ताम्' इति। यथाऽऽयतनं जुहूपभृतौ दक्षिणेन हस्तेनाऽऽसादयति, दक्षिणं प्रतीयादनादेश (आश्व० श्रौ० १।१।१२-१३) इति वचनात्। इध्मसन्नहनैः सह स्फ्यं गृहीत्वोत्करदेश ऊर्ध्वाग्रं स्तब्ध्वाऽध्वर्युस्तिष्ठति। तस्य पश्चाद्भागमनूपश्लिष्यन्निवाऽऽग्नीध्रस्तिष्ठति। अध्वर्युः—'ओ श्रावय' इत्याग्नीध्रं ब्रूयात्। आग्नीध्रः 'अस्तु श्रौषट्' इति प्रतिब्रूयात्। अध्वर्युः प्रवरं प्रवृणीते—'अग्निर्देवो होता देवान्यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरतवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवद्ब्रह्मण्वदेहवक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितारो यज्ञशर्मा मानुषः' इति होतुर्नाम प्रथमान्तं गृह्णाति। होत्रा विमुक्तोऽध्वर्युः स्फ्यं निधाय होतुरनुज्ञां काङ्क्षन्नास्ते इति ॥ इति प्रथमे प्रश्ने त्रयोदशोऽध्यायः ॥

॥ इति त्रयोदशोऽध्यायः समाप्तः ॥

—:०:—

# चतुर्दशोऽध्यायः

अथ यत्र होतुरभिजानाति—'घृतवतीमध्वर्यो स्रुचमास्यस्व' (तै० ब्रा० ३।५।४।१) इति तज्जुहूपभृतावादायात्याक्रम्याश्राव्याह—'समिधो यजेति' (श० ब्रा० १।५।३।८) ॥१॥ वषट्कृते जुहोति—'यज यजेति' (श० ब्रा० १।५।३।८) ॥२॥ चतुर्थं यक्ष्यन्नर्धमौपभृतस्याज्यस्य जुह्वां समानयते ॥३॥ पञ्च प्रयाजानिष्ट्वोदङ्कृत्याक्रम्य संस्रावेणानुपूर्वं हवींष्यभिघारयति ध्रुवामेवाग्रेऽथ दक्षिणं पुरोडाशमथ ध्रुवामथोत्तरं पुरोडाशमथ शृतमथ दध्युपभृतमन्ततः ॥४॥

भव०—यत्र यदा तत्तदा ॥१॥ अभिक्रामं जुहोतीति सर्वेणाभिक्रामेत् (बौ० श्रौ० २०।१३) इत्येवमादयो विकल्पा इह द्रष्टव्याः। छन्दसा ब्राह्मणेन (बौ० श्रौ० २४।१।१) इति गतत्वादिहावचनमस्मादेव विकल्प इत्यपरे। अवान्तरप्रकरणात् प्रयोजनविषयमेवैतत् समाश्रयणीयम्। द्वितीयध्रुवाभिघारणमुपांशुयाजार्थम्। प्रागाज्यभागाभ्यां मन्द्रः प्राक् स्विष्टकृतो मध्यम ऊर्ध्वं क्रुष्टः ॥४॥

सा०—अथ यत्र होतुरभिजानाति—'घृतवतीमध्वर्यो स्रुचमास्यस्व' इति तज्जुहूपभृतावादायाऽत्याक्रम्याऽऽश्राव्याऽऽह—'समिधो यज' इति। वषट्कृते जुहोति 'यज, यज' इति। चतुर्थं यक्ष्यन्नर्धमौपभृतस्याऽऽज्यस्य जुह्वां समानयते। यत्र यस्मिन्काले होतुः सकाशात् घृतवतीमित्यादिकं वाक्यं शृणोति न चाऽत्र काललक्षणा, अपि त्वङ्गाङ्गिभावः [1]मन्त्रस्रुगादापनयोर्मन्त्रलिङ्गानुरोधात्। तत्र स्रुचमित्येकत्वमविवक्षितम्, जुहूपभृतावादायेति द्वयोरादानविधानात्। अत्याक्रमणे पूर्वोक्त एव धर्मो मन्त्रवर्जितः। आश्राव्याह इत्यत्र प्रत्याश्रावित इति शेषः। द्वितीयादिप्रयाजेषु यज यज इति वचनात्तत्तत्प्रयाजवाचकशब्दाभिधाननिवृत्तिः, न त्वाश्रावणप्रत्याश्रावणयोरपि। समिधो यजेति वाक्यान्तरितत्वात्, एतद्वाक्यस्यैकदेशरूपत्वाच्च यज यजेत्यस्य [2]वाक्यैकदेशान्तरस्थानीयस्यैव निवृत्तिः। चतुर्थं[3] यक्ष्यन्निति वचनाच्चतुर्थपञ्चमयोरेवौपभृदाज्यार्धेन हवने सति अवशिष्टजौहवाज्येन हविरभिघारणं विधास्यमानमुपपद्यते ॥१-३॥

---

१. 'मन्त्रः स्रुगादापन०' इति मद्र० सं०, 'मन्त्रः स्रुगादान०' इति वृ० कोशे।
२. 'तदेकदेशा०' इति वृ० कोशे।
३. कोशेषु 'चतुर्थं प्रयाजं यक्ष्य०' इति।

पञ्च प्रयाजानिष्ट्वेति । द्वैधे विशेषः—अभिक्रामं जुहोतीति । स ह स्माऽऽह बोधायनः सर्वेणाऽभिक्रामेत् पद्भ्यामाहुतीभिः स्वरेण । उत्तरामुत्तराहुतिं ज्यायसीं जुहुयादिति । पद्भ्यामेवाऽभिक्रामं समानत्राऽऽहुतीर्जुहुयादिति शालीकिः । समानत्र तिष्ठन्नाहुतीभिरेवाऽभिक्रामेदित्यौपमन्यवः । समानत्रैव तिष्ठन्प्रदक्षिणमनुदिशं हुत्वा मध्ये स्वाहाकारं जुहुयादित्याञ्जीगविः (बौ० श्रौ० २०।१३) इति । अभिक्रामम् अभिक्रम्याऽभिक्रम्य सर्वेणेत्यस्य विवरणम्, पद्भ्यामाहुतीभिः स्वरेणेति पक्षं तावद्विवृणोति उत्तरामुत्तरामाहुतिं ज्यायसीं जुहुयादिति । आहुतीनां ज्यायस्त्वं स्वरापेक्षम्, ततश्च प्रथमां मन्त्रेण उत्तरामुत्तरां ततस्ततोऽप्युच्चतरेणेत्यर्थः । समानत्र एकस्मिन्प्रदेशे । आहुतीभिरेवाऽभिक्रामेदित्यौपमन्यवपक्षे अभीत्याऽऽभिमुख्यवचनः, न तु परित इत्यर्थे । आहुतीरेवाऽऽहवनीयाऽऽभिमुख्येन क्रामयन्नित्यर्थः । तथा च सूत्रम्—अपरेणाऽऽघारसम्भेदं पञ्च प्रयाजान्प्राचो यजति (आप० श्रौ० २।१७।१) इति । अनुदिशमिति दिगानुपूर्व्येण । अनेन प्राच्यामुपक्रमः प्रादक्षिण्यञ्च सामान्यतः प्राप्तम् । अयमेवार्थः सूत्रान्तरे स्पष्टीकृतः—समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये (आप० श्रौ० ३।१७।२) इति । गोपालेनाऽपि—प्रागादिषु चतुर्दिक्षु प्रयाजा मध्य उत्तम' इति । कर्मान्ते च देवतानियम उक्तः—ऋतुदेवता उ खलु प्रयाजा भवन्तीति (बौ० श्रौ० २४।३।१३)। हेमन्तशिशिरयोरैक्येन पञ्चर्तवः । हेमन्तशिशिरावत्र समासं गच्छतः (बौ० श्रौ० २४।२७।११) इत्युक्तत्वात् । अतो वसन्तादिक्रमेण यथायोगमृतवो देवताः समिधो यजति वसन्तमेवर्तूनामवरुन्धे (तै० सं० २।६।१।१) इत्यादिब्राह्मणानुसारेण द्रष्टव्याः । उदङ्ङत्याक्रम्येति । अत्र च स्विष्टकृत्यनूयाजान्ते चाऽभिधानात् सर्वत्राऽपि दैवविषये उदङ्ङत्याक्रम्यैव हविर्ग्रहणं दक्षिणाऽतिक्रम्य च हवनमित्यनुसन्धेयम् । संस्रावेणाऽऽनुपूर्व्यं[1] हवींष्यभिघारयति । ध्रुवामेवाग्रेऽथ दक्षिणं पुरोडाशमथ ध्रुवामथोत्तरं पुरोडाशमथ शृतमथ दधि । उपभृतमन्ततः । ध्रुवायां द्वितीयाभिघारणमुपांशुयाजार्थम् उपांशुयाजस्य चरुपक्षे तु तत्रैवाऽभिघारणं, न ध्रुवाज्ये द्वितीयाभिघारणम् । उपांशुयाजरहितेषु च न ध्रुवायां द्वितीयाभिघारणमिति । उत्तरं पुरोडाशमित्यत्रैकत्वमविवक्षितम्, द्विबहुपुरोडाशसम्भवेऽप्यभिघारणात् । अत एवोपभृतमन्तत इति उपभृतमिति तद्गताऽऽज्यं लक्षयति, ध्रुवामेवाऽग्र इतिवत् ॥४॥

अथ चतुर आज्यस्य गृह्णान आह—'अग्नयेऽनुब्रूहि' (श० ब्रा० २।२।३।२१) इति ॥५॥ अत्याक्रम्याश्राव्याह—'अग्निं यज' (श०ब्रा०२।२।३।४) इति ॥६॥ वषट्कृत उत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोति ॥७॥ अथोदङ्ङत्याक्रम्य चतुर एवाज्यस्य गृह्णान आह—'सोमायानु ब्रूहि' (श०ब्रा० २।५।२।३२) इति ॥८॥ अत्याक्रम्याश्राव्याह—'सोमं यज' (श० ब्रा०

१. '०णानुपूर्वं' इति कै० सं० ।

२।५२।३२) इति ॥९॥ वषट्कृते दक्षिणार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोति ॥१०॥ अथोपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धादवद्यन्नाह—'अग्नयेऽनुब्रूहि' (श० ब्रा० २।२।३।२१) इति ॥११॥

भव०—प्रतिमुखं प्रबाहुगिति दक्षिणोत्तरविभागेन समानस्थाने। प्रजापतिदेवतापदमुपांशु इत्यस्य मन्द्रस्वरः। यत्तन्त्रमुपांशु तत्रोच्चैर्वचने मन्द्रत्वम् ॥७॥ पूर्वार्धादिति प्रथमः कल्पः। प्राक् आरम्भात् व्यतिषज्यैवाङ्गुलीः (बौ० श्रौ० २४।२८।८) इति सर्वत्रावदानाविधिः, स्रुवेणाशक्यत्वात् स्वधित्यभावाद्धस्तेनैव ॥११॥

सा०—अथ चतुर आज्यस्य गृह्णन् आह—'अग्नयेऽनुब्रूहि' इति। ग्रहणोपक्रमे, निवृत्ते वा ग्रहणे, पुरोनुवाक्याचोदनम्। हौत्रशेषप्रश्नेऽभिहितम्—सर्वत्राऽवद्यन्नवत्तेवाऽमुष्मा अनुब्रूहीति पुरोनुवाक्या चोदनमिति ॥५॥ अत्याक्रम्याऽऽश्राव्याऽऽह—'अग्निं यज' इति। वषट्कृत उत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोति। उत्तरार्धपूर्वार्धे, ऐशान्यां दिशि; प्रतिमुखमिति उत्तराहुत्यपेक्षया, आहुतेर्मुखाऽभावेऽपि स्रुङ्मुखमपेक्ष्य प्रतिमुखत्वम्; दक्षिणबिलत्वमित्यर्थः। एवमुत्तरत्राऽपि उदग्बिलत्वेनाऽऽज्यभागयोः प्रतिमुखत्वसिद्धिः। प्रबाहुगित्याज्यभागयोरार्जवमाह, यथा चक्षुषोरार्जवं तथेत्यर्थः ॥६-७॥ अथोदङ्ङत्याक्रम्य चतुर एवाऽऽज्यस्य गृह्णन् आह—'सोमायानुब्रूहि' इति। अत्याक्रम्याऽऽश्राव्याऽऽह—'सोमं यज' इति। वषट्कृते दक्षिणार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोति। निगदव्याख्यातमेतत्। द्वैधे विशेषः—आज्यभागयोर्होम इति। पूर्वार्धे प्रतिमुखं प्रबाहुग्जुहुयादिति बोधायनः। पूर्वार्धे एव प्रबाहुगिति शालीकिः (बौ० श्रौ० २०।१३) इति। पूर्वस्यामेव दिश्याज्यभागयोरन्योन्यापेक्षयोत्तरत्वं दक्षिणत्वमप्यवर्जनीयमेव, न त्वेकस्थाने हवनं, प्रतिमुखं प्रबाहुगिति वचनात् ॥८-१०॥ अथोपस्तीर्य दक्षिणस्य पुरोडाशस्य पूर्वार्धादवद्यन्नाऽऽह—'अग्नयेऽनुब्रूहि' इत। उपस्तरणं ध्रौवाऽऽज्यादित्युक्तम्। अवदाने, अङ्गुलिनियमाऽवदानप्रमाणे कर्मान्ते दर्शिते—व्यतिषज्यैवाऽङ्गुली अवद्येदङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि भवन्ति। ज्यायांसि सौविष्टकृतान्यैडानि च (बौ० श्रौ० २४।२८।८,९)। अङ्गुलिशब्दोऽङ्गुष्ठस्याऽपि वाचकः, 'दश हस्त्या अङ्गुलयः' (तै० सं० ६।१।१।८) इति दर्शनात्। अङ्गुली अङ्गुष्ठतर्जनी; व्यतिषज्य परस्परं व्याहतीकृत्य; तर्जन्यग्रमङ्गुष्ठमूले निधाय संहतीकृत्येत्यर्थः। एवञ्च तन्नखसंस्पर्शप्रसङ्गाऽभावः। अङ्गुष्ठपर्व अङ्गुष्ठोत्तरकाण्डः ॥११॥

अथैनमुपतिष्ठते—'मा भेर्मा संविक्था मा त्वा हिंसिषं मा ते तेजोऽपक्रमीत् (तै० ब्रा० ३।७।५।५) इति ॥१२॥ अथैनमभिमृशति—'भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिंसीः' (तै० ब्रा० ३।७।५।५) इति ॥१३॥ पूर्वार्धादवदायापरार्धादवद्यति ॥१४॥ अभिघारयति प्रत्यनक्ति—'यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः।

आज्येन प्रत्यनज्म्येनत्त आप्यायतां पुनः' (तै० ब्रा० ३।७।५।५) इति ॥१५॥

भव०—उपस्थानं मन्त्रेणाभिधानं सन्निकृष्टेनार्थेन, प्रयोजनमङ्गुष्ठपर्वमात्राणि दैवतानि (बौ० श्रौ० २४।२८।८) इत्यविशेषवचनम् ॥१३॥ प्रत्यवदानं ध्रुवां प्रत्यभिघारयति इत्यभिप्रायः। अन्ते तु ध्रुवामाप्याययति (बौ० श्रौ० १।२१।४) इति वचनात्। उत्तरस्य अपरार्धादिति प्रागपवर्गार्थम् ॥१४,१५॥

सा०—अथैनमुपतिष्टते...'मा भेर्मा...मीत्' इति। अथैनमभिमृशति—'भरतमुद्धरे...मा हिंसीः' इति। उपस्थानमुच्छ्रितहस्तेन। अभिमर्शनमवाग्भूतेन ॥१२-१३॥ पूर्वार्धादवदायाऽपरार्धादवद्यति। द्वैवे विशेषः—हविषामवदान इति। स ह स्माऽऽह बोधायनः पूर्वार्धादेवाऽग्रे प्रथमं मुख्यस्य हविषोऽवद्येदथाऽपरार्धात्। एवमस्य प्रदक्षिणं हविषामवत्तं भवतीति। अत्रो ह स्माऽऽह शालीकिरपरार्धादेवाऽग्रे प्रथमं मुख्यस्य हविषोऽवद्येदथ पूर्वार्धात्। एवमस्य प्राक्संस्थानि हवींषि भवन्तीति। मध्यात्पूर्वार्धाद् [1]अपरार्धात्पञ्चावत्तिनामित्यौपमन्यवः (बौ० श्रौ० २०।१३)। मुख्यस्य प्रधानस्य हविषः, प्रथमम् आग्नेयादिकम्, अग्रे पूर्वं, पूर्वार्धादवद्येत्। अथ अनन्तरम् अपरार्धादवद्येदिति शेषः। अयमर्थः—प्रधानेषु हविःषु यत्प्रथमं हविस्तस्य पूर्वार्धात्प्रथममवदायाऽपरार्धात् पश्चादवद्येत्। द्वितीयादिकं त्वपरार्धात्पूर्वमवदायाऽनन्तरं पूर्वार्धादवद्येदिति शेषः। अस्य प्रयोजनमाह—एवमस्य प्रदक्षिणं हविषामवत्तं भवतीति। एवं क्रियमाणे हविषामवत्तं प्रदक्षिणं भवति प्रादक्षिण्येन हविरवदानसम्पत्तिरित्यर्थः। शालीकिपक्षे तु सर्वेष्वपि हविष्षु आदौ पश्चादवदायाऽनन्तरं पूर्वार्धादवदाने सति प्राक्संस्थत्वसिद्धिरिति। पञ्चावत्यवदानेष्वपि शालिकिपक्षे प्राक्संस्थतायै मध्यात्पश्चात्पूर्वार्धादित्यनुसन्धेयम् ॥१४॥ अभिघारयति। प्रत्यनक्ति—'यदवदानानि...पुनः' इति। अभिघारणं ध्रौवाज्येन। प्रत्यञ्जनमाज्यस्थाल्याऽऽज्येन, हविराप्यायनरूपत्वात्, ध्रौवाऽऽज्याऽऽप्यायनवत्। प्रत्यवदानस्थानामाप्यायनाऽऽवृत्तिर्मन्त्रावृत्तिश्चेति केचित्। अन्ये तु प्रत्यञ्जनस्य हविःसंस्कारमात्रतया सकृदेव समन्त्रकमञ्जनमिति ॥१५॥

अत्याक्रम्याश्राव्याह—'अग्निं यज' इति ॥१६॥ वषट्कृते जुहोति ॥१७॥ अथ चतुर आज्यस्य गृह्णन्नाह—'प्रजापतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः ॥१८॥ अत्याक्रम्याश्राव्याह—'प्रजापतिम्' इत्युपांशु 'यज' इत्युच्चैः ॥१९॥ वषट्कृते जुहोति ॥२०॥ अथोपस्तीर्योत्तरस्य पुरोडाशस्यापरार्धादवद्यन्नाह—'अग्नीषोमाभ्याम्' इति पौर्णमास्याम्—'इन्द्राय वैमृधाय'

१. 'पश्चार्धात्०' इति कं० सं०।

इति च 'इन्द्राग्निभ्याम्' इत्यमावास्यायामसंनयत 'इन्द्राय' इति संनयतो 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति ॥२१॥

सा०—अत्याक्रम्याऽऽश्राव्याऽऽह—'अग्निं यज' इति। वषट्कृते जुहोति। द्वैधे विशेषः—आहुतीनामायतन इति। स ह स्माऽऽह बोधायनस्त्रीण्येवैतान्यादिष्ट-स्थानानि भवन्ति[1] आघारावाज्यभागौ स्विष्टकृत्। अथेतरा यथावकाशं जुहुयादिति। प्रष्टीरेवाऽऽहुतीर्जुह्वत्पूर्वार्धे स्विष्टकृतं जुहुयादिति शालीकिः। स्रुच्यमाघारपथमभि-जुहुयादित्यौपमन्यवः। मध्ये प्रदक्षिणं मण्डलाकारमिति राथीतरः(बौ०श्रौ० २०।१३)। प्रष्टीः प्रधानभूता आहुतीर्जुह्वत् यथाप्रधानमानुपूर्व्येणाऽऽहुतीर्हुत्वा सर्वासामाहुतीनां पूर्वार्धे स्विष्टकृतं जुहुयादिति ॥१६-१७॥ अथ चतुर आज्यस्य गृहीत्वा आह—'प्रजापतये' इत्यु-पांशु 'अनुब्रूहि' इत्युच्चैः। अत्याक्रम्याऽऽश्राव्याऽऽह 'प्रजापतिम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते जुहोति। अत्र प्रजापतिशब्दः उपलक्षणम् उपांशुयाजदेवताऽन्तराणाम्। चरुपक्षे तु पञ्चावत्तिनां तद्धर्मतोऽवदानम्, नाऽऽज्यपक्षे। आज्यपक्ष एव वा पञ्चावदानधर्ममिति, न चरुपुरोडाशादिष्विति द्वैधे प्रतिपादितम्—पञ्चमस्याऽवदानस्याऽभिवृद्ध्या इति। औषधस्याऽभिवर्धयेदिति बोधायनः। आज्यस्यैवाभिवर्धयेदिति[2] शालीकिः (बौ० श्रौ० २०।१३) इति ॥१८-२०॥

अथोपस्तीर्योत्तरस्य पुरोडाशस्याऽपरार्धादवद्यन्नाह—'अग्नीषोमाभ्याम्' इति पौर्णमास्याम्, 'इन्द्राय वैमृधाय' इति च। 'इन्द्राग्निभ्याम्' इत्यमावास्यायामसन्न-यतः। 'इन्द्राय' इति सन्नयतः। 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति। सोमयाजिनस्तावदग्नीषोमीयस्य पुरोडाशस्याऽऽग्नेयादुत्तरत्वं नियतमेव। वैमृधस्य तु समानतन्त्र-त्वपक्षे तदुत्तरत्वमस्तीत्युक्तम्। इन्द्राय वैमृधायेति चेति, चशब्दादनियमं द्योतयति। अतो वैमृधस्य भिन्नतन्त्रत्वपक्षे न भवत्ययं प्रसङ्ग इति। असोमयाजिनस्त्वग्नीषोमीयस्य पुरोडाशस्या-ऽनित्यता। यदि[3] नाऽसोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यत इति वचनान्नियतो निषेधः स्यात्तदाऽग्नीषोमाभ्यामिति सोमयाजिन इति ब्रूयात्। न चैवमुक्तवान्। मन्त्रपाठे च नित्यवदाम्नायते—'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' (तै० सं० १।६।२।४) इति। निषेधोऽप्याम्नायते—'आग्नेयो वै ब्राह्मणः। स सोमेनेष्ट्वाऽग्नीषोमीयो भवति' इति। अतो विहितप्रतिषिद्धत्वादसोमयाजिनो वैकल्पिकोऽग्नीषोमीयः पुरोडाश इति ॥२१॥

समान उपस्थानः ॥२२॥ समानोऽभिमर्शनः ॥२३॥ अपरार्धादवदाय पूर्वार्धादवद्यति ॥२४॥ अभिघारयति ॥२५॥ समानः प्रत्यञ्जनः ॥२६॥

---

२. 'भवन्त्याज्यभागौ' इति कै० सं०, वृ० कोशे च।
१. 'आज्यस्यैवेति' इति कै० सं०।
२. 'यदि नाम ना०' इति वृ० कोशे।

अत्याक्रम्याश्राव्याह—'अग्नीषोमौ यज' इति ॥२७॥ वषट्कृते जुहोति ॥२८॥ अथोपस्तीर्य द्विः पुरोडाशस्यावद्यन्नाह—'इन्द्रायानुब्रूहि' इति 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति ॥२९॥ द्विः पुरोडाशस्यावद्यति द्विः शृतस्य द्विर्दध्नः ॥३०॥ अभिघारयति ॥३१॥ प्रत्यनक्ति ॥३२॥

भव०—उत्तरस्येत्युक्त्वा अग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राय वैमृधायेति च ब्रवीति नाग्नेयस्योत्तरो वैमृधः सम्भवतीति ज्ञापयति प्राक् सोमयागादनित्योऽग्नीषोमीय इति सर्वदेवतानुक्रमणम् । उपस्थानाभिमर्शनप्रत्यञ्जनानि सान्नाय्यधर्मा इति । इन्द्रस्य पुनर्वचनं सम्प्रदानार्थम् । अवचने हि पुरोडाशस्य पूर्वमुक्तत्वात् सान्नाय्यस्य पृथक्-प्रदानाशङ्का स्यादिति । पयसा दैवतमित्यादि द्रष्टव्यम् ॥२२-३२॥

सा०—समान उपस्थानः । समानोऽभिमर्शनः । अपरार्धादवदाय पूर्वार्धादवद्यति । अभिघारयति । समानः प्रत्यञ्जनः । पुंल्लिङ्ग-निर्देशश्छान्दसः । केषाञ्चित्पाठः—समानोपस्थानः, समानाऽभिमर्शन इति । अस्मिन्पाठे समान उपस्थानो मन्त्रो यस्य पुरोडाशस्येति । एवं समानाऽभिमर्शन इति, [1]समानप्रत्यञ्जन इति च ॥२२-२६॥ अत्याक्रम्याऽऽश्राव्याऽऽह—'अग्नीषोमौ यज' इति । वषट्कृते जुहोति । अथोपस्तीर्य द्विः पुरोडाशस्याऽवद्यन्नाऽऽह—'इन्द्रायाऽनुब्रूहि' इति, 'महेन्द्राय' इति वा यदि महेन्द्रयाजी भवति । द्विः पुरोडाशस्याऽवद्यति द्विः शृतस्य द्विर्दध्नः । अभिघारयति । प्रत्यनक्ति । अमावास्याविषयमेतत् । इन्द्रमहेन्द्रयोः पुनरुपादानं, सह पुरोडाशेनैव सान्नाय्यहोमार्थम् । अन्यथा पुरोडाशस्य पूर्वमुक्तत्वात्सान्नाय्यस्य पृथग्घोमशङ्का स्यात् । उपस्थानाऽभिमर्शनप्रत्यञ्जनानि प्राथमिके पुरोडाशे विधाय पुरोडाशान्तरेष्वतिदिष्टानि । न चैतेषां सान्नाय्ये प्रसक्तिः, द्रवरूपतयाऽवदानेन विच्छेदाऽप्रतीतेः । अत एव चर्वादिष्वपि कठिनेषु पुरोडाशधर्म एव । ततश्च सान्नाः विषये प्रत्यनक्तीति विशेषाऽभ्यनुज्ञानात्, शेषनिषेधोऽवगम्यते । तच्च प्रत्यञ्जनममन्त्रकमेवाऽवदाने मन्त्राऽनाम्नानादनतिदेशाच्च । द्रवत्वादेव न पूर्वार्धाऽपरार्धप्रतिनियमः । कर्मान्ते विशेषः—पयसा दैवतमभिवर्धयेद्दध्ना स्विष्टकृतम् (बौ० श्रौ० २४।२८।८) इति । दैवतं, दैवसम्बन्ध्यवदानं प्रधानमित्यर्थः । पयसाऽभिवर्धयेद्दध्यपेक्षयाऽधिकमवदध्यात् । स्विष्टकृद्विषये तु दध्न[2] आधिक्यमित्यर्थः । अवदेयद्रव्यपरिमाणादिविशेषाः कल्पसारे दर्शिताः—

घृताऽऽहुतिः स्याच्चतुरङ्गुलोर्ध्वा त्वङ्गुष्ठपर्वप्रमितं तु दैवम् ।
ऐडञ्च सौविष्टकृतं च तस्माज्ज्यायस्तदेतत् त्रितयं घृतेन ॥
अधस्तथोपर्यपि चाऽऽहुतिः स्यात्स्रुवेण होमेषु घृतेतरेषु ।
सर्वत्र हव्येऽनुदिते ध्रुवाज्यं स्रुचौ च साद्ये न हि यावदुक्तिः ॥

१. 'समानः प्रत्य०' इति कोशेषु ।
२. 'दध्ना' इति मद्र० सं० ।

स्थालीघृतं प्रत्यभिघारणेडाप्राशित्राऽग्नीत्षडवत्तकेषु ।
अन्यत्र च प्रागनलादनुक्तावावान्तरेडासु भवत्विडास्थम् ।।
अनामिकामध्यमयोः सहायं विधाय चाऽङ्गुष्ठकमौषधेषु ।
बर्हिर्नखैस्तैरवदेयमाज्यं स्रुवेण सान्नाय्यमपि प्रपूर्णम् ।।
विदाश्च वत्साश्च तथाऽऽर्ष्टिषेणाः पञ्चावदाना अवदानमेषाम् ।
मध्यात्पुरस्तात्परतश्च मध्यात्पश्चात्पुरस्ताच्च पुरोपवर्गे ।।
होमस्त्वनुक्तावनलस्य मध्ये प्राग्वापसव्यः परिमण्डलो वा । इत्यादि ।।२७-३२।।

अत्याक्रम्याश्राव्याह—'इन्द्रं यज' इति 'महेन्द्रम्' (तु०—तै०ब्रा० ३।५।३।२) इति वा यदि महेन्द्रयाजी भवति ।।३३।। वषट्कृते जुहोति ।।३४।। अथोपस्तीर्य दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यन्नाह—'अग्नये स्विष्टकृतेऽनुब्रूहि' (तु०—मा० श्रौ० १।३।२।२४) इति ।।३५।। सकृद्दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यति सकृद् ध्रुवाज्यात्सकृदुतरस्य पुरोडाशस्य सकृच्छृतस्य सकृद् दध्नः ।।३६।। द्विरभिघारयति ।।३७।। न प्रत्यनक्ति ।।३८।। अवत्ते स्विष्टकृति स्रुवेण पार्वणौ होमौ जुहोति—'ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहतां सुवीर्यं रायस्पोषं सहस्रिणम् । प्राणाय सुराधसे पूर्णमासाय स्वाहा' (तै० ब्रा० ३।७।५।१३) इति पौर्णमास्याम् ।।३९।। 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहतां सुवीर्य्यं रायस्पोषं सहस्रिणम् । अपानाय सुराधसेऽमावास्यायै स्वाहा' (तै० ब्रा० ३।७।५।१३) इत्यमावास्यायाम् ।।४०।। अत्याक्रम्याश्राव्याह—'अग्निं स्विष्टकृतं यज' (तु०—श० ब्रा० २।२।३।२४) इति ।।४१।। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति ।।४२।।

भव०—शेषात् स्विष्टकृतं यजति (तै० ब्रा० १।६।६। ) इति वचनादुपांशुयाजस्य शेषाभावात्तस्य साधारणत्वात् सर्वस्मै वा एतद्यज्ञाय (तै० ब्रा० ३।३।६।५) इति । कथमाचार्येणोक्तः—अथ ध्रुवाज्यादिति । अयमभिप्राय इह प्रजापतिवचनादावाहनयाज्यानुवाक्यास्विष्टकृन्निगदादिषु च ब्राह्मणे प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशतीति प्रक्रम्य स आत्मन्नाज्यमाधत्त (तै० सं० २।६।३।१) इति वचनात् प्राजापत्यावाज्यभागाविति गम्यते । प्रयाजार्थदेवाघारः । आज्यभागादिग्रहणं न नियमार्थम् । एवं सति सर्वस्मै वा एतदित्ययमेवार्थोऽनूद्यते । अष्टावत्तः स्विष्टकृत् (बौ० श्रौ० ६।११।१९) इति च लिङ्गम् । उपस्तरणाभिघारणार्थञ्च देवताशेषात् । उपांशुयाज-

विशेषो यदि न स्यात् तद्विकारेषु नैव स्यात् तथा सति कुतोऽष्टावत्तः स्विष्टकृदिति न वाच्यम् । न प्रत्यनक्त्यथ स्रुवेण पार्वणौ इत्येव सिद्धेः । एवं सति प्राक्स्विष्टकृदवदानादप्यस्ति पक्षः अवत्ते स्रुवेण प्राक् स्रुचेति ज्ञापनार्थम् । पार्वणयोः समुदायनिबन्धनत्वाद् विकृतावप्रवृत्तिः ॥३९-४०॥

सा०—अत्याक्रम्याऽऽश्राव्याऽऽह—'इन्द्र यज' इति, 'महेन्द्रम्' इति वा यदि महेन्द्रयाजी भवति । वषट्कृते जुहोति । अथोपस्तीर्य दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यन्नाह—'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । सकृद्दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यति, सकृद् ध्रुवाज्यात्सकृदुत्तरस्य पुरोडाशस्य सकृच्छृतस्य सकृद्दध्नः । द्विरभिघारयति । न प्रत्यनक्ति । पञ्चावत्तिनां तूत्तरार्धादेव द्विरवदानमुपस्तरणमभिघारणद्वयञ्च प्रतिहविरवदानापेक्षया[1] पञ्चत्वपूरकमिति ॥३३-३८॥ अवत्ते स्विष्टकृति स्रुवेण पार्वणौ होमौ जुहोति—'ऋषभं वाजिनं···पूर्णमासाय स्वाहा' इति पौर्णमास्याम् । 'अमावास्या सुभगा···अमावास्यायै स्वाहा' इत्यमावास्यायाम् । स्रुवेण पार्वणौ होमौ जुहोतीत्येतावतैव पर्याप्ते अवत्ते स्विष्टकृतीति वचनं स्विष्टकृदवदानात्प्राक् स्रुचैव पार्वणहोमपक्षद्योतनार्थम् । पार्वणौ होमाविति द्विवचनेन विकृतिषु तदभावं द्योतयति, विकृतीनां दर्शपूर्णमासयोरन्यतरप्रकृतित्वात् । प्रकृतावपि पार्वणौ होमाविति अविशेषेण विधायाऽपि दर्शपूर्णमासभेदेन मन्त्रभेदाऽऽम्नानात् [2]कुत्राऽपि न समुदितयोर्होमप्रसङ्गः ॥३९-४०॥

अत्याक्रम्याऽऽश्रव्याऽऽह—'अग्निं स्विष्टकृतं यज' इति । वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति । पूर्वा आहुतीरतिहाय पूर्वाऽऽहुतिस्थानमुल्लङ्घ्य ऐशान्यां जुहोतीत्यर्थः । पूर्वा इति स्थानपरित्यागश्च स्विष्टकृत्प्रधानाहुत्योः संसर्गे प्रायश्चित्तश्रवणात् ॥४१-४२॥

अत्रैतन्मेक्षणमाहवनीयेऽनुप्रहरति ॥४३॥ अथैनत्संस्रावेणाभिजुहोति ॥४४॥ अथोदङ्ङत्याक्रम्य जुह्वामप आनीय संक्षालनमन्तःपरिधि निनयति—'वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सं शतधारमेतम् । स नः पितरं पितामहं प्रपितामहं सुवर्गे लोके गच्छतु पिन्वमानं स्वधा नमः' (तै० आ० ६।२५ १) इति ॥४५॥ निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयति—'इमं समुद्रं शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन्'(तु०—तै० सं० ४।२।१०।२)इति ॥४६॥ अत्रैतदौपभृतमाज्यं सर्वश एव जुह्वां समानयते॥४७॥

---

१. '०पेक्षया चतुष्टयपञ्च०' इति वृ० कोशे ।
२. 'एकत्र न' इति वृ० कोशे ।

भव०—मेक्षणं सान्नाय्यार्थम्। संयवनार्थं तु धार्यत एव अन्ते प्रतिपत्तिदर्शनात् ॥४३॥

सा०—अत्रैतन्मेक्षणमाहवनीयेऽनुप्रहरति। एतदिति विशेषनिर्देशार्थं वचनम्। अन्यथा मेक्षणमित्येव ब्रूयात्। तच्च विशेषनिर्दिष्टम् उपांशुयाजस्य चरुपक्षे तत्पाकार्थं स्विष्टकृदन्ते प्रहर्तव्यम्, न तु पिष्टोद्वपन्या सहाऽऽसादितं प्राकृतं मेक्षणं, तस्य यावज्जीवं धार्यत्वात्, [1]तदप्यंसे तत्प्रतिपत्तिदर्शनादवसीयते। वक्ष्यति हि—'दक्षिणेंऽसे मेक्षणम् (बौ० गृ० पितृ० १।६।२) इति। द्वैधे विशेषः—मेक्षणस्याऽनुप्रहरण इति। सूत्रं शालीके:। अत्रो ह स्माऽऽह बोधायनो न मेक्षणन्यायेन वपाश्रपणी अनुप्रहरेदिति (बौ० श्रौ० २०।१३)। वपाश्रपण्योः स्विष्टकृदन्तेऽनुप्रहरणं न भवति, अपि तु वपाहोमानन्तरमेवेत्यर्थः ॥४३॥ अथैनत्संस्रावेणाऽभिजुहोति। मन्त्रानाम्नानात् तूष्णीं होमः। एनत् सौविष्टकृतं हविः, संस्रावेण जौहवाऽऽज्यशेषप्रश्चोतनेन। अत्र विशेषविधानात् नाऽऽहुत्यन्तरेषु सूत्रान्तरन्यायेन प्रश्चोतनाऽवश्चोतने स्त इति ॥४४॥ अथोदङ्ङत्याऽऽक्रम्य जुह्वामप आनीय सङ्क्षालनमन्तःपरिधि निनयति—'वैश्वानरे...स्वधा नमः' इति। अस्याऽन्तःपरिधिनिनयनस्य पित्र्यत्वे दक्षिणाऽपवर्गत्वं प्राचीनावीतत्वञ्च। वैश्वानरत्वे तु अन्तःपरिधि एकत्रैव निनयनम् यज्ञोपवीतत्वञ्चेति पक्षद्वयम्। तत्र पित्र्यत्वपक्ष एव बहुयाज्ञिकाऽऽदृतः। कर्मान्ते च—'हुत्वा स्विष्टकृतं स्रुचमद्भिः पूरयित्वाऽन्तःपरिधि निनयेत्—'वैश्वानरे हविरिदं जुहोमि' इति (बौ० श्रौ० २४।२८।११)। अस्य पुनर्वचनात्सिद्धे सत्यारम्भो नियमायेति न्यायेन बहिःपरिधिनिनयनस्याऽमन्त्रकत्वपक्षमपि सूचयति ॥४५॥ निर्णिज्य स्रुचं निष्टप्याऽद्भिः पूरयित्वा बहिःपरिधि निनयति—'इमं समुद्रं...व्योमन्' इति। निर्णिज्य प्रक्षाल्य, निष्टप्य आहवनीये प्रताप्य; बहिःपरिधिनिनयनमेकत्रैव, उदगपवर्गत्वेन वा ॥४६॥ अत्रैतदौपभृतमाज्यं सर्वश एव जुह्वां समानयते। अत्र अस्मिन्काले; न त्वनूयाजप्रचरणकाले पृषदाज्यवदिति ॥४७॥

अथ यथायतनं स्रुचौ सादयित्वा प्राशित्रमवद्यति दक्षिणस्य पुरोडाशस्योत्तरार्धाद्यवमात्रम्—'अज्यायो यवमात्रादाव्यधात्कृत्यतामिदम्। मा रूरुपाम यज्ञस्य शुद्धं स्विष्टमिदं हविः' (तै० ब्रा० ३।७।५।६) इति ॥४८॥ अथैनत्स्रुवदण्डेनाभिघार्य जघनेन प्रणीताः सादयित्वाभिः स्रुवदण्डं संस्पर्श्यावदधाति ॥४९॥

भव०—प्राशित्रं दक्षिणस्यैव यज्ञस्य शुद्धमित्याद्येकवचनक्रमात्, अन्ये दक्षिणस्य देशनियमः, अन्येषामनियमः। सर्वेभ्यो यवमात्रमिति। स्रुवदण्डं प्रक्षाल्येति ॥४८-४९॥

॥ इति चतुर्दशोऽध्यायः समाप्तः ॥

---

१. 'तदप्यंते' इति मद्र० सं०।

सा०—अथ यथाऽऽयतनं स्रुचौ सादयित्वा। यथाऽऽयतनम् आयतनमनतिक्रम्य; प्रस्तरबर्हिषोरित्यर्थः। अनेन स्रुचोरादानप्रभृत्येतावन्तं कालं धारणस्य नियमं द्योतयति। तथा च सूत्रम्—पूर्वमाज्यभागं प्रति स्रुचावादत्ते, न निदधत्या स्विष्टकृतः (आप० श्रौ० २।१८।८) इति। प्राशित्रमवद्यति दक्षिणस्य पुरोडाशस्योत्तरार्धाद्यवमात्रम्—'अज्यायां···हविः' इति। अत्र दक्षिणस्यैवोत्तरार्धादवदानं, न पुरोडाशान्तरात्। अन्यथा दक्षिणस्येत्यानर्थक्यप्रसङ्गादिति। एकस्मादेव पुरोडाशात्प्राशित्रावदानमिति वदन्ति केचित्। अन्ये तु दक्षिणस्यैव रोडाशस्योत्तरार्धादिति देशनियमः, पुरोडाशान्तरेषु तु देशानियमेनाऽव-दानमिति वदन्ति कर्मान्तानुरोधेन। कर्मान्ते तन्त्राऽऽवापधर्मनिरूपणाऽवसरे प्राशित्रस्याऽऽवदानत आवापत्वं, तन्त्रत्वन्तु प्रदानत इत्युक्तम्- कथमु खल्वेतज्जानीयादिदं तन्त्रमयमावाप इति। अग्न्यन्वाधानप्रभृति तन्त्रमाज्यभागाभ्यामन्यत्रौषधात्। तस्मिंस्तन्त्रे सत्यावापस्था-नानि भवन्ति, यथैतद्धेनूनां दोहनं, कपालानामुपधानं स्तम्बयजुषो हरणमाज्यग्रहा इति यच्च किञ्चाऽभिनिवपति। ऊर्ध्वमाज्यभागाभ्यामेष मध्यत आवापो भवति यस्मिन्नेतद्धवींष्योप्यन्ते तस्मिन्नेवाऽवापजानि तन्त्रस्थानं भजन्ते यथैतत्प्राशित्रं यजमानभागब्रह्मभागौ[1] स्विष्टकृच्चेडा चेति। अवदानत आवापो भवति, तन्त्रन्तु प्रदानत (बौ० श्रौ० २४।३।२-५) इति। तन्त्रं साधारणं प्रत्येकमावापः। तन्त्रमग्न्यन्वाना-द्याज्यभागाभ्यां अन्यत्रौषधात्। औषधधर्मा निर्वापादयः प्रत्येकमेव। एतस्मिंस्तन्त्रे सत्यावृत्ति-स्थानानि भवन्ति, यथैतद्धेनूनामित्यादि। यच्चान्यदप्यावर्तते प्रोक्षणोत्पवनादि तत्सर्वमावा-पस्थानम्। ऊर्ध्वमाज्यभागाभ्यामानूयाजेभ्यो न तन्त्रत्वम् यथैतत् प्राशित्रमित्यादि। क्वाऽऽवा-पत्वं क्व तन्त्रत्वमिति विशिनष्टि—अवदानत आवृत्तिः, प्रदानं युगपदिति। एवमेव यजमान-ब्रह्मभागयोरपि अवदानत आवृत्तिः, प्रदानतस्तन्त्रत्वमिति। सर्वपुरोडाशेभ्यः पृथक्पृथगवदाय सकृदेव प्रदद्यादिति। प्राशित्रे तूपस्तरणं न विद्यते, अभिघारणन्त्वस्त्येव ॥४८॥

अत्र विशेषमाह—अथैनत्स्रुवदण्डेनाऽभिधार्य जघनेन प्रणीताः सादयित्वाऽद्भिः स्रुवदण्डं संस्पर्श्याऽवदधाति। अभिघारणन्यायेनैव प्राशित्रे सर्वपुरोडाशाऽवदानपक्षे सान्नाय्यस्याऽवदानमपि स्रुवदण्डेनैवेति केचित्। अवदानरूपत्वात्स्रुवबिलेनैवेत्यपरे। पक्षद्वयेऽपि मन्त्राऽभावः, तल्लिङ्गविरोधात्। न हि यवमात्रं सान्नाय्याऽवदानं सम्भवतीति। द्वैधे विशेषः—प्राशित्रस्याऽवदान इति। सूत्रं बौधायनस्य। परिहरिष्यन्नेव प्राशित्रमव-द्येदिति शालीकिः (बौ० श्रौ० २०।१३) इति। परिहरिष्यन् परिहर्तुमिच्छन् ब्रह्मणे प्राशित्रं परिहरेति प्रैषमुच्चारयिष्यन्नित्यर्थः ॥४९॥

अत्र प्रयोगक्रमः—

यदा होता 'घृतवतीमध्वर्यो स्रुचमास्यस्व' इति वदेत्तदाऽध्वर्युर्जुहूपभृतावादाय दक्षिणांऽसादतिक्रान्त उदङ्मुखस्तिष्ठन्नाश्राव्य प्रत्याश्रावित आह 'समिधो यज' इति। प्रथमं होत्रा वषट्कृते जौहवाज्यतृतीयभागेन पूर्वार्धे जुहोति। यजमानो 'वसन्तायेदं०,

---

१. 'यजमानभागं ब्रह्म०' मद्र० सं०।

वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु' इति। अध्वर्युः पुनराश्राव्य प्रत्याश्राविते 'यज' इत्याह। वषट्कृते जौहवाज्यमध्यमभागेन दक्षिणार्धे जुहोति। यजमानः 'ग्रीष्मायेदं० ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु' इति। अध्वर्युः पुनराश्राव्य, यजेत्याह। वषट्कृतेऽपरार्धे जौहवं सर्वं जुहोति। यजमान: 'वर्षाभ्य इदं० वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु' इति। अध्वर्युरर्धमौपभृतस्याज्यस्य जुह्वामानीय, पुनराश्रावणादिवषट्कृते जौहवाज्यतृतीयभागेनोत्तरार्धे जुहोति। यजमानः 'शरद इदं० शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु' इति। अध्वर्युः पुनराश्रावणादिवषट्कृते जौहवाज्यमध्यमभागेन मध्ये जुहोति। यजमानः 'हेमन्तशिशिराभ्यामिदं० हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीताम्' इति। प्रयाजानामग्निर्देवतेति केचिदाहुः।

अध्वर्युः प्रत्याक्रम्य वेद्युत्तरत उपविश्य जौहवाज्यशेषेण ध्रुवामभिघार्य दक्षिणं पुरोडाशमभिघार्य ध्रुवामभिघार्याऽग्नीषोमीयं पुरोडाशमभिघार्य वैमृधमभिघारयति पौर्णमास्याम्। अमावास्यायान्तु पुनर्ध्रुवाऽभिघारणानन्तरम् ऐन्द्राग्नमभिघारयत्यसन्नयतः। सन्नयतस्त्वैन्द्रमभिघार्य प्रातर्दोहं सायंदोहं चाऽभिघारयति। उपभृतमन्ततः। स्रुवेण जुह्वां ध्रुवाज्याच्चतुर्गृह्णन्न आहाऽग्नयेऽनुब्रूहि इति। चतुर्गृहीत्वा दक्षिणाऽतिक्रम्याऽऽश्राव्याऽऽहाग्निं यजेति। वषट्कृते उत्तरार्धपूर्वार्धे ज्योतिष्मति उदग्दण्डया जुह्वा जुहोति। यजमानः 'अग्नय इदं०'। अध्वर्युः प्रत्याक्रम्य पूर्ववच्चतुर आज्यस्य गृह्णन्न आह—'सोमायाऽनुब्रूहि' इति। प्रत्याक्रम्याऽऽश्राव्याऽह,—सोमं यजेति। वषट्कृते दक्षिणार्धपूर्वार्धे दक्षिणदण्डया जुह्वा जुहोति। यजमानः 'सोमायेदं०'। अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासमिति।

अध्वर्युः प्रत्याक्रम्योपविश्य ध्रुवाज्यात्स्रुवेण जुह्वामुपस्तीर्याऽङ्गुष्ठतर्जनीभ्यां दक्षिणस्य पुरोडाशस्याऽवद्यन्नाहाऽग्नयेनुब्रूहि इति। अथैनमुपतिष्ठते—मा भेर्मा···क्रमीदिति। एनमभिमृशति—भरत···हिंसीरिति। अङ्गुष्ठपर्वमात्रं सङ्कुचिततर्जनीमध्यमाङ्गुष्ठमूलेप्रदेशेन पूर्वार्धादवद्यति, एवमपरार्धात्। ध्रुवाज्यादभिघार्याऽऽज्यस्थाल्याः स्रुवेणाऽऽदाय पुरोडाशं प्रत्यभिघारयति—यदवदाना···पुनरिति। पुनराज्यस्थाल्याः स्रुवेणोपहत्याऽऽग्नेयप्रक्षेपस्थाने हुत्वाऽत्याक्रम्याऽऽश्राव्याऽहाऽग्निं यजेति। वषट्कृते मध्ये जुहोति। प्रत्याक्रम्याऽऽज्यस्थाल्याः स्रुवेणोपहत्य प्रक्षिप्तं हविरभिजुहोति। यजमानः अग्नय इदं० अग्नेरहं देव यज्ययाऽन्नादो भूयासमिति। स्रुवाहुत्याः प्रजापतय इदं०। अध्वर्युः ध्रुवाज्याच्चतुर्गृह्णन् आह, प्रजापतय इत्युपांशु—अनुब्रूहीत्युच्चैः। प्रत्याक्रम्याऽऽश्राव्याऽऽह प्रजापतिमित्युपांशु,यजेत्युच्चैः। वषट्कृते मध्ये जुहोति। यजमानः प्रजापतय इदं० दब्धिरस्य दब्धो भूयासं पाप्मानं दभेयमिति। अपश्चोपस्पृशति।

अध्वर्युः पूर्ववदुपस्तीर्योत्तरस्य पुरोडाशस्याऽपरार्धात्पूर्ववदवद्यन्नाह—अग्नीषोमाभ्यामनुब्रूहि इति। पूर्ववदभिघार्य प्रत्यभिघार्याऽत्याक्रम्याऽऽश्राव्याऽऽहाऽग्नीषोमौ यजेति। वषट्कृते आग्नेयस्य पुरस्ताज्जुहोति। पुरस्तादुपरिष्टात्स्रुवाहुती पूर्ववत्। यजमानः अग्नीषोमाभ्यामिदं०, अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्। प्रजापतय इदं० स्रुवाहुत्याः।

अध्वर्युः पूर्ववदुपस्तीर्येत्यादि वैमृधस्य पुरोडाशस्याऽग्नीषोमीयवदवदानाभिघारणप्रत्यभिघारणाऽऽश्रावणादि समानम् । तत्र विशेषः—इन्द्राय वैमृधायाऽनुब्रूहि इति, इन्द्रं वैमृधं यजेति । यजमानः इन्द्राय वैमृधायेदं० इन्द्रस्य वैमृधस्याहं देवयज्ययेन्द्रियाव्यसपत्नो वीर्यावाग्छ्रीमान् भूयासम् इति पौर्णमास्याम् । अमायाम् उपांशुयाजानन्तरम् असन्नयतः जुह्वामुपस्तीर्येत्यादि अग्नीषोमीयवत् । तत्र विशेषः—इन्द्राग्निभ्यामनुब्रूहि, इन्द्राग्नी यजेति । यजमानः—इन्द्राग्निभ्यामिदं० इन्द्राग्न्योरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमिति । सन्नयतस्तु—ऐन्द्रं, माहेन्द्रं वाऽग्नीषोमीयवदवदाय । अत्र नोपस्थानाभिमर्शनप्रत्यभिघारणमन्त्राः । स्रुवेण शृतस्य द्विरवदाय दध्नोऽपि द्विरवदाय पूर्ववदभिघार्येत्यादि । इन्द्रायानुब्रूहि, महेन्द्रायेति तद्याजिनः । आश्राव्याऽऽहेन्द्रं यजेति, महेन्द्रमिति तद्याजिनः । वषट्कृते जुहोति । यजमानः—इन्द्रायेदं०, इन्द्रस्याऽहं० इन्द्रियावी भूयासं, महेन्द्रायेदं…महेन्द्रस्याऽहं देवयज्ययाजेमानं महिमानं गमेयमिति तद्याजिनः ।

जुह्वामुपस्तीर्याऽग्नये स्विष्टकृतेऽनुब्रूहि इति । अत्राप्युपस्थानाभिमर्शनमन्त्रौ न स्तः । दक्षिणस्य पुरोडाशस्योत्तरार्धाद्दैवतादधिकं सकृदवद्यति, सकृद् ध्रुवाज्यात्सकृदग्नीषोमीयस्य सकृद्वैमृधस्येति पौर्णमास्याम् । अमावास्यायान्तु सकृद् ध्रुवाज्यात्सकृदैन्द्राग्नस्याऽसन्नयतः । सन्नयतस्तु सकृद् ध्रुवाज्यात्सकृदैन्द्रस्य सकृच्छृतस्य सकृद्दध्नः । ध्रुवाज्याद् द्विरभिघारयति । न प्रत्यनक्ति । स्रुवेण ध्रुवाज्यमादाय आहवनीये जुहोति, 'ऋषभं० पूर्णमासाय स्वाहेति, पूर्णमासायेदं० इति पौर्णमास्याम् । अमायान्तु अमावास्या० अमावास्यायै स्वाहेति, अमावास्याया इदं० । अत्याक्रम्याऽऽश्राव्याहाऽग्निं स्विष्टकृतं यजेति । वषट्कृत उत्तरार्धपूर्वार्धे अतिहाय पूर्वा आहुतीर्जुहोति । यजमानः—अग्नये स्विष्टकृत इदं, अग्नेः स्विष्टकृतो० यज्ञेन प्रतिष्ठां गमेयमिति । उपांशुयाजस्य चरुपक्षे मेक्षणाऽनुप्रहरणम् । तत्संस्रावेणाऽभिजुहोति तूष्णीम् । यजमानः प्रजापतय इदं० ।

प्रत्याक्रम्य जुह्वामप आनीय सङ्क्षालनमन्तःपरिधि निनयति—वैश्वानरे…स्वधा नम इति । यजमानः—अग्नये वैश्वानरायेदं० । पित्रे पितामहाय प्रपितामहायेदमिति वा । अस्मिन्पक्षे प्राचीनावीतत्वम् । स्रुचं प्रक्षाल्य आहवनीये प्रताप्याऽद्भिः पूरयित्वा बहिःपरिधि निनयति—इमं समुद्रं…परमे व्योमन्निति । समुद्रायेदं, अग्नय इदमिति वा । औपभृतमाज्यं जुह्वामानीय यथाऽऽयतनं स्रुचौ सादयित्वा प्राशित्रमवद्यति दक्षिणस्य पुरोडाशस्योत्तरार्धाद्यवमात्रम्, अज्यायो यवमात्रा…हविरिति । यजमानः अवदीयमाने जपति—अग्निर्मा…शंसादिति । प्राशित्रं स्रुवदण्डेनाऽऽज्यस्थाल्यामक्त्वाऽभिघार्य जघनेन प्रणीताः सादयित्वाऽद्भिः स्रुवदण्डं प्रक्षाल्य निदधाति । ब्रह्मणोऽपि प्रयाजप्रभृत्या प्राशित्राद्वाङ्नियमनम् ॥ इति प्रथमे प्रश्ने चतुर्दशोऽध्यायः ॥

॥ इति चतुर्दशोऽध्यायः समाप्तः ॥

—:o:—

# पञ्चदशोऽध्यायः

अथ कंसं वा चमसं वेडोपह्वनं याचति ॥१॥ तमन्तर्वेदि निधाय तस्मिन्नुपस्तीर्य दक्षिणस्य पुरोडाशस्य दक्षिणाधात् प्ररुज्यावदधाति—मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखाम्' (तै० ब्रा० ३।७।५।६) इति ॥२॥ द्वितीयमवदानानि संभिद्यावदधाति ॥३॥

भव०—कंसं वा चमसं वेति सादने इडापात्रमित्युक्तम्, तदनयोर् अन्यतरद् । इडा उपहूयते तस्मिन्निति इडोपहवनम् ॥१॥ उपस्तरणमयज्ञत्वादाज्यस्थाल्याः । प्ररुज्य भङ्क्त्वा ॥२॥ अवदीयते येभ्यः प्रदेशेभ्य इत्यवदानानि । संभिद्य, यथा भिन्नानि भवन्ति तथा गृह्णीयादिति । मध्ये गृहीते सर्वाणि स्थानानि गृहीतानि भवन्ति ॥३॥

सा०—अथ कसं वा चमसं वेडोपह्वनं याचति । परिकर्मिणमिति शेषः । इडोपहूयतेऽस्मिन्निति इडोपहवनं, पात्रम् । तत् कंसं वा चमसं वा भवति । चमसशब्दो दारुमये पात्रे रूढः । पात्राऽऽसादनकाले स्वयं विशेषोऽनुसन्धेयः कंसं वा चमसं वा प्रणीताप्रणयनं याचति (बौ० श्रौ० १।४।१२) इतिवत्॥१॥ तदन्तर्वेदि[1] निधाय तस्मिन्नुपस्तीर्य । तत्पात्रमुदगग्रं तिर्यञ्चं निधाय । तस्मिन्नुपस्तरणमाज्यस्थाल्याऽऽज्येन, होमानङ्गत्वात् । दक्षिणस्य पुरोडाशस्य दक्षिणाधात्प्ररुज्याऽवदधाति—'मनुना दृष्टां··मुखाम्' इति । प्ररुज्य भङ्क्त्वा । अत्राऽवदीयमानांशाऽपेक्षयैव भङ्गः, न तु पिण्डसम्भेदः, असम्भिन्दन्निति मन्त्रलिङ्गात्, द्वितीयावदाने सम्भिद्यैवेति विशेषविधानाच्च ॥२॥ द्वितीयमवदानानि [2]संभिद्यैवावदधानि । द्वितीयमवदानमवद्यन् अवदानानि अवदानस्थानानि प्रधानयागार्थं पूर्वार्धापरार्धादिभेदेन यान्यवदानस्थानानि तानि सम्भिद्यैव मध्याच्छित्वाऽवदानेन सर्वाऽवदानस्थानसम्मिश्रणं यथा भवति तथेत्यर्थः । द्वितीयमवदानममन्त्रकं, दक्षिणार्धादिति मन्त्रलिङ्गात् ॥३॥

अथ दक्षिणस्यैव पुरोडाशस्य पूर्वार्धान् त्र्यङ्गुलं वा चतुरङ्गुलं वाज्येन सुसंतृप्तं संतर्प्याग्रेण ध्रुवां यजमानभागं निदधाति ॥४॥

---

१. 'तमन्त०' इति कै० सं० ।
२. 'संभिद्याव०' इति कै० सं० ।

भव०—ब्रह्मभागे विकल्पः। ग्रहणपक्षे तत एव गृहीत्वा यजमानभागसमीपे निदधाति। विकल्पश्चेह वचनात्। न दीक्षणीयायां चतुर्धाकरणं पृथक् प्रतिषेधात्। संयुक्तौ ह्येतौ (बौ० श्रौ० २५।६।१०) इति वचनात् ॥४॥

सा०—अथ दक्षिणस्यैव पुरोडाशस्य पूर्वार्धात् त्र्यङ्गुलं वा चतुरङ्गुलं वाऽऽज्येन सुसन्तृप्तं सन्तर्प्याऽग्रेण ध्रुवां यजमानभागं निदधाति। दक्षिणस्यैवेत्यवधारणं पुरोडाशान्तरव्यावृत्त्यर्थम् सर्वपुरोडाशेभ्यो यजमानभागावदानपक्षे देशनियमार्थं दक्षिणस्यैव पुरोडाशस्य पूर्वार्धादिति नियमः। अन्येषान्तु स्थाननियमाऽभावः। त्र्यङ्गुलं वा चतुरङ्गुलं वेति परिमाणनियमः सर्वपुरोडाशेभ्योऽवदानपक्षेऽपि समानः। पक्षद्वयेऽपि यजमानभागस्य त्र्यङ्गुलचतुरङ्गुलयोरन्यतरपरिमाणाऽनतिरेक इत्यर्थः। आज्येन सन्तर्पणमाज्यस्थाल्याऽऽज्यादेवाऽहोमार्थत्वात्। यजमानप्रवासे प्रस्तरेण सह तद्धोमपक्षेऽप्याज्यस्थाल्याज्यादेव सन्तर्पणं, होमस्य तत्प्रतिपत्तिरूपत्वात्।

ब्रह्मभागस्तु वैकल्पिकः, अत्राऽनभिधानात्, प्रदेशान्तरेऽभिधानाच्च। तथाहि—दीक्षणीयायां तस्यै दशतयमुत्सीदति (बौ० श्रौ० ६।३।२०) इत्युपक्रम्य [1]न यजमानभागं करोति न ब्रह्मभागमिति (बौ० श्रौ० ६।३।२०) वचनात् प्रकृतौ ब्रह्मभागसम्बन्धोऽवगम्यते। तत्कर्मान्ते च—न यजमानभागं करोति, न ब्रह्मभागमित्याशीःसंयोजनार्थावेतावुक्तौ भवतः। किमुपक्रममाणो यज्ञमाशिषं वदेदिति। अथाऽपि सुभिक्षो व्रतोपायनीयस्य भवतीति। कस्मै किं सुभिक्षायाऽवद्येत्। यजमानभागस्य खल्वुत्सादनाद् ब्रह्मभाग उत्सीदति। संयुक्तौ ह्येतौ यजमानभागब्रह्मभागाविति (बौ० श्रौ० २५।६।५-१०)। एतौ यजमानभागब्रह्मभागौ आशीःसंयोजनाय। यजमानभागस्य तावदाशिषा संयोजनं 'यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषम्' (तै० सं० १।६।३।१) इति। एतदनुविद्धत्वाच्च ब्रह्मभागस्याऽऽशिषा संयोजनं भवति। एवं सति दीक्षणीयायामेतयोरभावं प्रतिपादयति।

किमुपक्रममाण इति, यज्ञोपक्रमकाले ह्याशिषा भवितव्यम्—देवा गातुविद (तै० सं० १।१।१३।३) इत्यादिना। अत्र तु [2]यज्ञदीक्षितस्य न दीक्षणीयार्थमाशीरुपक्रमो भवति। यदाऽपि दीक्षायाः पूर्वं दीक्षणीयां करोति तदाऽऽशीरुपक्रमोऽपि दीक्षाशेष एवेति। तस्यै दशतयमुत्सीदति इति विशेषवचनात् यजमानभागब्रह्मभागयोर्निवृत्तिः। युक्त्यन्तरमाह-ऽथाऽपीति। व्रतोपायनीयस्य सुभिक्ष इति, यतोऽयं यजमानो व्रतोपायनीयेन सर्पिःपयोमिश्रितेन सुभिक्षस्तृप्तो भवति, अतो न यजमानभागप्रयोजनमिति। दीक्षाभोजनात्प्रागपि दीक्षणीयाया भाविप्रतिसन्धानात्सुभिक्षत्वम्। यजमानभागनिवृत्तौ ब्रह्मभागनिवृत्तिः किमर्थेत्यत उक्तम्—यजमानभागस्य खल्विति। तत्रोपपत्तिमाह—संयुक्ताविति। संयुक्तौ अविनाभूतौ। यत्र यजमानभागस्तत्राऽवश्यं ब्रह्मभागेन भवितव्यमिति कर्मान्तोक्तो नियमः। पूर्वकल्पे तु ब्रह्मभागा-

१. 'न यज०…कर्मान्ते च' इति पाठस्त्रुटितो मद्र० सं०।
२. 'यज्ञ' इति नास्ति वृ० कोशे।

ऽवचनाद्विकल्प इत्यभियुक्ताः । वयन्तु ब्रूमः, न ह्यनुक्तिमात्रं विकल्पं प्रयोजयति विहितेऽर्थे प्रतिषेध इव । तथात्वे पूर्वकल्पाऽनुक्तस्य स्थानान्तरविहितस्य राकादियागस्याऽपि वैकल्पिकत्व-प्रसङ्ग इतीयं दिक् ॥४॥

द्विर्ध्रुवाज्यादवद्यति द्विरुत्तरस्य पुरोडाशस्य द्विः शृतस्य द्विर्दध्नः ॥५॥ अभिघारयति ॥६॥ अथ होतुर्द्विरङ्गुलावनक्ति ॥७॥ जिघ्रेण भक्षयित्वा ॥८॥ चतुरवान्तरेडामवद्यति ॥९॥ उपस्तृणाति ॥१०॥ द्विरादधाति॥११॥ अभिघारयति ॥१२॥

भव०—अभिघारणमाज्यस्थाल्या एवमङ्गुलपर्वणोरञ्जनम् ॥६,७॥ भक्ष-यित्वेति हेतुकर्तरि ॥८॥ अवान्तरेडा इडैकदेशभूता इडाया इत्यर्थः। चतुरवान्तरेडा-मिति वचनात् तत एवोपस्तरणाभिघारणे । ९,१२॥

सा०—द्विर्ध्रुवाज्यादवद्यति द्विरुत्तरस्य पुरोडाशस्य द्विः शृतस्य द्विर्दध्नः। अभिघारयति । द्विर्ध्रुवाज्यादित्येतदुपांशुयाजार्थम् । अत एव तच्चरुपक्षे तस्मादेव द्विरव-दानम् । द्विरुत्तरस्य पुरोडाशस्य । अत्रैकत्वमविवक्षितम् । यावन्त्युत्तराणि पुरोडाशान्तराणि तेभ्योऽवद्यादित्यर्थः । द्विः शृतस्य द्विर्दध्नः, अनयोस्तूष्णीमवदानम् असम्भिन्दन्निति मन्त्र-लिङ्गविरोधात् । अभिघारयति । एतदभिघारणमाज्यस्थाल्याज्यात्सकृदेव । पञ्चावत्तिविषये द्विरभिघारणस्योक्तत्वात् । तथा च सूत्रम्—द्विरभिघारयेत्पञ्चावत्तिनः (आप० श्रौ०-३।२।८) इति । तद्विषये पुरोडाशादेवाऽवदानत्रयं, पश्चात्तृतीयं[1] पञ्चावत्तिनाम् (सत्या० श्रौ० २।३।१२) इति सत्याषाढवचनात् । अस्मिन्नपि पक्षे सकृदेवाऽभिघारणम् । ध्रुवाज्य-सान्नाय्ययोरमन्त्रकमवदानं दक्षिणार्धादसंभिन्दन्निति [2]लिङ्गविरोधात् । अभिघारणमप्याज्य-स्थाल्याज्यादेव, अहोमार्थत्वात् ॥५,६॥ अथ होतुर्द्विरङ्गुलावनक्ति । पर्वणी इति शेषः । तथा चाऽऽश्वलायनः—प्रदेशिन्याः पर्वणी उत्तमे अञ्जयित्वा (आश्व० श्रौ० १।७।१) इति ॥७॥ जिघ्रेण भक्षयित्वा । भक्षणं कुर्वाणं होतारं प्रयोजयित्वा । अत्राऽऽघ्राणस्यैव भक्षत्वम्, अथवा जिघ्रेण संस्कृतं भक्षयित्वेति ॥८॥ चतुरवान्तरेडामवद्यति । इडैकदेशं होतुर्हस्ते चतुर्वारमवद्यति ॥९॥ अवदानप्रकारमाह—उपस्तृणाति । द्विरादधाति । अभिघारयति । उपस्तरणाऽभिघारणयोरपि इडांशत्वस्याऽविशेषात् तयोराज्यान्तराऽप्रसक्ते-राज्यस्थाल्यामिघारणपक्षोऽसमञ्जसः । अतः एव सूत्रम्—लेपादुपस्तरणाऽभिघारणे भवतः (आप० श्रौ० ३।२।७) इति । द्विरादधातीत्यत्र कत्र कर्तृत्वम् इतरत्र प्रयोजकत्वम्; होत्रैव द्वितीयाऽऽदानस्य क्रियमाणत्वात् । तथा चाऽऽश्वलायनः—स्वयं द्वितीयमाददीत

१. 'पश्चार्धात्तृतीयं पश्चावत्तायाः' इति पाठ आनन्दाश्रमसंस्करणे ।
२. 'लिङ्ग' इति नास्ति बृ० कोशे ।

(आश्व० श्रौ० १।७।४) इति । द्वितीयत्वं चोपस्तरणस्याऽवदानत्वविवक्षायां प्राथमिकस्यैव पुरोडाशावदानस्य । पुरोडाशाऽवदानाऽपेक्षायां तु द्वितीयस्यैवेति विवेकः । तथा च सूत्रम्—अध्वर्युः प्रथममवदानमवद्यति, स्वयं होतोत्तरमेतद्वा विपरीतम् (आप० श्रौ० ३।२।६) इति । ।१०-१२।।

समन्वारभन्तेऽध्वर्युश्च यजमानश्च ब्रह्मा चाग्नीध्रश्च ।।१३।। अथ यत्र होतुरभिजानाति—'दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः' (तै० ब्रा० २।६।७।४) इति तद्दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति ।।१४।। अथ यत्र होतुरभिजानाति—'उपहूतोऽयं यजमानः' (तै० ब्रा० ३।५।८।५) इति तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत् (तै० सं० १।७।१) इति ।।१५।।

सा०—समन्वारभन्तेऽध्वर्युश्च यजमानश्च ब्रह्मा चाऽग्नीध्रश्च । अथ यत्र होतुरभिजानाति—'दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः' इति, तद्दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति । यत्र यस्मिन्काले, तत् तदानीं, दक्षिणपुरोडाशस्य चतुर्धाकरणायेडाऽन्वारम्भस्य त्यागः, व्यापृतव्यापारविरोधात् । न चाऽपरित्यज्यैव वामहस्तेन चतुर्धाकरणं युक्तं, तथाऽनुपदेशात्, दक्षिणं प्रतीयादनादेशे (आश्व० श्रौ० १।१।१२,१३) इत्याश्वलायनोक्तेश्च ।।१३,१४।। अथ यत्र होतुरभिजानाति—'उपहूतोऽयं यजमानः' इति, तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेदिति । पशुरूपाया इडाया वायुं वत्सरूपत्वेन मनसा ध्यायेत् । केचित्तु वायो इति सम्बुध्यन्तं शब्दोच्चारणमपीच्छन्ति । अत्राऽध्वर्युयजमानावुपहूतः पशुमानसानीति जपतः, 'उपहूतः पशुमानसानीत्याह' (तै० ब्रा० ३।३।८।४) इति ब्राह्मणानुरोधात् ।।१५।।

उपहूतायामिडायामग्नीध आदधाति षडवत्तम् ।।१६।। उपस्तृणात्यादधात्यभिघारयत्युपस्तृणात्यादधात्यभिघारयति ।।१७।। प्राश्नन्ति ।।१८।। मार्जयन्ते ।।१९।। अथाह—'ब्रह्मणे प्राशित्रं परिहर' इति ।।२०।। परि प्राशित्रं हरन्ति ।।२१।। अन्वपोऽनुवेदेन ब्रह्मभागम् ।।२२।।

भव०—षडवत्तमिडायाः पञ्चमं भागं द्वेधा कृत्वा दधाति । उपस्तरणाभिघारणानि चतुराज्यस्थाल्या इत्यभिप्रायो गम्यते । पशौ षडवत्तवचनात् सवनीयेषु पुरोडाशे । ततः प्राश्यमार्जनोत्तरकालमभिमन्त्र्य विभागेन निर्दिष्टेऽग्नीधे भागं षडवत्तं ददातीति । ततो वेदेन ब्रह्मणे तत इतरयोर्येन केनचित् पात्रान्तरेण ।।१६-२२।।

सा०—उपहूतायामिडायामग्नीध आदधाति षडवत्तम् उपस्तृणात्यादधात्यभिघारयति, उपस्तृणात्यादधात्यभिघारयति । अत्रोपस्तरणाऽभिघारणे आज्यस्थाल्या ज्यादेव । इडायाः पञ्चमभागं द्वेधा कृत्वाऽवदानद्वयसम्पादनात् । तथा च गोपालः—इडायाः पञ्चमं भागं द्वेधा कृत्वा घृतैः सह । षडवत्तं तदग्नीधे इति । अत्र घृतैः सहेति वचनात् न लेपतः तत्प्रसक्तिः ॥१६,१७॥ प्राश्नन्ति । मार्जयन्ते । यजमानपञ्चमा इति शेषः, तेन च इडायाः पञ्चमभागस्याऽऽग्नीध्रसात्कृतत्वादवशिष्टभागचतुष्टयस्य होत्रादयश्चत्वारो भागिन इति गम्यते । प्राशने च वाङ्नियम आमार्जनात् । तथा च सूत्रम्—वाग्यत आसत आमार्जनात् (आप० श्रौ० ३।३।१)इति । मार्जनञ्च यजमानस्य समन्त्रकं, याजमानप्रकरणे मन्त्राम्नानात् । इतरेषां त्वमन्त्रकं, तदनाम्नानात् । मार्जनं नाम बर्हिरन्तर्धानेन पाणावुदकाऽऽसेचनं, शिरसि वा तस्योक्षणमिति । यजमानस्य तु प्रस्तरान्तर्धानेनेति याज्ञिकप्रसिद्धिः । होतुः परिस्तरणान्तर्धानम् । तथा चाऽऽश्वलायनः—परिस्तरणैरञ्जलिमन्तर्धायाऽप आसेचयते तन्मार्जनमिति (आश्व० श्रौ० १।८।२) ॥१८,१९॥

अथाऽह ब्रह्मणे प्राशित्रं परिहरेति । परि प्राशित्रं हरन्ति । प्राशित्रं परिहरन्तीत्यन्वयः । बहुवचनेन, परिहर्तुः परिकर्मिणोऽनियमं द्योतयति । परीत्य हरणं, परिहरणम् । तेनाऽग्रेणाऽऽहवनीयं तद्धरणं द्योतयति ॥२०,२१॥ अन्वपोऽनुवेदेन ब्रह्मभागमिति । [1]परिहरन्तीत्यनुकर्षः । अन्वप इति आहरन्तीत्यर्थः । अथवा, अन्वपः उदकानामुपयोगानन्तरम् । ब्रह्मणा हि प्राशित्रप्राशनानन्तरम् उदकपानेन तन्निगिरणम्, उदकैश्च वागादिमार्जनमित्यादि क्रियते, तदनन्तरं वेदेन ब्रह्मभागं परिहरन्तीत्यन्वयः । अनुवेदेन ब्रह्मभागमिति, अत्राऽऽनन्तर्यार्थेनाऽनुशब्देन ब्रह्मभागद्वयमप्युपसङ्गृह्णाति, यजमानभागसहचरितं चतुर्धाकृतांशञ्च । अत्राऽध्वर्युणा चतुर्धाकरणे, इदं ब्रह्मण इत्यादिना निर्देशमात्रं यजमानकर्तृकं, तदनुरोधेन प्रदाने त्वनियतकर्तृकमिति केचित् । अपरे तु चतुर्धाकृतस्य पुरोडाशस्य दक्षिणारूपत्वात् अथाऽध्वर्यंव (तै० ब्रा० ३।३।८।१०) इति श्रवणाच्च यजमानकर्तृकमित्याहुः ।

अत्रेदं विचार्यते—किमेतच्चतुर्धाकरणं, दक्षिणस्यैव पुरोडाशस्याऽथाग्नेयस्याऽपि वा तद्विकाराणाञ्चेति । तद्विकाराश्च किमष्टाकपालाः पुरोडाशाः उतैकदेवत्या इति । यदि दक्षिणस्याऽन्वारम्भणीयायाम् आग्नावैष्णवस्याऽपि चतुर्धाकरणप्रसङ्गः । आग्नेयविकारत्वं चाऽष्टाकपालानाञ्चेद् आग्नावैष्णवमष्टाकपालं निर्वपेत्सावित्रमष्टाकपालं प्रातर्निर्वपेदित्यादिष्वपि तत्प्रसङ्गः । एकदेवत्यानामाग्नेयविकारत्वे त्वादित्यचर्वादेरपि तत्प्रसङ्ग इति । सर्वत्रैतादृशेष्वस्तु चतुर्धाकरणं को दोष इति चेत्, न, चतुर्धाकरणस्य दक्षिणारूपतया दक्षिणान्तरानुबन्धेषु चतुर्धाकरणस्याऽप्रसक्तेः । अत एव दीक्षणीयादौ दक्षिणान्तरराहित्ये तच्चतुर्धाकरणमाशङ्क्य न बर्हिषदं पुरोडाशं करोति (बौ०श्रौ० ६।३।२०) इत्युक्तम् । अतो न दर्शपूर्णमासव्यतिरिक्तेषु चतुर्धाकरणप्रसङ्ग इति ॥२२॥

---

१. 'परिहरन्तीत्यर्थः । अथवा' इति मद्र० सं० ।

अथान्वाहार्यं याचति ॥२३॥

भव०—अन्वाहार्यं श्रपयित्वा यावता चतुर्णां पर्याप्तिस्तावदस्मिन् काले सिद्ध-मभिघार्य दक्षिणस्यां श्रोण्यामासादयति । **ततो दक्षिणां प्रतिग्रहीष्यत् सप्तदशकृत्वोऽपान्यादिति** (तै० ब्रा० २।३।२।१) वचनात्। सप्तदशकृत्वोऽपान्य देवस्य त्वेत्यारभ्य प्रतिगृह्णामि । ब्रह्मण ओदनमुत्तानस्याङ्गीरसः प्रतिगृह्णात्विति । **चतुर्धाकरणं दक्षिणा** (बौ०श्रौ० २४।२६।१-१०) इत्याचार्येणोक्तम्। अथ दर्शपूर्णमासयोरन्वाहर्यश्च पुरोडाशस्य चतुर्धा करणमित्यादिना, ब्राह्मणे च **यथैवादः सौम्येऽध्वरे** (तै० ब्रा० ३।३।६।७) इत्यादिना। अयमभिप्रायः—यावद् देवतायै दीयते तावदेव तदर्थं सङ्कल्पितं नेतरदिति। एवञ्च व्यादेश उपपन्नो भवति। तथा च लिङ्गं **यो वा अस्य पशुमत्ती**-त्यादि भूतपूर्वगत्या च लक्षणं स्यात्। न च शेषस्य भक्षणमस्ति। न च शेषो यस्य सोऽस्येति शक्यमाञ्जस्येन व्यपदेष्टुम्। तस्मिन् पक्षे प्रतिग्रहणं मन्त्रे मन्त्रोपादानं न तु तन्त्रेणोपादान्न कृतं तन्त्रेण गतं **वाचेऽन्नमिति देवस्य** त्वेत्यादिशेषं तुल्यम्। दक्षिणापथः समञ्जस एव दक्षिणाभिप्रायश्च **नित्योऽन्वाहार्यः** (बौ० श्रौ० १४।२६।१४) इति वचनम् । मन्त्रेण प्रतिग्रहो नोक्तो ब्राह्मणोक्त इति । **छन्दसा ब्राह्मणेन** (बौ० श्रौ० २४।१।१) इति परिभाषासिद्धत्वात् । लिङ्गं च न तु प्रत्ययं मन्त्रानिति प्रतिग्रहमन्त्रानिवृत्त्यर्थः । प्रकृतौ सति सत्रे प्रतिषेध उपपद्यत इति केचिदाहुः। **'यस्यै यस्यै देवतायै दक्षिणामनयत्'** (तै० ब्रा० २।२।५।१) इति नयनलिङ्गं **तस्मात्त्रिष्टुभो लोके** (तै० सं० ६।१।६।३) इति सोमेन यजनलिङ्गेन सोम एव प्रति-ग्रहमन्त्र इति। नयनकाले देवतासम्बन्धाभावाद् वीप्साश्रवणाच्च। विभागोत्तरकालं प्रत्येकं सम्बन्धविषये वीप्सासम्भवात् । नयतेर्दानार्थसामर्थ्यात् तस्मादविशेषेण मन्त्रः। **देवा वै वरुणमयाजयन्निति** सम्बन्धाज्जुहोतीति चोदितेषु अग्निहोत्रादिषु स एतस्मादेवाङ्गाद् दक्षिणा प्रसर्पकादिषु नास्ति विकृतावाग्रायणादौ यथा मन्त्रपाठः तथा प्रत्यक्षत्वाच्चोदकं बाध्येत। तुल्यमिति स्त्रीखट्वेत्यपरे। अश्वतरगर्दभौ समस्तौ व्यस्तौ वा यथा दक्षिणास्रगलंकरणे गंधर्वेभ्यः स्रगप्सरोभ्योऽलङ्करणमिति केचित्। उभाभ्यामेकैकं सम्बन्धयतीति केचित्। **वैश्वानराय रथम्** (तै० ब्रा० ३।१०।४) इति वचनान् मन्त्रपाठस्य दुर्बलत्वाद् विकृत्यर्थः सावित्रः इति केचित्। यदि ज्योतिष्टोमे रथोऽस्ति इतरथोभयोरनवकाशत्वाद् एकार्थत्वाच्च विकल्पः ॥२३॥

सा०—अथाऽन्वाहार्यं याचति। **परिकर्मिणमिति शेषः। अन्वाहार्यशब्दश्च सर्वर्त्विजां भोजनपर्याप्ते दक्षिणारूपेऽन्ने रूढः। तच्चाऽन्वाहार्यपचने पक्वं, दक्षिणाकाले यजमानो याचती-**त्यर्थः तथा च सूत्रम्— 'दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति (आप०-श्रौ० ३।३।१२) इति। **अथ वाऽन्वाहार्यशब्दोऽयमन्वर्थः, दक्षिणान्तरप्रदानान्तरमन्वाहार्य-त्वात्। अत एव चतुर्धाकृतस्य पुरोडाशस्याऽपि दक्षिणारूपत्वमविरुद्धम्। अत एव कर्मान्ते**

नित्योऽन्वाहार्यः (बौ० श्रौ० २४।२९।१४) इत्युक्तम्। नित्यत्वञ्चास्य दक्षिणान्तराऽव्यावर्तनीयत्वम्। ततश्चतुर्धाकरणस्य नित्यत्वाऽनुपदेशादन्वाहार्यव्यतिरिक्तदक्षिणावत्सु व्यावृत्तिः। दक्षिणादाता च यजमानो 'ब्राह्मणा अयं व ओदन' इति ब्रूयात्, पुरोडाशे इदं ब्रह्मण इत्यादिवत्। तथा च सूत्रम्—'तेभ्योऽन्वाहार्यं ददाति—ब्राह्मणा अयं व ओदनः (आप० श्रौ० ३।४।३) इति। यद्यपि पुरोडाशस्य देवतानिर्देशेन निर्वापः, तथापि हुतावशिष्टस्य यजमानाधिपत्याऽपरित्यागात् दक्षिणात्वोपपत्तिः। तदाधिपत्ये च लिङ्गम्—यो वा अस्य पशुमत्ति (तै० सं० ७।२।१०।४) इति। अत्र अस्येति यजमानसम्बन्धनिर्देशः।

प्रतिग्रहीतारश्चत्वार[1] ऋत्विजः समन्त्रकं प्रतिगृह्णीयुः। स मन्त्रो ब्राह्मणाऽऽम्नातोऽनुसन्धेयः। छन्दसा ब्राह्मणेनेति (बौ० श्रौ० २४।१।१) परिभाषोक्तेः। हौत्रशेषप्रश्ने च—'ब्राह्मणेन व्याख्यातो दक्षिणाप्रतिग्रहः' इत्ययेतत्प्रकरण एवोक्तेश्च। स मन्त्रः पुरोडाशाऽन्वाहार्ययोः प्रतिग्रह आवर्तनीयः। वाचेऽन्नम् (तै० ब्रा० ३।१०।३) इति पुरोडाशे ब्रह्मण ओदनम् (तै० ब्रा० ३।१०।३) इत्यन्वाहार्ये विशेषः। न चैवमग्निहोत्रादावपि शरावदक्षिणावौ समन्त्रकप्रतिग्रहप्रसङ्गः, तेषां जुहोतिचोदनाऽऽयत्तत्वात्। ततश्च यजतिचोदनायत्तेष्वेव समन्त्रको दक्षिणाप्रतिग्रहः, देवा वै वरुणमयाजन् (तै० ब्रा० २।२।५।१) इति यजतिचोदनाऽनुबन्धेषु प्रतिग्रहमन्त्राम्नानात्। तथा च सूत्रम्—

दक्षिणानां प्रतिग्रहोष्यन्सप्तदशकृत्वोऽपान्यात् व्यावृत्य प्रतिगृह्णीयात्। देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामि, राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यं तेनाऽमृतत्वमश्यां० प्रतिगृह्णातु इति (आप०श्रौ० १४।११।१-२)। सोमाय वासो रुद्राय गां वरुणायाऽश्वं प्रजापतये पुरुषं मनवे तल्पं त्वष्ट्रेऽजामग्नये वा पूष्णेऽविं निर्ऋत्या अश्वतरगर्दभौ हिमवते[2] हस्तिनं गन्धर्वाऽप्सरोभ्यः स्रगलङ्करणे, विश्वेभ्यो देवेभ्यो धान्यं, [3]वाचेऽन्नमूर्जे वा ब्रह्मण ओदनं, समुद्रायाऽपः, उत्तानायाऽङ्गीरसायाऽनः,वैश्वानराय रथम्। वैश्वानर्यर्चा रथं प्रतिगृह्णीयात्, वैश्वानरः० जागृविः। यत्किञ्चाऽप्राणत् तत्सर्वमुत्तानस्त्वाऽङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्। यद्वाऽनाम्नातमन्त्रं सर्वत्र पुरस्तात्सावित्र उपरिष्टादन्वाधिः। ग्नास्त्वा अकृन्तन्नपसस्त्वा तन्वत वरूत्रयस्त्वावयन्निति एतद्वासस्यनुषजति पुरस्ताद्दैवतात्। त इमे तान्त्रीणां दक्षिणानां प्रतिग्रहणाः स्युर्विज्ञायते च—देवा वै वरुणमयाजयन्स यस्यै यस्यै देवतायै दक्षिणामनयत्तामव्लीनात्तेऽब्रुवन् व्यावृत्य प्रतिगृह्णाम, तथा नो दक्षिणा न व्लेष्यतीति ते व्यावृत्य प्रत्यगृह्णन्ततो वै तान्दक्षिणा नाव्लीनाद्य एवं विद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनातीति तान्त्रीरेवाऽधिकुरुते। वर्हिषा प्रतीयाद् गां वाऽश्वं वा अन्नेन[4] पुरुषं हस्तिनं वा गन्धैः प्रियवचेन च तल्पम् (आप० श्रौ० १४।१२।१-६)

१. '०तारश्च ऋत्विजः' इति वृ० कोशे।
२. हिमवतो' इति मद्र० सं०। ३. 'वाचो' इति मद्र० सं०।
४. 'अङ्केन' इति मद्र० सं०। 'अन्येव' इति वृ० कोशे।

कर्मान्ते च—"किं दक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुवन्ध इति। उपदोहदक्षिणमग्निहोत्रमित्येके। शरावदक्षिणमग्निहोत्रमित्येके। यत्सायं जुहोति रात्रिमेव तेन दक्षिण्यां कुरुते। यत्प्रातरहरेव तेन दक्षिण्यं कुरुते। यत्ततो ददाति सा दक्षिणेति। यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवति। अथ दर्शपूर्णमासयोरन्वाहार्यश्च पुरोडाशस्य च चतुर्धाकरणम्। विज्ञायते 'दक्षिणैवास्यैषाऽथो यज्ञस्यैव छिद्रमपि दधाति' इति। यथैवादः सौम्येऽध्वरे आदेशमृत्विग्भ्यो दक्षिणा नीयन्ते एवमेवाऽपि दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति। वासोदक्षिणाः काम्या इष्टयः, याश्चाऽनादिष्टदक्षिणाः। गोदक्षिणः पशुबन्धः। नित्योऽन्वाहार्यः (बौ० श्रौ० २४।२६।१-१४) इति।

न बर्हिषदं पुरोडाशं करोति नाऽन्वाहार्यं याचति (बौ० श्रौ० ६।३।२०) इति। दक्षिणोक्ताविवैतावुक्तौ भवतः। 'अन्वाहार्य उ खल्विह दक्षिणाः प्रतिख्याता भवन्ति, इष्टिकल्पे च। वासोदक्षिणाः काम्या इष्टयो, गोदक्षिणः पशुबन्धो, नित्योऽन्वाहार्य इति'। यानि हवींषि कामेन वा दक्षिणया वा व्यपेतानि स्युर्नानावर्हीष्येव[1] तानि जानीयात्। आदेशादेव दक्षिणाव्यपेतं समानवर्हिर्भवति। नेष्टीरुपांशुयाजोऽनुसमेति।

द्वैधे विशेषः—आज्यहविष्यन्वाहार्यस्य करण इति। कुर्यादिति बोधायनः। न कुर्यादिति शालीकिः (बौ० श्रौ० २०।१३)। आज्यहविःष्विति देविकाहविःष्वाञ्जोगविपक्षे आज्येनैव देविका यजेतेत्याञ्जोगविः (बौ० श्रौ० २१।२६) इत्युक्तत्वात्। अन्वाहार्यस्याऽऽसादन इति। अग्रेण यजमानञ्च ब्रह्माणञ्च पर्याहृत्य दक्षिणस्यां श्रोण्यामासादयेदिति बोधायनः। अत एव दक्षिणस्यां श्रोण्यामिति शालीकिः (बौ० श्रौ० २०।१३)।

सूत्रार्थस्तावत्—दक्षिणेति दक्षतेर्धातोः [2]समृद्धिकर्मणः दक्षयति पुरुषं प्रतिग्रहीतारं वर्धयतीति दक्षिणा। सप्तदशकृत्वोऽपाननम् ऊर्ध्वं वायोर्नयनम्। व्यावृत्य पृथक्कृत्य, आत्मानं प्रतिग्रहीतारं च। अयमर्थः—न स्वयं प्रतिग्रहीता, किन्त्वग्न्यादयो देवता एवेति। द्रव्यविशेषेण प्रतिग्रहीतृदेवतानिर्देशः, साधारण्येन कामस्य दातृत्वनिर्देशश्च व्यावर्तनमित्युच्यते। मनवे तल्पमिति। तल्पशब्दः शय्यावचन इत्येके। अन्ये तु स्त्रीवचन इति व्याचक्षते। प्रियवद्येन च तल्पमिति। प्रति. हकाले प्रियोक्तिपूर्वकप्रतिग्रहः स्त्रियामेवोचित इति। त्वष्ट्रेऽजामिति, निर्ऋत्या अश्वतरगर्दभाविति, एवमादिषु च लिङ्गसङ्ख्यानुगुण्येन ऊहो न कार्यः, प्रकृतिवदेव तेनाऽमृतत्वमश्याम् (तै० आ० ३।१०) इति जप इति केचित्। अपरे तु यथार्थम् ऊहनियमं मन्वानाः, विकृतावेवोपदिष्टत्वाच्च, तयाऽमृतत्वमश्यां, ताभ्यामित्याद्यूहनीयमित्याहुः। अश्वतरो वेसरः। अश्वतरगर्दभयोश्च युगपत् प्रतिग्रहः। सर्ववेदसदक्षिणे वा, यथाश्रद्धदक्षिणे वा वैमृधे वा प्रसक्त इति। गन्धर्वाऽप्सरोभ्यः स्रगलङ्करणे इत्यत्र यथासङ्ख्यपक्षमपहाय द्वयोरपि दक्षिणासमुच्चयपक्षेप्यूहो वैकल्पिकः।

१. 'नानाहवीष्येव' इति वृ० कोशे। २. 'समर्धयति कर्मणः' इति वृ० कोशे।

वाचेऽन्नमिति, अद्यत इत्यन्नम्। एतेन चतुर्धाकृतपुरोडाशाद्युपसङ्ग्रहः। एवञ्चाऽपूपफलमूलशाकादिप्रतिग्रहे, वाचेऽन्नेमित्येव प्रतिग्रहः सिध्यति। ब्रह्मण ओदनमिति। यद्यप्यन्नशब्दोऽयमोदनवचनः, तथाऽपि देवताभेदेन पृथगभिधानाद्विशेषशब्दसन्निधौ सामान्यशब्दस्तदितरविशेषे वर्तत इति न्यायेन भवति ओदनाऽतिरिक्ताऽन्नवचनत्वमन्नशब्दस्य। समुद्रायाऽप इति, अप्शब्देन कूपतटाकादीनुपलक्षयति। तद्दानाञ्च सर्ववेदसदक्षिणे सम्भवति। अनः शकटम्। रथश्चतुर्विधः—देवरथः, साङ्ग्रामिकः, सांयात्रिकः, क्रीडारथ इति। देवतोत्सवादिषु प्रसिद्धो देवरथः, स च मनुष्यवाह्यो भवति। सङ्ग्रामोपयुक्तः साङ्ग्रामिकः स त्वश्ववाह्य एवेति। यात्रादिषूपयुक्तः सांयात्रिकः। स त्वनडुद्वाह्यो वा भवति। क्रीडारथस्तु यथारुचि निर्मातव्यः। एवं चतुर्विधस्याऽपि रथस्य प्रतिग्रहे वैश्वानराय रथमिति। अनाम्नातमन्त्राणां त्वप्राणिनां प्राणिनाञ्च प्रतिग्रहे ब्राह्मणोक्तिरनुसन्धेया।

यत्किञ्च प्रतिगृह्णीयात्तत्सर्वम् उत्तानस्त्वाऽङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात् (तै० ब्रा० २।३।५।६) इति। एवकारेण सावित्राऽन्वाध्योर्व्यावृत्तिः। देवस्य त्वेत्यारभ्य देवि दक्षिण इत्यन्तः सावित्रः। तेनाऽमृतत्वमश्यामित्युपक्रम्योत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्यन्तोऽन्वाधिः। प्राण्यप्राणिसमुच्चयेऽप्यनाम्नातमन्त्रे प्राक्तन एव न्यायः। 'ग्नास्त्वा कृन्तन्' इत्यारभ्य 'वरूत्रयस्त्वा' इत्यन्तो मन्त्रो वासस्यनुषञ्जनीय इति सौत्रः पक्षो न त्वस्माकम्, ब्राह्मणाऽनुक्तेरभियुक्तैरस्वीकाराच्च। त इमे दक्षिणामन्त्राः तान्त्रीणां तन्त्रसम्बंधिनीनां याज्ञिकीनामित्यर्थः, न तु लौकिकीनाम्। 'देवा वै वरुणमयाजयन्' इत्यार्थवादबलादित्यनुसन्धेयम्। बर्हिषा प्रतीयाद् गां वा (तै० ब्रा० २।३।३।५) इत्यादि सर्वदक्षिणानां हस्तेन प्रतिग्रहः। तत्र गवाश्वयोः प्रतिग्रहे वामहस्तेन तृणं प्रदर्शयन् दक्षिणहस्तेन प्रतिगृह्णीयात्। एवं पुरुषहस्तिनोः प्रतिग्रहे वामहस्तं केवलं प्रदर्शयन्, वासीप्रतिग्रहे तु सुगन्धहस्तः प्रियं ब्रुवाणः प्रतिगृह्णीयादिति। अत्र दर्शपूर्णमासयोर्वाचेऽन्नं ब्रह्मण ओदनमित्येतावदुपयुक्तम्। अवशिष्टानान्तु यथालिङ्गमग्निष्टोमे विकृतौ चोपयोगः। अग्निष्टोमस्य सर्ववेदसदक्षिणत्वं सहस्रदक्षिणत्वञ्च श्रूयते—सर्ववेदसे वा सहस्रे वावक्लृप्तोऽति ह्यप्रवत य एवं विद्वानग्निष्टोमेन यजते (तै० सं० ७।१।१।३) इति ॥२३॥

उद्वासयन्त्येतद्धविरुच्छिष्टम् ॥२४॥

भव०—उच्छिष्टानामुद्वासने विधिरुक्तो द्वैधे (बौ० श्रौ० २०।१४) ॥२४॥

॥ इति पञ्चदशोऽध्यायः समाप्तः ॥

सा०—उद्वासयन्त्येतद्धविरुच्छिष्टम्। एतदित्यन्वाहार्यं निर्दिशति। हविरुच्छिष्टमिति तु दारुपात्रगतं सान्नाय्यञ्च न त्वाज्यम्। तस्योत्तरत्रोपयोगवत्त्वेन हविष्ट्वाद्धविरुच्छिष्टशब्दवाच्यत्वाऽभावादिति। द्वैधे विशेषः—अन्वाहार्यस्योद्वासन इति। अग्रेण स्रुच उदञ्चमुद्वासयेदिति बोधायनः। जघनेन स्रुच उदञ्चमिति शालीकिः। हविरुच्छिष्टानामुद्वासन इति। अग्रेण स्रुच उदञ्चमुद्वासयेदिति बोधायनः। जघनेन

स्रुच उदञ्च्युद्वासयेदिति[1] शालीकिः (बौ० श्रौ० २०।१४) इति। अत्र हविरुच्छिष्टोद्वासनममन्त्रकम्। अन्वाहार्यन्तूद्वास्यमानं ब्रह्माऽनुमन्त्रयते 'यज्ञो दिवं रोहतु' (तै० सं० १।६।३।२) इत्यादिना। तथा च ब्रह्मप्रकरणे वक्ष्यति—अथैनदग्रेण स्रुच उदञ्चन्नीयमानमनुमन्त्रयते (बौ० श्रौ० ३।२६।३) इति। तदेतदुद्वासनमस्मिन्काल एव विधेयमनुद्वासनेनाऽनूयाजार्थाऽऽश्रावणे प्रायश्चित्ताऽऽम्नानश्रवणात्। तथा च सूत्रम्—यदि [हविः] शेषाननुद्वासीताऽनूयाजैरभ्याश्रावयेत् (आप० श्रौ० ९।१२।१) इत्यादि ॥२४॥

अत्र प्रयोगक्रमः—

कंसं वा चमसं वा यत्सादितमिडापात्रं तदन्तर्वेद्यपरेण स्रुचस्तिर्यञ्चं निधायाऽऽज्यस्थाल्या घृतेन तस्मिन्नुपस्तीर्य दक्षिणस्य पुरोडाशस्य दक्षिणार्धाद्भङ्क्त्वाऽवदधाति—'मनुना दृष्टां···मुखाम्' इति। मध्यात्तूष्णीं द्वितीयाऽवदानम्। एतस्यैव पूर्वार्धाद्यजमानभागमवदाय त्र्यङ्गुलमात्रं चतुरङ्गुलं वा कृत्वा वामहस्ते निधायाऽऽज्यस्थाल्याज्येन समज्य दक्षिणहस्तेनाऽग्रेण ध्रुवां निदधाति। यजमानभागेऽवदीयमाने जपति—'यो मेऽन्ति···जेषम्' इति। यदि ब्रह्मभागं करोति, एतस्मादेव ब्रह्मभागमपि यजमानभागवदसन्तर्प्यं निदधाति। [2]अयमपि इडावदानान्तेऽवदेय[3] इति केचित्। उपांशुयाजशेषादिडायां द्विरवद्यति। सर्वेषां पुरोडाशानां दक्षिणार्धान्मध्याच्च द्विरवदानम्। दोहयोरप्यमन्त्रकं द्विर्द्विरवदानम्। ऐडं स्थाल्याज्यादभिघार्य स्थाल्याः स्रुवेणाऽऽदाय होतुः प्रदेशिन्या उत्तमे च पर्वणी अनक्ति। होता जिघ्रेण भक्षयित्वोदकं स्पृशति। तस्य हस्ते इडाज्यलेपाद्धस्तेनोपस्तीर्य तत्स्थहविषः सकृदादधाति। होता द्वितीयमाददीत। अध्वर्युरवदानद्वयमिडास्थाऽऽज्यलेपात्पूर्ववदभिघारयति। इडां होत्रे प्रदायाऽन्वारभन्ते ब्रह्माऽध्वर्युयजमानाऽऽग्नीध्राः। इडामाह्रियमाणामनुमन्त्रयते यजमानः—'सुरूपवर्षवर्णे···मघोनी' इति।

यदा होता 'दैव्या अध्वर्यव' इति ब्रूयात्तदाऽध्वर्युरिडां विसृज्य दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषि निदधाति। यदा होता — 'उपहूतोऽयं यजमानः' इति ब्रूयात्तदाऽध्वर्युर्यजमानश्च 'उपहूतः पशुमानसानि' इति ब्रूतः। यजमान इत्येके। आग्नीध्रहस्तेऽध्वर्युः स्थाल्याज्येनोपस्तीर्येडायाः पञ्चमं भागं द्वेधा कृत्वाऽर्धमवदधाति। स्थाल्याज्यादभिघारयति। पुनरप्येवं कृते षडवत्तं भवति। होत्राऽवान्तरेडां प्राश्यमानां यजमानोऽनुमन्त्रयते - 'जुष्टिरसि···गमेयम्' इति। होतृव्यतिरिक्ता यजमानादयस्तूष्णीं प्राश्नीयुः। अन्तर्वेदि बर्हिषि यजमानव्यतिरिक्तानामध्वर्युब्रह्माऽऽग्नीध्राणां तूष्णीं मार्जनम्। यजमानो 'मनो ज्योतिः···बृहस्पतिस्तनुता···मादयन्ताम्' इत्यनेन मन्त्रेण प्रस्तरस्याऽधस्थाद्दक्षिणहस्तं निधाय सव्येन प्रस्तरस्योपरि जलमानीय तच्छिरस्याऽऽनयते।

अध्वर्युः ब्रह्मणे प्राशित्रं परिहरेति प्रैषमाह। आग्नीध्रेणाऽग्रेणाऽऽह्रियमाणं[4] प्राशित्र

१. 'उदञ्चीति' इति कौ० सं०।
२. 'उभयमपि' इति वृ० कोशे।
३. '०देयमिति' इति वृ० कोशे।
४. '०ध्रेणाहवनीयमाह्रियमाणं' इति वृ० कोशे।

ब्रह्मा प्रतिपश्यति—'सूर्यस्य···पश्यामि' इति प्राशित्रं हस्ताभ्यां प्रतिगृह्णाति—'देवस्य त्वा ···हस्ताभ्यां प्रतिगृह्णामि' इति। अन्तर्वेदि भूम्यां सादयति—पृथिव्यास्त्वा नाभौ सादयामि' इति। प्राशित्रगतं हविरवेक्षते—'सुपर्णस्य त्वा गरुत्मतश्चक्षुषाऽवेक्षे' इति। अङ्गुष्ठोपकनिष्ठिकाभ्यां तत्स्थं हविर्गृहीत्वाऽतिहाय दन्तान् जिह्वाग्रे निदधाति—'अग्नेस्त्वाऽऽस्येन प्राश्नामि' इति। तूष्णीमपः पीत्वाऽद्भिः सह पुरोडाशनिगिरणं करोति—'ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणा' इति। उच्छिष्टदोषो न भवति विहितत्वात्। आचम्याऽन्तर्वेदि बर्हिष्यद्भिस्तूष्णीं मार्जयित्वा पुनस्तूष्णीं प्रत्यङ्गमपश्चं स्पृष्ट्वा वक्ष्यमाणमन्त्रलिङ्गान्यङ्गानि सम्मृशति—'वाङ्म आसन् नसोः प्राणः···मा मा हिंसीः' इति। 'मयि प्राणा मयि प्राणाः' इत्यनेन वा प्रत्यङ्गमावृत्य संस्पर्शनम्।

एतस्मिन्काले यजमानो बर्हिषदं पुरोडाशमभिमन्त्रयते—'ब्रध्न पिन्वस्व···दसत्' इति। चतुर्धाकृतं निर्दिशति—'इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीधः' इति। प्रथममाग्नीध्रभागं द्वेधा विभज्य तस्य हस्ते आज्यस्थाल्याज्यात्स्रुकुदुपस्तीर्य एकतरमवधाय पुनरुपस्तीर्याऽन्यतरमवधाय द्विरभिघारयति। वेदेन ब्रह्मणे भागद्वयं परिहरति। ब्रह्माऽऽहृतौ प्राशित्रे निदधाति। पात्रान्तराभ्यामितरयोः[1]···॥ इति प्रथमे प्रश्ने पञ्चदशोऽध्यायः॥

॥ इति पञ्चदशोऽध्यायः समाप्तः॥

—:o:—

१. अतोऽग्रे 'अत्र पङ्क्तिचतुष्टयं त्रुटितम्' इति कोशेषु पाठः।

# षोडशोऽध्यायः

अथ संप्रैषमाह—'ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीदग्नीन् सकृत्सकृत्संमृड्ढि' इति ॥१॥ प्रसूतोऽत्रैतां समिधं मध्यत आहवनीयस्याभ्यादधाति ॥२॥ अथैष आग्नीध्रोऽस्फ्यैरेवेध्मसंनहनैः परिधीन् संमार्ष्टि सकृन्मध्यमं सकृद्दक्षिणार्ध्यं सकृदुत्तरार्ध्यम् ॥३॥ सकृदाहवनीयमुपवाजयति—'अग्ने वाजजिद्वाजं त्वाग्ने सस्वांसं वाजं जिगीवांसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नाद्याय' (तै० ब्रा० ३।७।६।१७) इति ॥४॥ अथैतानीध्मसंनहनान्यद्भिः संस्पर्श्याहवनीयेऽनुप्रहरति—'यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा' (तै० ब्रा० ३।३।२।५) इति ॥५॥

भव०—समिधमाधाय संमृड्ढीत्यपि सम्बन्धे समिधमाधाय प्रस्थास्याम इति सम्बन्धः, समिदाधानोत्तरकालम् अथैष आग्नीध्र इत्यारम्भात्। बहुवचननिर्देशो बर्हिःसन्नहनवत् ॥१॥ अत्र प्रहर्ता आग्नीध्र एव। अत्रापि रुद्रसम्बन्धादुपस्पर्शनमेके। आग्नीध्रः प्रहर्तेत्यन्यस्य लिङ्गं सकृत् संमृड्ढीति अथाध्वर्युः पृषदाज्यं विहृत्य (बौ० श्रौ० ४।१०।६) इति अध्वर्युग्रहणमितरथा 'अध्वर्युः संनहनान्यनुप्रहृत्य' इत्यारप्स्यत ॥५॥

सा०—अथ सम्प्रैषमाह—'ब्रह्मन्प्रस्थास्यामः समिधमाधायाऽग्नीदग्नीन् सकृत्सकृत्संमृड्ढि' इति। तदेतद् ब्रह्माणमाग्नीध्रञ्च प्रति सम्प्रैषवाक्यद्वयम्। ब्रह्मन्प्रस्थास्यामः समिधमाधायेत्येकम्, उत्तरञ्चापरम्। प्रस्थास्याम इति बहुवचनमविवक्षितमेव। प्रस्थास्यामः, अनूयाजार्थं प्रतिपद्यामहे। किं कृत्वा, समिधमाधायेति सम्बन्धः, अनूयाजेभ्यः समिधमतिशिनष्टीति दर्शनात्, या समिदतिशिष्टा तामाधायेत्यर्थः। केचित्समिधमाधायेत्येतदुत्तरप्रैषवाक्यतया व्याचक्षते, समिधमाधाय सम्मृड्ढीति। तन्मते ओं प्रतिष्ठेति ब्रह्मप्रसवो न सङ्गच्छते, अस्य गमनाऽनुज्ञार्थत्वापत्तेः। ओमिति चेन्नैतदेवम्। ओं प्रतिष्ठेति समिधमनुजानीयात् (आश्व० श्रौ० १।१३।७) इत्याश्वलायनवचनविरोधात्। ततः समिदाऽऽधानस्याऽध्वर्युकर्तृकत्वेन तदनुज्ञानमेवोपपन्नम्। आग्नीध्रकर्तृकत्वेऽप्याश्वलायनवचनविरोध इति चेन्न, ब्रह्मन्प्रस्थास्याम इति प्रैषस्याऽनुत्तरत्वप्रसङ्गात् ॥१॥

प्रसूतोऽत्रैतां समिधं मध्यत आहवनीयस्याऽभ्यादधातीति। ओं प्रतिष्ठेति ब्रह्मणाऽनुज्ञातोऽध्वर्युः एतां अनूयाजाहुत्याधारभूतां समिधं मध्यत आहवनीयस्य। सप्तम्यर्थे

तसि: । अत्रेति विशेषणात्, एतेनाऽग्रेणाऽऽघारसंभेदं प्रतीचस्त्रीननूयाजान्यजति (आप० श्रौ० ३।५।१) इति सौत्रः पक्षोऽनङ्गीकृत इत्यवगन्तव्यम् ॥२॥ अथैष आग्नीध्रोऽस्फ्यैरेवेध्मसन्नहनै: परिधीन्सम्मार्ष्टि, सकृन्मध्यमं सकृद्दक्षिणार्ध्यं सकृदुत्तरार्ध्यम् । सकृदाहवनीयमुपवाजयति—'अग्ने वाजजित्'''ससृवांसं'''मन्नाद्याय' इति । अस्फ्यैरेवेत्यवधारणेन, सह स्फ्यैः उद्धृतस्फ्यैर्वेति विकल्पो नाऽश्रित इति द्योतयति ॥३,४॥ अथैतानीध्मसन्नहनान्यद्भिः संस्पर्श्याऽऽहवनीयेऽनुप्रहरति—'यो भूतानामधिपती'''तव स्वाहा' इति । इध्मसन्नहनानीति बहुवचनेन बर्हि:सन्नहनवच्छुल्वरूपताऽपनयनेन दर्भरूपतया बाहुल्यं द्योतयति । प्रहर्ता त्वाग्नीध्र एव, न त्वध्वर्युः । पशौ सकृत्संमृड्ढीति प्रेषानन्तरम् अथाऽध्वर्युः पृषदाज्यं विहृत्य (बौ० श्रौ० ४।१०।६) इति लिङ्गदर्शनात् । अन्यथा 'इध्मसन्नहनान्यनुप्रहृत्य पृषदाज्यं विहृत्य' इत्येव ब्रूयात् । रौद्रत्वादुदकोपस्पर्शनमाग्नीध्रयजमानाभ्यां कार्यम् । न हि सविशेषणत्वं रौद्रत्वनिवर्तकं, बहुवचनान्तवत् । तथा च प्राङ् निरूपितम् ॥५॥

अथ जुहूपभृतावादायात्याक्रम्याश्राव्याह—'देवान् यज' ((तै० ब्रा० २।६।६।३) इति ॥६॥ वषट्कृते जुहोति—'यज यज' (श० ब्रा० १।५।३।८) ॥७॥ त्रीन् प्रतीचोऽनूयाजान् यजति ॥८॥ प्राचान्ततः संभिनत्ति ॥६॥

भव०—देवान्यजेति सर्वविषयं बहुवचनं न भिन्नविषयम् । ततश्च मध्यमोत्तमयोर्द्वौ यजयजेति शब्दौ । प्रयोजनमपर्बर्हिषावनूयाजावित्यत्र देवौ यजयजेति । भिन्नविषयत्वे देवानित्येव भवितव्यम् । भिन्नविषयत्वमेवात्र युक्तं कर्मान्तरस्याश्रवणात् ॥६,७॥ प्रत्यगपवर्गनिवृत्त्यर्थं प्राचान्तत इति सम्भेदः ॥६॥

सा०—अथ जुहूपभृतावादायाऽत्याक्रम्याऽऽश्राव्याऽऽह 'देवान् यज' इति । वषट्कृते जुहोति । देवान्यजेत्ययं प्रैषः सर्वाऽनूयाजार्थः । तथाऽपि मध्यमोत्तमयोः पुनर्यज यजेत्यभिधानात्तयोर्द्वियंजत्वं सिध्यति । द्वियंजत्वनियमे च मध्यमोत्तमयोर्लिङ्गं महापितृयज्ञे—अपबर्हिषावनूयाजौ यजति (तै० ब्रा० १।६।६।१०) इत्यत्र देवौ यजयज (बौ० श्रौ० ५ १५।२७) इति प्राथमिकं सम्प्रैषमुक्त्वा यजेत्युत्तरस्य सूत्रोक्तिः । एतदनुसारेण कल्पव्याख्यातारो बहव उत्तरयोर्द्वियंजत्वपक्षमङ्गीकृत्य व्याख्यातवन्तः । तदेतदभियुक्तानामनभ्यर्हितं, यतस्तैर्देवान्यजेत्ययं प्रैषः पूर्वानूयाजशेषतयोक्तः, देवशब्दस्य बहुवचनान्तस्य सर्वाऽनूयाजविषयत्वेन मध्यमोत्तमयोर्यजयजेति वचनमिति प्राथमिकस्य यजशब्दस्याऽप्युत्तरयोरनुकर्षात्सर्वार्थत्वमुत्तरयोर्द्वियंजत्वञ्च युक्तमिति चेत् देवौ यजयजेति, वषट्कृते जुहोतीति कल्पविरोधात् । अत्र ह्यनूयाजद्वयस्य यजयजेति द्वयमेवाऽऽम्नातम्, नोत्तरत्र पुनर्यजेति । ततो यथासङ्ख्येन मध्यमोत्तमयोरेकयजत्वमेवाऽऽचार्याऽभिमतमिति ॥६,७॥ त्रीन्प्रतीचोऽनूयाजान्यजति । प्रतीचः प्रत्यगपवर्गान् ॥८॥ अत्र विशेषमाह—प्राचाऽन्ततः सम्भिनत्ति । अन्ततः प्रत्यग्घूयमानम् अनूयाजं सन्ततया धारया प्राथमिकेन संयोजयेत् । अवर्जनीयतया मध्यमेनाऽपि संयोजनम् ।

तथा च सूत्रम्— पूर्वार्धे प्रथमं समिधि जुहोति, मध्ये द्वितीयं, प्राञ्चमुत्तमं संस्थाप्यैते[1] एवानुसम्भिद्य (आप० श्रौ० ३।५।२) इति। द्वैधे विशेषः—अनूयाजानां होम इति। सूत्रं बोधायनस्य। प्रतीचीरेवैता आहुतीः संस्थापयेदिति शालीकिः (बौ०श्रौ० २०।१४) नाऽस्मिन्पक्षे प्राचाऽन्ततः सम्भेद इत्यर्थः। अत्र देवान्यजेति सम्प्रैषात् [2]देवदैवत्वभ्रमं वारयितुमुक्तं कर्मान्ते—किंदेवत्या उ खल्वनूयाजा भवन्तीत्याग्नेया इत्येव ब्रूयात्। विज्ञायते तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्धे (बौ० श्रौ० २४।३।१०-१२) इति। एवञ्च देवशब्दोऽग्निवचनः। बर्हिरादिविशेषणेन तद्भेदाद् बहुवचनम्। अग्निमिति जात्येकवचनम् ॥९॥

अथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति—'वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्' (तै० सं० १।१।१३।१) इति ॥१०॥ दक्षिणेन जुहूमुद्गृह्णाति ॥११॥ 'अथासपत्नाँ इन्द्रो मे निग्राभेणाधराँ अकः' (तै० सं० १।१।१३।१) इति सव्येनोपभृतं निगृह्णाति ॥१२॥ 'उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन' (तै० सं० १।१।१३।१) इति प्राचीं जुहूमूहति ॥१३॥ 'अथासपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्' (तै० सं० १।१।१३।१) इति प्रतीचीमुपभृतं प्रव्यूहति ॥१४॥ प्राच्या परिधीननक्ति—'वसुभ्यस्त्वा' (तै० सं० १।१।१३।१) इति मध्यमं 'रुद्रेभ्यस्त्वा' (तै० सं० १।१।१३।१) इति दक्षिणम् 'आदित्येभ्यस्त्वा' (तै० सं० १।१।१३।१) इत्युत्तरम् ॥१५॥

भव०—तयोरुपरि नयनं जुहूमुद्गृह्णाति उद्यच्छति, निगृह्णाति अधः प्रेरयति। प्राचीं जुहूमूहत्यादक्षिणादंसाद्। उपभृतः प्रत्यूहनं प्रत्यग्-बिलीकरणम् ॥११-१४॥ रुद्रेभ्यस्त्वेत्यत्राप उपस्पर्शनम् ॥१५॥

रा०—अथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति 'वाजस्य···अग्रभीद्' इति। वाजवतीति ऋग्द्वयस्य समुदायसंज्ञा। ऋगपेक्षया च द्विवचनम्। तेनोत्तरत्र वाजशब्दाऽभावेऽपि न दोषः। व्यूहनमिति च उद्ग्रहणादिकर्मचतुष्टयस्य समुदायसञ्ज्ञा। तच्च कर्मचतुष्टयमृग्द्वयाऽन्तर्गतमन्त्रचतुष्टयेन क्रमादनुष्ठेयमित्याह—'वाजस्य··· अग्रभीत्' इति ॥१०॥ दक्षिणेन जुहूमुद्गृह्णाति। दक्षिणेन हस्तेन जुहूमुद्धृत्य गृह्णाति, ॥११॥ 'अथा···अकः' इति सव्येनोपभृतं निगृह्णाति। न्यक्कृत्य गृह्णाति,

१. संस्थापन्नितरावनु०' इति मैसूर सं०।

२. 'देवदेवत्व०' इति वृ० कोशे।

अन्तःपीडयतीत्यर्थः। हस्तन्यक्करणं जुहूद्ग्रहणेऽपि समानं, न्यक्करणमवाक्करणम् ॥१२॥ उद्ग्राभं···अवीवृधन्' इति प्राचीञ्जुहूमूहति। आदक्षिणांऽसात् ॥१३॥ अथासपत्नान् ···व्यस्यताम्' इति प्रतीचीमुपभृतं प्रत्यूहति। उत्तरां श्रोणिं प्रापयति। द्वैधे विशेषः— वाजवत्योर्व्यूहन इति। स ह स्माऽऽह बोधायनोऽक्ष्णया प्रतीचीमुपभृतं प्रत्यूहेदद्भि-श्चैनां संस्पृशेदिति। अत्रो ह स्माऽऽह शालोकिः प्राचीनपुष्करे एवैने विकर्षेन्न चोपभृतमद्भिः संस्पृशेदिति (बौ० श्रौ० २०।१४)। एतस्मिन्पक्षे प्राचीनपुष्करयोः जुहूपभृतोः प्राचीमाकर्षणं समानम्, उपभृदुपस्पर्शनतदभावयोर्विशेषः ॥१४॥ प्राच्या परिधीननक्ति 'वसुभ्यस्त्वा' इति मध्यमम्, 'रुद्रेभ्यस्त्वा' इति दक्षिणम्, 'आदित्येभ्यस्त्वा' इत्युत्त-रम्। प्राच्या जुह्वा, द्वैधपक्षे तु जुहूपभृद्भ्याम्, उभयोरपि प्राग्देशसम्बन्धात्। एवञ्च वसाहवनी-सम्भवे तयाऽपि। उपभृतः प्राङ्नयनपक्षे पृषदाज्यधान्या अपीति गम्यते, अन्यथा जुह्वा परिधीन-नक्तीति ब्रूयात्। रुद्रेभ्यस्त्वेत्यत्रोदकस्पर्शनं प्रागेव प्रतिपादितम् ॥१५॥

अथोपभृतमद्भिः संस्पर्श्य यथायतनं स्रुचौ सादयित्वा स्रुक्षु प्रस्तर-मनक्ति ॥१६॥ 'अक्तं रिहाणाः' (तै० सं० १।१।१३।१) इति जुह्वामग्राणि 'वियन्तु वयः' (तै० सं० १।१।१३।१) इत्युपभृति मध्यानि, 'प्रजां योनिं मा निर्मृक्षम्' (तु०—तै० सं० १।१।१३।१) इति ध्रुवायां मूलानि ॥१७॥ अथ प्रस्तरात्तृणं प्रच्छिद्य जुह्वामवदधाति ॥१८॥ अथाश्रावयति—ओ श्रावय, अस्तु श्रौषट् (तै० सं० १।६।११।१) 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि' (तु०—तै० ब्रा० ३।३।८.११) इति ॥१९॥

भव०—प्रच्छिद्य पृथक्कृत्य, करणत्वात् सूक्तवाकस्यान्ते प्रहरणम् ॥१८॥

सा०—अथोपभृतमद्भिः संस्पर्श्य। व्यूहनकाले एवाऽद्भिः संस्पर्शनाऽभावपक्षे त्वयं कालः। यथायतनं स्रुचौ सादयित्वा स्रक्षु प्रस्तरमनक्ति। प्रस्तरमेवाऽनक्ति, न तु शाखा-पवित्रम्। प्रह्रियमाणत्वाऽविशेषाच्छाखापवित्रस्याऽप्यञ्जनमिति[1] चेदञ्जनस्य प्रहरणाऽनङ्ग-त्वात्। यदि स्यात्प्रहरणाऽङ्गताऽञ्जनस्य प्रहरणाऽभावेऽञ्जनं न स्यात्। उपसदादौ हि न प्रस्तरप्रहरणम्, अञ्जनन्त्वस्ति। अतः प्रहरणाऽङ्गत्वभ्रान्त्या शाखापवित्रस्याऽप्यञ्जनमुक्तं कैश्चिदिति। तदप्यञ्जनं जुह्वादौ प्रत्येकं त्रिस्त्रिर्वा स्यात्। प्रत्येकमेकवारमिति समुदि-तेषु वा त्रिस्त्रिरञ्जनम्। पक्षद्वयमपि त्रेधाऽनक्ति (तै० सं० २।६।५।३) इति ब्राह्मणस्याऽर्थं इति द्वैधे दर्शितम् प्रस्तरस्य समञ्जन इति। त्रिस्त्रिरेकैकस्यां समञ्ज्यादिति बोधायनः। सकृत्सकृदिति शालोकिः (बौ० श्रौ० २०।१४) इति ॥१६॥ समञ्जन-

१. '०मिति केचित् अंजनस्य' इति वृ० कोशे।

क्रममाह—'अक्तं रिहाणाः' इति जुह्वामग्राणि, 'वियन्तु वयः' इति उपभृति मध्यानि, 'प्रजां योनिं मा निर्मृक्षम्' इति ध्रुवायां मूलानि । अथ प्रस्तरात्तृणं प्रच्छिद्य जुह्वामवदधाति । प्रस्तरस्यैकाऽवयवित्वविवक्षया तदवयवभूततृणाऽपादानं प्रच्छेदनमित्युक्तम् । जुह्वामवधीयमानत्वं प्रस्तरस्यैव, न तु तृणस्य । तथा च सूत्रम्—'अक्तस्य तृणमपादाय प्रज्ञातं निदधाति[1] । [2]स च प्रस्तरो दक्षिणोत्तराभ्यां पाणिभ्यां ग्रहीतव्यः—दक्षिणोत्तराभ्यां [3]पाणीभ्यां[प्रस्तरं] गृहीत्वा(आप० श्रौ० ३।६।५) इति सूत्रोक्तेः । पाणीभ्यामिति छान्दसो दीर्घः ॥१७-१८॥ अथाऽऽश्रावयति—'ओ श्रावय, अस्तु श्रौषट्' । यद्यप्याश्रावणस्य तिष्ठता कर्त्तव्यत्वं, तत्र तिष्ठन्नाश्रावयेत् (तै० सं० ३।१।२।३) इति नियमदर्शनात्, तथाप्यत्रासीनेनैवाऽऽश्रावणं कार्यम्, 'आसीन आश्राव्य' (आप० श्रौ० ३।६।५) इति सूत्रोक्तेः । 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि' इति । सम्प्रेष्यतीति शेषः । देवसम्बन्धिनो होतारः अपेक्षिताः, तत्स्थाने भद्रवाच्याय प्रेषितोऽयं मानुषः प्राकृतो होता त्वं सूक्तवाकाय सूक्ता ब्रूहि, सूक्तवाकाय यानि विनियुक्तानि सूक्तानि तानि ब्रूहि इति । सूक्तवाकशब्दस्तु 'इदं द्यावापृथिवी' (तै० ब्रा० ३।५।१०) इत्यादीनां सञ्ज्ञा ॥१९॥

तमुपरीव प्राञ्चं प्रहरति नात्यग्रं प्रहरति न पुरस्तात्प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं वियौत्यूर्ध्वमुद्यौति—'आप्यायन्तामाप ओषधयो मरुतां पृषतय स्थ दिवं गच्छ ततो नो वृष्टिमेरय' (तै० सं० १।१।१३।१) इति ॥२०॥

भव०—उपरीव उपर्येव । प्राञ्चम् ऊर्ध्वाग्रम् । नात्यग्रम् अग्रादारभ्य नातीताग्रम् । प्राग्गतं वा न प्रतिकर्षति । न प्रतिशृणाति प्रतिपन्नं भिनत्ति । विश्वञ्चं वियौति, तिर्यञ्चं चालयति । ऊर्ध्वम् उद्यौति आन्तादनुप्रहरति, प्रस्तरं तृणम् ॥२०॥

॥ इति षोडशोऽध्यायः समाप्तः ॥

सा०—तमुपरीव प्राञ्चं प्रहरति, नात्यग्रं प्रहरति, न पुरस्तात्प्रत्यस्यति, न प्रतिशृणाति, न विष्वञ्चं वियौत्यूर्ध्वमुद्यौति—'आप्यायन्तामाप······मेरय' इति । तं प्रस्तरम् उपरीव उपर्येवाऽङ्गाराऽघर्षणेन ज्वालाऽनतिक्रमेण चेत्यर्थः । प्राञ्चं प्रागायतं, नात्यग्रम् अनेन प्रागग्रत्वं द्योतयति । अतिक्रान्तमग्रं यस्य तदत्यग्रं, तथा न प्रहरेत् । अनेनाऽदग्धाऽग्राणां ज्वालाऽतिक्रमं वारयति । न पुरस्तात्प्रत्यस्यति, प्राग्गतं न प्रतिकर्षति । न प्रतिशृणाति, यथा प्रस्तरमर्दिता अङ्गाराः प्रतिशीर्णा न भवन्ति तथा प्रहरतीत्यर्थः । न विष्वञ्चं वियौति, तिर्यङ् विचालयति । ऊर्ध्वमुद्यौति, ऊर्ध्वमुद्दीपयति । आमूलं ज्वालयोर्ध्वं दीपयतीत्यर्थः ।

---

१. 'निधाय' इति मैसूर सं० ।

२. 'स···ग्रहीतव्या' इति वाक्यं नास्ति मद्र० सं० ।

३. 'पाणिभ्यां' इति मैसूर सं० ।

अत्र सूक्तवाकस्य याज्यास्थानीयत्वं, प्रस्तरस्य द्रव्यत्वम्, प्रहरणस्य हवनत्वमिति प्रहरतीत्यनेन जुहोति चोदितत्वं सिध्यति। तेनाऽऽप्यायन्तामाप इत्याध्वर्यवमन्त्रे न स्वाहाकारः प्रयोक्तव्यः। अत एव सूत्रे 'न स्वाहा करोति' (आप० श्रौ० ३।६।७) इति प्रतिषेधः कृतः। नह्यप्रसक्तं प्रतिषेधति। प्रसक्तिश्च सौत्र्येव। रागादिकस्य तन्निमित्तस्याऽभावात्। सूक्तवाकस्य याज्यास्थानीयत्वाऽऽश्रयणात् किं स्वाहाकारेणेति चेत्, न, वपायागवदुपपत्तेः। तत्र हि याज्यायां वषट्काराऽनुप्रदानसम्भवेऽपि स्वाहाकारो दृष्टः, किमुताऽत्र वषट्काराऽनुप्रदानरहितयाज्यास्थानीयमात्रे सूक्तवाके स्वाहाकार[ा]प्रयोग इति। अनेनैव न्यायेन यत्र प्रहरति आदधातीति वा चोद्यमानत्वं, तत्र सर्वत्र समिदादौ स्वाहाकारः सिध्यति, तत्तद्देवतोद्देशेन च द्रव्यत्यागः। एवं स्थिते सत्यत्र अग्निरिदं हविरजुषत (तै० ब्रा० ३।५।१०) इत्यादि देवताभेदेन याज्यया-हूयमानस्य प्रस्तरस्य एकद्रव्यत्वेऽपि तत्तद्देवतायै सूक्तवाकानुक्रान्तायै त्यागः कार्यः, अग्नेरहमुज्जितिमनूज्जेषम् (तै० सं० १।६।४।१) इत्यादावपि हुतानुमन्त्रणभेददर्शनात्। शाखापवित्रसद्भावे तु पवित्रमपोह्य शाखाया एव प्रस्तरेण सह प्रहरणम्। अत एव सूत्रे— सह शाखया प्रस्तरमाहवनीयेऽनुप्रहरति (आप० श्रौ० ३।६।६) इत्युक्तम्।

सौत्रस्य विधूननादिनिषेधस्याविरुद्धत्वात्, अस्माभिरप्याश्रयणीयत्वम्, उपलक्षणत्वात् कल्पोक्तेरिति। प्रस्तरस्य जुह्वामवधानं हस्तद्वयसम्पाद्यमपि, हवनं त्वेकेनैव हस्तेन कार्यम्। तिर्यञ्चं हस्तं धारयन्कर्षन्निवाऽऽहवनीये प्रहरति (आप० श्रौ० ३।६।९) इति सूत्रोक्तेः। जिह्ममिव हस्तं धारयति (सत्या० श्रौ० २।४।१०, भार० श्रौ० ३।६।४) इति सत्याषाढ भारद्वाजौ। स च हस्तो दक्षिणः, 'दक्षिणं प्रतीयादनादेशे' (आश्व० श्रौ० १।१।१२,१३) इति आश्वलानोक्तेः। द्वैधं विशेषः—प्रस्तरस्याऽनुप्रहरण इति। स ह स्माऽऽह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत्पौरोडाशिकैश्च याजमानैश्च। याजमानैर्यजमानोऽनुमन्त्रयेतेति। अत्रो ह स्माऽऽह शालीकिरध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत्पौरोडाशिकैश्च याजमानैर्यजमानोऽनुमन्त्रयेतेति। अत्रो ह स्माऽऽहौपमन्यवो यथाऽपि पौरोडाशिका मन्त्रा 'नाऽभिनिवर्तन्त एवमेवाऽपि याजमाना मन्त्रा 'नाऽभिनिवर्त्तेरन्निति (बौ० श्रौ० २०।१४) ॥२०॥

अथाग्नीध्रमीक्षते—'अग्नीत्' इति ॥२१॥ तमाहाग्नीध्रः 'संवदस्व' इति ॥२२॥ 'अगानग्नीत्' (तै० ब्रा० २।६।९।७) इत्याहाध्वर्युः ॥२३॥ 'अगन्' (तै० ब्रा० २।६।५।६) इत्याहाग्नीध्रः ॥२४॥ 'श्रावय' इत्याहाध्वर्युः ॥२५॥ 'श्रौषट्' इत्याहाग्नीध्रः ॥२६॥ 'इदं ब्रूहि' इत्याहाध्वर्युः ॥२७॥ 'अनुप्रहर' इत्याहाग्नीध्रः ॥२८॥ अनुप्रहरति ॥२९॥ 'स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि' (तै० ब्रा० ३।३।८।११) इति ॥३०॥

१. 'नि' इति नास्ति कै० सं०, वृ० कोशे च।

सा०—अथाऽऽग्नीध्रमीक्षते 'अग्नीत्', इति। आग्नीध्रेक्षणं नियमार्थम्। अनेन यमुद्दिश्य संप्रैषं करोति सर्वत्र तदीक्षणं कर्तव्यमिति द्योतयति। ततश्च 'अनुब्रूहि, यज' इत्यादौ होतारम्, आश्रावयेत्यादावाग्नीध्रमीक्षते इति सर्वविषयं द्रष्टव्यम् ॥२१॥ तमाहऽऽग्नीध्रः 'संवदस्व' इति। तमध्वर्युमग्नीदित्याह्वानानन्तरम् आग्नीध्रः 'संवदस्व' इत्याह, अग्नीदित्यस्य साकाङ्क्षत्वात्। लोके हि 'पाठक' इत्युक्ते ब्रवीति—'ब्रूहि किं करवाणि' इति। एवमत्राऽपि संवदस्वेत्युत्तरं युज्यते। ॥२२॥ तमेव संवादप्रकारमाह—'अगानग्नीत्' इत्याहाऽध्वर्युः। 'अगन्' इत्याहाऽऽग्नीध्रः। प्रस्तरः किमग्निमगमदित्यध्वर्युः प्रश्नार्थः, अगमदित्याग्नीध्रोत्तरार्थः ॥२३,२४॥ 'श्रावय' इत्याहाऽध्वर्युः। 'श्रौषट्' इत्याहाऽऽग्नीध्रः। आश्रावयेत्येतदप्याश्रावणमेव, श्रौषडित्येतदपि प्रत्याश्रवणम्। तदेतद्द्वयमप्यस्मिन्नेव नियतम्। अत एवाऽन्यत्र पौनःपुन्येनैतद् ब्रवीति—अथाऽऽश्रावयत्योश्रावयाऽस्तु श्रौषडिति। अनेनाऽऽश्रावणविकल्पानामन्येषां सौत्राणामसंनादेयत्वं द्योतयति। द्वैधेऽपि तथाऽनभिधानादिति ॥२५,२६॥ 'इदं ब्रूहि' इत्याहाऽध्वर्युः। 'अनुप्रहर' इत्याहाऽऽग्नीध्रः। अनुप्रहरति। इदमिति प्रस्तरात् पृथगुपात्ततृणं निर्दिश्याऽऽह—इदं किं करोमि ब्रूहीति। अनुप्रहरेत्याग्नीध्रोत्तरम्। अनु, अस्य प्रस्तरस्य प्रहरणादनन्तरं प्रहरेत्यर्थः। अनेन प्रस्तरप्रहरणस्याऽध्वर्युकर्तृकत्वादूर्ध्वोद्यमनमपि तत्कर्तृकमेवेति गम्यते ॥२७–२९॥ 'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि' इति। संप्रैषत्रीति शेषः। दैवसम्बन्धिभ्य एव होतृभ्यः स्वगा, अग्निप्राप्तिः। अत एव मानुषेभ्यो होतृभ्यः स्वस्तिः, यजमानायाऽस्त्वित्यर्थः। स्वस्तिशब्दः सुबन्तः क्षेमवचनः। शंयोर्ब्रूहीति, शंयुवाकं ब्रूहीत्यर्थः। स्वगाशब्दस्याऽग्निप्राप्तिवचनत्वं ब्राह्मणेऽभिहितम्। स्वगाकारेणेत्याह—एषा वा अग्नेराप्तिस्तयैवैनमाप्नोति (तै० सं० ५।५।७।५) इति ॥३०॥

अथोपोत्थायाहवनीयमुपतिष्ठते—'आयुष्पा अग्नेऽस्यायुर्मे पाहि। चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि' (तै० सं० १।१।१३।१) इति ॥३१॥ अथेमामभिमृशति—'ध्रुवासि' (तै० सं० १।१।१३।२) इति ॥३२॥ मध्यमं परिधिमनुप्रहरति—'यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः। तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयातै' (तै० सं० १।१।१३।२) इति ॥३३॥ अथेतरावुपसमस्यति—'यज्ञस्य पाथ उप समितम्' (तै० सं० १।१।१३।२) इति ॥३४॥ अथैनान् संस्रावेणाभिजुहोति ॥३५॥ जुह्वामुपभृतं संप्रस्रावयति—'संस्रावभागा स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वं स्वाहा' (तै० सं० १।१।१३।२) इति ॥३६॥ अथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि स्रुचौ विमुञ्चति—'अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने

मा धत्तं धुरि धुर्यौ पातम्' (तै० सं० १।१।१३।२) इति ॥३७॥ यद्यु वै नानो भवत्युत्कर एवैने स्फ्ये विमुञ्चत्येतेनैव मन्त्रेण ॥३८॥

सा०—अथोपोत्थायाऽऽहवनीयमुपतिष्ठते—'आयुष्पा···पाहि' इति। उपोत्थायैव न त्वासीनः। सर्वत्रोपोत्तिष्ठेतेति नियमः ॥३१॥ अथेमामभिमृशति—'ध्रुवासि' इति। इमामिति पृथिवीमाह, सा चान्तर्वेदिरूपा। तथा च सूत्रम्—'ध्रुवाऽसि' इत्यन्तर्वेदि पृथिवीमभिमृशति (आप० श्रौ० ३।७।७) इति ॥३२॥ मध्यमं परिधिमनुप्रहरति—'यं परिधिं···चेतयातै' इति। अथेतरावुपसमस्यति—'यज्ञस्य पाथ उपसमितम्' इति। इतरौ दक्षिणोत्तरौ मध्यमपरिधेः[1] ससृष्टौ युगपदादधाति, समितमिति द्विवचननिर्देशात्। द्वैधे विशेषः—परिधीनामभ्याधान इति। सूत्रं बोधायनस्य। प्रस्थान एवैनानभ्यादध्यादिति शालीकिः (बौ० श्रौ० २०।१४)। प्रस्थाने कर्मावसाने, समिष्टयजुर्होमानन्तरमित्यर्थः ॥३३,३४॥ अथैनान्संस्रावेणाऽभिजुहोति। जुह्वामुपभृतं सम्प्रस्रावयति—'संस्रावभागाः··· मादयध्वं स्वाहा' इति। अत्र जुहूपभृदाज्ययोरुभयोरप्युक्तत्वादविशेषेण द्वयोरपि सस्रावः, स चैकरूप एव सम्पाद्यः, संस्रावेणेत्येकत्वनिर्देशात्। तथा च सूत्रम्—जुह्वामुपभृतोऽग्रमवधाय संस्रावभागा इति संस्रावेणाऽभिजुहोति (आप० श्रौ० ३।७।१४) इति। द्वैधे विशेषः—अथैनान्संस्रावेणाऽभिजुहोतीति। सूत्रं बोधायनस्य। प्रस्तरञ्चैव परिधींश्चाऽभिजुहुयादिति शालीकिः (बौ० श्रौ० २०।१४) इति ॥३५,३६॥ अथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि स्रुचौ विमुञ्चति—'अग्नेर्वा···पातम्' इति। यद्यू वं नाऽनो भवत्युत्कर एवैने स्फ्ये विमुञ्चत्येतेनैव मन्त्रेण। एतेन जुहूपभृतौ विमुञ्चतीत्यनेनाऽऽसादने ये नियमाः प्राग्विलत्वादयस्तानपाकरोति। द्वैधे च—स्रुवोर्विमोक इति। पूर्वः कल्पो बोधायनस्य। उत्तरः शालीकेः (बौ० श्रौ० २०।१४) इति ॥३७,३८॥

अत्र प्रयोगक्रमः—

अध्वर्युः—'ब्रह्मन् प्रस्थास्यामः समिधमाधायाऽग्नीदग्नीन्सकृत्सकृत्सम्मृड्ढि' इति। तथा च ब्रह्माऽनुज्ञां करोति—'देवस··पाह्यों प्रतिष्ठ' इति। अध्वर्युरनूयाजसमिधं तूष्णीमादधाति। आग्नीध्रः स्फ्यरहितैरिध्मसन्नहनैः—'अग्ने वाजजित्···अन्नाद्याय' इति परिधीनामग्नेश्च सकृत्सकृत्पूर्ववत्सम्मार्गं कृत्वा, इध्मसन्नहनान्यद्भिः संस्पृश्याऽऽहवनीयेऽनुप्रहरति —'यो भूताना···तव स्वाहा' इति। 'भूतानामधिपतये रुद्राय तन्तिचरायेदं०'। आग्नीध्रयजमानयोरपामुपस्पर्शनम्। ततोऽध्वर्युर्जुहूपभृतावादायाऽत्याक्रम्याऽऽश्राव्याऽऽह 'देवान्यज' इति। वषट्कृते समिधः पूर्वार्धे जुहोति। यजमानः—'अग्नय इदं०', 'बर्हिषोऽहं देवयज्यया प्रजावान्भूयासम्' इत्यनुमन्त्रयते च। अध्वर्युः पुनराश्राव्य वषट्कृते समिधो मध्ये जुहोति। यजमानः—'अग्नय इदं०' 'नराशंसस्याऽहं···पशुमान्भूयासम्' इति। अध्वर्युः पुनराश्राव्य वषट्कृते समिधो मूलादारभ्य सन्ततया धारयाऽग्नौ जुहोति। यजमानः 'अग्नये स्विष्टकृत इदं०', 'अग्नेः स्विष्टकृतोऽहं···गमेयम्' इति।

१. '०परिधेः समीपे सं०' इति वृ० कोशे।

अध्वर्युः प्रत्याक्रम्य यथाऽऽयतनं स्रुचौ सादयित्वा सह यजमानेन'वाजस्य मा···प्रभीत्' इति दक्षिणेन हस्तेन जुहूमुद्गृह्णाति। 'अथाऽसपत्नान्···अकः' इति सव्येनोपभृतं निगृह्णाति। 'उद्ग्राभं···वृधन्' इति प्राचीं जुहूमादक्षिणांसात्प्रोहति। 'अथासपत्नान्···व्यस्यताम्' इति सव्येनोपभृतं प्रतीचीमोत्तरायै श्रोणेः प्रत्यूहति। जुह्वा परिधीनक्ति—'वसुभ्यस्त्वा' इति मध्यमम्। वसुभ्य इदं०। 'रुद्रेभ्यस्त्वा' इति दक्षिणम्। रुद्रेभ्य इदं०। अध्वर्युयजमानयोरपामुपस्पर्शनम्। 'आदित्येभ्यस्त्वा' इत्युत्तरम्। आदित्येभ्य इदं०। उपभृतमद्भिः संस्पृश्य, यथायतनं स्रुचौ सादयित्वा[1] सह विधृतीभ्यां प्रस्तरमनक्ति 'अक्तं रिहाणाः' इति जुह्वामग्राण्यनक्ति। 'वियन्तु वयः' इत्युपभृति मध्यानि। 'प्रजां योनिं मा निर्मृक्षम्' इति ध्रुवायां मूलानि।

प्रस्तरात्तृणमपच्छिद्य, तत्प्रज्ञातं निधाय, सह शाखया दक्षिणोत्तराभ्यां पाणिभ्यां जुह्वामूर्ध्वाग्रं प्रस्तर निधायाऽऽश्राव्य प्रत्याश्राविते—'इषिता दैव्या···ब्रूहि' इति सम्प्रेष्यति। यदा होता 'अग्निरिदं हविरजुषत' इत्यादि ब्रूयात्तदा यजमानः 'अग्नय इदं०' इति ब्रूयात्। अध्वर्युर्यजमानं वाचयति—अग्नेरहमुज्जितिमनूज्जेषम्' इति। एवमुत्तरत्राऽपि। यथादैवतमुद्देशत्यागः, उज्जितिवाचनञ्च। तद्यथा—सोमायेदं० सोमस्याहमु०। अग्नय इदं० अग्नेरह०। प्रजपतय इदं० प्रजापतेरहं। अग्नीषोमाभ्यामिदं० अग्नीषोमयो०। इन्द्राय वैमृधायेदं० इन्द्रस्य वैमृधस्याहं०। देवेभ्य आज्यपेभ्य इदं० देवानामाज्यपानामहं०। अग्नये स्विष्टकृत इदं० अग्नेः स्विष्टकृतोऽहं०। इति पौर्णमास्याम्। अमावास्यायाम्—असन्नयतः 'इन्द्राग्निभ्यामिदं० इन्द्राग्नचोरहं०'। सन्नयतः—इन्द्रायेति इन्द्रयाजिनः। महेन्द्रायेति तद्याजिनः। अन्यत्समानम्। यदा होता 'आशास्तेऽयं यजमानः' इति ब्रूयात्तदाऽध्वर्युर्यजमानं वाचयति—'एमा अग्म···मिषम्' इति। अध्वर्युः सह शाखया प्रस्तरमाहवनीये प्राञ्चं प्रहरति—'आप्यायन्तां···मेरय' इति। यजमानः प्रह्रियमाणं प्रस्तरमनुमन्त्रयते—'रोहितेन···गमयतु' इति।

अध्वर्युरुपात्ततृणमादायाऽऽग्नीध्रमीक्षमाणोऽग्नोदित्याह, तमाग्नीध्रः संवदस्वेत्याह। अगानग्नीदित्यध्वर्युराह, अगन्नित्याग्नीध्रः। श्रावयेत्यध्वर्युः, श्रौषडित्याग्नीध्रः। इदं ब्रूहीत्यध्वर्युः, अनुप्रहरेत्याग्नीध्रः। अध्वर्युस्तत्तृणमनुप्रहृत्य होतारं प्रत्याह—'स्वगा दैव्या···शंयोर्ब्रूहि' इति। उपोत्थायाऽऽहवनीयमुपतिष्ठते—'आयुष्पा···पाहि' इति। उपविश्याऽन्तर्वेदिभूमिमभिमृशति—'ध्रुवाऽसि' इति। मध्यमपरिधिं प्रहरति—'यं परिधिं···यातै' इति। दक्षिणोत्तरपरिधी उपसमस्यति—'यज्ञस्य पाथ उपसमितम्' इति। यजमानः परिधीन्विमुच्यमानाननुमन्त्रयते—'वि ते मुञ्चामि···देवतासु' इति। होत्रोक्तं शंयुवाकमनुमन्त्रयते यजमानः—'विष्णोः शंयो···गमेयम्' इति। अध्वर्युर्जुह्वामुपभृतं सम्स्रावयन्संस्रावेण परिधीनभिजुहोति—'संस्रावभागा···मादयध्वं स्वाहा' इति। यजमान—वसुभ्यो

---

१. 'सामयित्व शाप पवित्रं विना विधृतीभ्यां सह प्रस्तर०' इति बृ० कोशे।

रुद्रेभ्य आदित्येभ्य इदं०। विश्वेभ्यो देवेभ्य० इति केचित्। अध्वर्युः प्रदक्षिणमावृत्याऽन्त्र-सोऽभावे उत्करे स्फ्यं निधाय तस्मिन्नञ्चौ विमुञ्चति—'अग्नेर्वा···पातम्' इति।

अत्र हौत्रत्वेनाऽप्रसक्तोऽपि बहूपयोगाद्धौत्रशेषप्रश्नोक्तो विशेषो निरूप्यते—'आशास्तेऽयं यजमानोऽसौ' इत्यत्र यजमानस्य नाम गृह्णाति। यज्ञनाम तृतीयं स्यात्सोमयाजिनः। यज्ञकाम इत्यसोमयाजिनः। तत्रोदाहरन्ति—

जन्मनक्षत्रनामाऽह पुंवद्भावमतद्धितम्।
पुनर्वसुमघास्तिष्यो हस्तश्चाऽत्र निदर्शनम्॥
तद्धितं केचिदिच्छन्ति मार्गशीर्षी निदर्शनम्।
प्रोष्ठपदाश्विनाख्यौ च कार्तिको रौहिणस्तथा॥
कं वदन्त्यपरे तज्ज्ञा मूलकोऽत्र निदर्शनम्' ॥ इति।

यज्ञनाम यज्ञनिमित्तकं नाम—अग्निष्टोमयाजी, उद्भिद्याजी बलभिद्याजी इत्याह। असोमयाजिनः—केवलाऽऽधानिनः यज्ञकामं इति तृतीयं नाम। देवदत्तादिनाम्नः प्राथमिकत्वा-त्तस्य ग्रहणं प्राथमिकम्। द्वितीयं नामाऽह—अत्रोदाहरन्ति, द्वितीयं नामेति शेषः। नक्षत्रनामैव द्वितीयम्। यस्य यज्जन्मनक्षत्रं तन्नामैवाऽस्य द्वितीयं नाम। 'तद्ग्रहणे पुंवद्भावम्। तद्धितक-प्रत्ययान्तत्वं वैकल्पिकम्। सर्वनक्षत्रसाधारणमपि निदर्शनार्थं नक्षत्रविशेषेषु व्यवस्था दर्शिता जन्मनक्षत्रनामेत्यादिना। अत्र केचित् तद्धितकप्रत्यययोर्व्यवस्थामाहुः—

रोरेममृज्येचिषु वृद्धिरादौ [1]ष्ठात्पे च, ब्राऽन्त्यश्रवशाश्वयुक्षु।
शेषेषु नार्म्वोः कपरः स्वरोऽन्त्यः स्वास्वोरदीर्घः सविसर्ग इष्टः॥

अस्यार्थः—रोहिणी रेवती मघा मृगशीर्षं ज्येष्ठा चित्रा इत्येतेषु नक्षत्रेषु आदिवृद्धिः। रौहिणः, रैवतः, माघः, मार्गशीर्षः, ज्यैष्ठः, चैत्रः इति। 'ष्ठात्पे च ष्ठकारादुत्तरस्मिन्पकारे च वृद्धिः—यथा पूर्वाप्रोष्ठपादः उत्तराप्रोष्ठपाद इति। बाऽन्त्यश्रवशाश्वयुक्षु—अन्त्यः—अपभरणी, श्रवः—श्रवणः, श—शतभिषक्, अश्वयुक्—अश्विनी—एतेषु नक्षत्रेषु विकल्पेनाऽऽदि-वृद्धिः। आपभरणः अपभरणः, श्रावणः श्रवणः, शातभिषजः शतभिषक्, आश्वयुजः अश्वयुक्। शेषेषु न—अवशिष्टेषु नक्षत्रेषु वृद्धिर्नास्ति, कृत्तिकः इत्यादि। तत्राऽपि विशेषमाह—आर्म्वोः—आर्द्रामूलयोः अन्त्यस्वरः कपरः, ककारः परो यस्य कपरः, आर्द्रकः मूलकः। स्वास्वोः—स्वाती-पुनर्वस्वोः अन्त्यस्वरः इत्यनुवर्तते अदीर्घः ह्रस्वः सविसर्गः, यथा स्वातिः पुनर्वसुरिति॥ इति प्रथमे प्रश्ने षोडशोऽध्यायः॥

॥ इति षोडशोऽध्यायः समाप्तः॥

—:o:—

[1] 'ष्ठांत्ये' इत्यपपाठः कोशेषु।

# सप्तदशोऽध्यायः

अथादत्ते दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन जुहूं होत्रे वेदं प्रदाय ॥१॥ प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतः ॥२॥ दक्षिणेनाध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता ॥३॥

सा०—अथाऽऽदत्ते दक्षिणेनाऽऽज्यस्थालीं सस्रुवां सव्येन जुहूं होत्रे वेदं प्रदाय। अथ होत्रे वेदं प्रदायाऽऽदत्त इत्यन्वयः ॥१॥ प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतः। वेददातृप्रतिग्रहीतारौ अध्वर्युहोतारौ प्रत्यङ्मुखौ गच्छतः ॥२॥ तत्र विशेषमाह—दक्षिणेनाऽध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता। गार्हपत्यमेव परिक्रामति, नाग्न्यन्तरमिति। अनेनाऽन्वाहार्यपचनगार्हपत्ययोर्मध्ये परिक्रमणं द्योतयति। द्वैधे विशेषः—पत्नीसंयाजेष्वृत्विजां परिक्रमण इति। सूत्रं बोधायनस्य। सर्वं एवोत्तरेण गार्हपत्यं परिक्रामेयुरिति शालीकिः (बौ० श्रौ० २०।१४) इति। अत्र सर्वर्त्विजां परिक्रमणविधानेऽपि ब्रह्मव्यतिरिक्तानामेव भवति परिक्रमणं न ब्रह्मणः, सोऽत्रैवास्तऽ आसमिष्टयजुषो होमात् (बौ० श्रौ० ३।२६।६) इति वचनात्। पूर्वकल्पे तु द्वित्वमविवक्षितम्, आग्नीध्रपरिक्रमणस्याऽप्यपेक्षितत्वात्। कथमन्यथाऽऽज्येडादिषु तद्विनियोगः। कर्मान्ते तु विशेषान्तरं—यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नीसंयाजे 'सर्वं एवोत्तरेण गार्हपत्यं परिक्रामेयुः' इत्यनभ्यावृत्यैवाऽत्र फलीकरणहोमो होतव्यो भवति (बौ० श्रौ० २४।२६।१५)। अत्राऽध्वर्योरप्युत्तरेण परिक्रमणपक्षे फलीकरणहोमकाले नाऽपसलैः पर्यावर्तनं कर्तव्यमित्यर्थः ॥३॥

तौ जघनेन गार्हपत्यं पश्चात् प्राञ्चावुपविशतो दक्षिण एवाध्वर्युरुत्तरो होता ॥४॥ अथाध्वर्युर्वेदमुपभृतं कृत्वा चतुर आज्यस्य गृह्णान आह—'सोमाय' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः ॥५॥

भव०—वेदिं गार्हपत्यं चान्तरा। दक्षिणेनाध्वर्युरुत्तरेण होता तौ जघनेन गार्हपत्यं पश्चादिति कोणनिवृत्त्यर्थम्। प्राञ्चौ प्राङ्मुखौ ॥४॥ उपभृतम् उपभृत्कार्य्ये। उच्चैरिति मन्द्र उपांशुतन्त्रत्वात् ॥५॥

सा०—तौ जघनेन गार्हपत्यं पश्चात्प्राञ्चावुपविशतो दक्षिण एवाऽध्वर्युरुत्तरो होता। अत्राऽपि द्वित्वमविवक्षितम्। आग्नीध्रोपवेशनस्याऽपि युक्तत्वात्। तथा च सूत्रम्—दक्षिणोऽध्वर्युरुत्तर अपरेण गार्हपत्यमूर्ध्वज्ञव आसीनाः (आप० श्रौ० ३।८।८) इति। दक्षिणोऽध्वर्युरुत्तर आग्नीध्रो मध्ये होता (आप० श्रौ० ३।८।९) च। अत्रेदं विचार्यते—किं पत्न्या अपि दक्षिणोऽध्वर्युरुत्त होतुरेवेति? सूत्रपर्यालोचनया तावद्धोतुरेवेति प्रतीयते, मध्ये होतेत्यभिधा-

नात् । तस्माद्देशादपक्रम्य 'सुप्रजसस्त्वा वयम्' इति दक्षिणत उदीच्युपविशति (आप० श्रौ० २।५।८)इति चाऽभिधानात् । न हि गार्हपत्यस्य दक्षिणत उदीच्युपविष्टा जघनेन गार्हपत्यमुपविष्टयोर्मध्ये भवितुमीष्टे । तस्माद्धोतुरेव दक्षिणोऽध्वर्युर्न पत्न्या इति । स्यादेतदेवं यद्याचार्यपक्षे भवेदिदं पत्न्याः स्थानम् । 'जघनेन गार्हपत्यमुपसीदति'(बौ० श्रौ०१।१२।१८) इति तस्याः स्थानं नियतम् । न च तामतिक्रम्याऽध्वर्योरुत्तरत्र स्थानं विहितम् । प्रत्युत दक्षिण एवाऽध्वर्युरित्यवधारणेन पत्न्यपेक्षमप्युत्तरत्वं वारयति । अत एव उत्तरो होता इत्यत्र नाऽवधारणं कृतं, तस्याऽऽग्नीध्राऽपेक्षया दक्षिणत्वादिति । वक्ष्यति च—'अथाऽग्रेण होतारमुपातीत्य (बौ० श्रौ० १।२०।१९) इति । अनेन पत्न्या अग्रेणाऽतिक्रमणं वारयतीति गम्यते, पत्न्या अध्वर्योरन्तरङ्गत्वात्, पत्नीयजमानावृत्विग्भ्योऽन्तरतमौ (बौ० ध० १।१५।१०) इति वचनात् । तत्सिद्धमेतत् । 'जघनेन गार्हपत्यमुपविष्टायाः पत्न्या दक्षिणोऽध्वर्युरुत्तरो होता' इति तदेतत्सूत्रविरुद्धम्, सूत्रे पश्चाद्ग्रहणं कृतम् । तच्च भवकेशवाभ्यां व्याख्यातम्—पश्चाद्ग्रहणं कोणनिवृत्त्यर्थम् । तेन पत्न्या अप्युत्तरोऽध्वर्युस्तदुत्तरो होतेति अव्यवाय पश्चादेवाऽध्वर्युस्तस्या अन्तरङ्गत्वात् । तदेतच्चिन्त्यम् ।।४।।

अथाऽध्वर्युर्वेदमुपभृतं कृत्वा चतुर आज्यस्य गृह्णान आह । वेदमुपभृत्कार्ये विनियुज्य, होत्रे प्रदत्तस्य वेदस्य पुनः स्वीकारमध्वर्युग्रहणेन द्योतयति । 'सोमाय' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः । उच्चैः शब्दस्तारवचनः । द्वैधे तु—'पत्नीनां संयाजन इति । सूत्रं बोधायनस्य । ध्रौवाज्येन ध्वानेनैव पत्नीः संयाजयेदिति शालीकिः (बौ०श्रौ०२०।१५) इति । तत्र ध्वानेनैवेत्यवधारणेन सोमायेत्यादिषु यजेत्यत्र च ध्वान एवाऽऽश्रितः । ध्वानश्चाऽक्षरव्यञ्जनानामनुपलब्धिरूप इत्युक्तम् । अभियुक्तास्तु उच्चैरित्यनेन मन्द्रं लक्षयन्ति, तत्र च हेतुरुपांशुतन्त्रत्वात् इति । एवञ्च यत्रोपांशुतन्त्रे भवत्युच्चैर्ग्रहणं, तत्र सर्वत्र मन्द्रत्वमेवाऽर्थ इति तेषामभिप्रायः । कर्मान्ते तु सर्वत्रोपांशुत्वमेव पत्नीसंयाजयोरुक्तम्, उपांशुतन्त्राणां कर्मणां मध्ये पाठात् । तथा हि—अथेमान्युपांशुधर्माणि भवन्ति, यथैतदग्न्याधेयं पुनराधेयं पितृयज्ञो दीक्षणीया प्रायणीयाऽऽतिथ्योपसदः प्रातरनुवाकः पत्नीसंयाजा अवभृथ उदयनीयोदवसानीया चितिप्रणयनीयस्त्वाष्ट्रो[1] यूपो[2] विरोहणीयः संरोहणीयोऽष्टापद्यैगर्भं इति च । [3]सहकारिप्रत्यया भवन्ति (बौ० श्रौ० २४।१८।१०-११) इति । एतेषां स्वरूपं तत्तत्प्रकरणे वक्ष्यामः । सहकारिप्रत्यया भवन्तीति पक्षान्तरम् । सहकारिणो होत्रादयः, तदनुरोधेन भवन्तीत्यर्थः ।।५।।

आश्राव्याह—'सोमम्' इत्युपांशु 'यज' इत्युच्चैः ।।६।। वषट्कृते जुहोति ।।७।। चतुर एवाज्यस्य गृह्णान आह—'त्वष्ट्रे' इत्युपांशु 'अनुब्रूहि'

१. '०नीयं त्वा०' इति कै० सं० ।
२. 'यूपविरोहणीयोऽष्टापदी गर्भवती च' इति कै० सं० ।
३. '०प्रत्याद भवति' इति मद्र० सं० ।

इत्युच्चैः ॥८॥ आश्राव्याह 'त्वष्टारम्' इत्युपांशु 'यज' इत्युच्चैः ॥९॥ वषट्कृते जुहोति ॥१०॥ चतुर एवाज्यस्य गृह्णान आह 'देवानां पत्नीभ्यः' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः ॥११॥ आश्राव्याह—'देवानां पत्नीः' इत्युपांशु 'यज' इत्युच्चैः ॥१२॥ वषट्कृते परिश्रिते देवानां पत्नीर्जुहोति॥१३॥ अथ चतुर एवाज्यस्य गृह्णान आह—'अग्नये गृहपतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः ॥१४॥ आश्राव्याह 'अग्निं गृहपतिम्' इत्युपांशु 'यज' इत्युच्चैः ॥१५॥ वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति ॥१६॥

सा०—आश्राव्याऽऽह—'सोमं' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते जुहोति। चतुर एवाऽऽज्यस्य गृह्णान आह—'त्वष्ट्रे' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। आश्राव्याऽऽह 'त्वष्टारम्' इत्युपांशु यज' इत्युच्चैः। वषट्कृते जुहोति। चतुर एवाऽऽज्यस्य गृह्णान आह—'देवानां पत्नीभ्यः' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। आश्राव्याऽऽह—'देवानां पत्नीः' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृते परिश्रिते देवानां पत्नीर्जुहोति। परिश्रिते प्रच्छादिते, गार्हपत्य इत्यर्थः। द्वैधे विशेषः अन्तर्धाय देवानां पत्नीः संयाजयेदिति बोधायनः। अनन्तर्धायैवेति शालीकिः (बौ० श्रौ० २०।१५) इति ॥९–१३॥ अथ चतुर एवाऽऽज्यस्य गृह्णान आह—'अग्नये गृहपतये' इत्युपांशु 'अनुब्रूहि' इत्युच्चैः। आश्राव्याऽऽह 'अग्निं गृहपतिम्' इत्युपांशु 'यज' इत्युच्चैः। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति। आज्यस्यैवेत्यन्वयः। अनेन जाघन्या पत्नीः संयाजयन्ति (आप० श्रौ० ३।८।१०) इति श्रौतः पक्षो नाऽऽवृत इति द्योतयति। कर्मान्ते विशेषः—अथ हैके राकाञ्च सिनीवालीञ्च कुहूञ्चाऽनुमतिञ्च पत्नीहोमञ्च नारिष्ठौ च होमौ पुरस्ताद् गृहपतेरुपजुह्वति सम्पत्नी पत्या…रभेतां स्वाहा। दश ते तनुवो…भूत्स्वाहा। यं वां देवा…ह्वौ इति (बौ० श्रौ० २४।२९।१६) उपजुह्वतीति वचनाद् याज्याऽनुवाक्याप्रतिषेधं सूचयति। सोऽपि पक्षो हौत्रशेषप्रश्ने दर्शितः—अथ हैके राकाञ्च सिनीवालीञ्च कुहूञ्चाऽनुमतिञ्च यजन्ति …'राकामहं, यास्ते राके' इति राकायाः। 'सिनीवालि, या सुपाणिः' इति सिनीवाल्याः। 'कुहूमहं, कुहूर्देवानाम्' इति कुह्वाः। 'अनुनोऽद्याऽनुमतिः अन्विदनुमते' इत्यनुमतेरिति। द्वैधे विशेषः– पत्नीसंयाजेषु शंयुवाकस्य करण इति। कुर्यादिति बोधायनः। न कुर्यादिति शालीकिः (बौ० श्रौ० २०।१५) इति। पत्नीसंयाजविषये शंयुवाककरणे प्राक्तन एव प्रयोगक्रमः प्रैषादिरूपः। तत्र कुर्यान्नकुर्यादिति पक्षद्वयेऽपि न खण्डनसंस्थापक्ष आचार्यस्याभिमतः। यदि स्याद्विकृतीष्टिषु कियता धर्माः स्युरतिदेश्याः? अतः पराऽभिप्रायेणैव खण्डनसंस्थापक्ष उदाहृत इत्यनुसन्धेयम् ॥१४-१६॥

अथाग्रेण होतारमुपातीत्य होतुर्द्विरङ्गुलावनक्ति ॥१७॥ जिह्रेण

भक्षयित्वा ॥१८॥ चतुर्हस्तेडां सम्पादयत्याज्यस्यैव ॥१९॥ समन्वारभेते अध्वर्युश्चैव पत्नी च ॥२०॥ उपहूतायामिडायामग्नीध आदधाति षडवत्तम् ॥२१॥ प्राश्नीतः ॥२२॥ मार्जयेते ॥२३॥ अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोति—'उलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि कृष्णाजिने यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहा' (तै० ब्रा० ३।७।६।२१) इति ॥२४॥

सा०—अथाग्रेण होतारमुधातीत्य होतुर्द्विरङ्गुलावनक्ति इति । अग्रेण होतारमिति वचनात् पत्न्या अग्रेण गमनं निषेधति । तस्या अन्तरङ्गतया अध्वर्योरग्निव्यवायनिषेधात् । द्विरङ्गुलावनक्ति पर्वणोरिति व्याख्यातम् ॥१७॥ जिघ्रेण भक्षयित्वा । अन्तर्गमितरणिजर्थतया व्याख्यातम् ॥१८॥ चतुर्हस्तेडां सम्पादयत्याज्यस्यैव । हस्तशब्दात्पात्रीसंपातं करोति ॥१९॥ समन्वारभेते अध्वर्युश्चैव पत्नी च । पत्नीत्येकवचनमविवक्षितम् । एवकारादन्याऽन्वारम्भणमपाकरोति । आग्नीध्रस्य सन्निहिततयाऽप्रसक्तेः ॥२०॥ उपहूतायामिडायामग्नीध आदधाति षडवत्तम् । प्राश्नीतः । मार्जयेते । अत्र द्विवचनं विवक्षितम् । तेनाऽन्वारम्भणकर्तृतया प्रसक्तयोरध्वर्युपत्न्योः प्राशनं निषेधति । आग्नीध्रीयषडवत्तस्य तन्मात्रनियतत्वात् । होतुरप्यवान्तरेडास्थानीयत्वाच्चाऽस्य साधारण्यम् ॥२१–२३॥ अथ स्रुचि चतुर्गृहीतं गृहीत्वाऽपसलैः पर्यावृत्याऽन्वाहार्यपचने प्रायश्चित्तं जुहोति—'उलूखले मु…सुहुता जुहोमि स्वाहा' इति । निगदव्याख्यातमेतत् । एतद् व्याख्यानं कात्यायनयोः सूत्र-तद्भाष्यादिषु (का० श्रौ० ३।८।१) द्रष्टव्यम् ॥२४॥

अपरं चतुर्गृहीतं गृहीत्वान्वाहार्यपचन एवेध्मप्रव्रश्चानाद्यभ्याधाय फलीकरणानोप्य फलीकरणहोमं जुहोति—'अग्नेऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिं स्वाहा' (तै० सं० १।१।१३।३) इति ॥२५॥ अथैतेनैव यथेतमेत्य वेदे यजमानं वाचयति—'वेदोऽसि वित्तिरसि' (तै० सं० १।६।४।४) इति आन्तादनुवाकस्य होत्रे वेदं प्रदाय पत्नीं विष्यति—'इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि' (तै० सं० १।१।१०।२) इति ॥२६॥ अथास्यै योक्त्रमञ्जलावाधायोदपात्रमानयति—'समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याहं गच्छे समात्मा तनुवा ममेति (३।३।१०।२) ॥२७॥

भव०—तुषाख्या फलीकरणमिति ॥२५॥ यथेतमिति यथागतमावेष्टयन्। एत्य आगत्य। पत्नी विष्यति ॥२६॥ उदपात्रं पूर्णपात्रम्। अञ्जलौ सिञ्चति ॥२७॥

सा०—अपरं चतुर्गृहीतं चतुर्गृहीत्वाऽन्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानोप्य फलीकरणहोमं जुहोति—'अग्नेऽदब्धा···योनिं स्वाहा' इति। अत्र केचित् आमिक्षादिप्रयोगेषु फलीकरणाऽभावेन तत्प्रतिपत्त्यभावात्तदनिष्पाद्यतया 'अग्नेऽदब्धायो' इत्यनेन हूयमानस्य फलीकरणहोमस्य निवृत्तिमाहुः, तदयुक्तम् इध्मप्रव्रश्चनप्रतिपत्त्यर्थत्वात्। अत एव अन्वाहार्यपचन एवेत्यवधारणं जुहोत्येवेत्यन्वयेनाऽनुगतार्थं भवति, अन्यथा तदानर्थक्यात्। अत सूत्रव्याख्यातृभिः पिष्टलेपाऽभावेऽप्युलूखले मुसले इत्यनेन हूयमानं पिष्टलेपहोमतया व्यवहृतम्। तथाऽस्माभिरपि फलीकरणाऽभावेऽपि तत्स्थानापन्नत्वात् हूयमानस्य फलीकरणहोम इति व्यवहारः कृतः। अत एव फलीकरणानोप्य फलीकरणहोमं जुहोति इत्युक्तम् ॥२५॥

अथैतेनैव यथेतमेत्य वेदे यजमानं वाचयति—'वेदोऽसि वित्तिरसि[1] विदेय' इति आन्तादनुवाकस्य होत्रे वेदं प्रदाय पत्नी विष्यति। होत्रे वेदं प्रदायाऽध्वर्युरास्ते होतृप्रयोगपरिसमाप्तिपर्यन्तम्। वेदप्रदानार्थवत्त्वाय तत्प्रोगकालप्रत्यवेक्षणं युज्यते। ततः पत्नी विष्यति, योक्त्रं विमुञ्चति—'इमं विष्यामि·· करोमि' इति। मन्त्रलिङ्गाच्च, पत्नीकर्तृक एव विमोक्षो मन्त्रजपश्च। पत्नीं विष्यतीति क्वचित्पाठः। तत्राऽन्तर्भावितण्यर्थत्वमाश्रयणीयम्, तथाऽपि मन्त्रजपोऽध्वर्युकर्तृकः स्यात्। तथा च मन्त्रलिङ्गविरोधः। पत्नी विष्यतीत्येव पाठो युक्तः ॥२६॥ अथाऽस्यै योक्त्रमञ्जलावाधायोदपात्रमानयति। अथ होतृप्रयोगाऽनन्तरम्, अध्वर्युरुदपात्रममन्त्रकमानयति। पत्नी तु स्वाञ्जलावानीयमानमभिमन्त्रयते—समायुषा··· मम इति ॥२७॥

अथ मुखं विमृष्टे—'यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति' (तै० ब्रा० २।५।८।६) इति ॥२८॥ अपो निनयति—'अवभृथस्यैव रूपं कृत्वोत्तिष्ठति' इति ब्राह्मणम् (तै०ब्रा० ३।३।१०।४) ॥२९॥ अथैनां तथैव तिरःपवित्रमप आचामयति—'पयस्वतीरोषधयः पयस्वद्वीरुधां पयः। अपां पयसो यत्पयस्तेन मामिन्द्र संसृज' (तै०सं० १।५।१०।२)इति ॥३०॥ अथैनां गार्हपत्ये समिध आधापयति—'अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा। वायो व्रतपते० आदित्य व्रतपते० व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा' (तै० सं० १।६।६।३) इति ॥३१॥ अथ यथाप्रपन्नं निष्क्रामयति ॥३२॥

१. 'वित्तिरलीत्यान्ता०' इति कै० सं०।

अथ प्राङेत्य ध्रुवामाप्याययति—'आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञेऽस्मिन्' (तै० सं० १।६।५।१) इति ॥३३॥

सा०—अथ मुखं विमृष्टे—'यदप्सु ते···सरस्वति' इति। तथा च सूत्रम्—इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते। तस्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयति। समायुषा सम्प्रजयेत्यानीयमाने जपति। निनीय मुखं विमृज्योत्तिष्ठति (आप० श्रौ० ३।१०।६-८) इति। अयमेवाऽऽचार्यस्याऽभिप्रायः ॥२८॥ अत एवाऽऽह—अपो निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणम् ॥२९॥

अथैनां तथैव तिरःपवित्रमप आचामयति 'पयस्वती···संसृज' इति। अथैनां गार्हपत्ये समिध आधापयति—'अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा वायो व्रतपते···आदित्य व्रतपते···व्रतानां व्रतपते···स्वाहा' इति। अथ यथाप्रपन्नं निष्क्रामयति। एतदन्तं पत्नीकर्तृकं, प्रयोजककर्तुरध्वर्योर्न मन्त्रजप इति, उक्तो न्यायः। होतुः सकाशादध्वर्योरागमनं दक्षिणेन गार्हपत्यस्याऽध्वर्योरुत्तरेण यथागमनमाह ॥३०-३२॥

अथ प्राङेत्य ध्रुवामाप्याययति 'आप्यायतां ध्रुवा···अस्मिन्' इति। अत्र ध्रुवाऽऽप्यायनं स्रुवेणैव न त्वाज्यस्थाल्या, समन्त्रकत्वात्। द्वैधे विशेषः—ध्रुवाया आप्यायन इति। स ह स्माऽऽह बोधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेति। अध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजुर्जुहुयादिति शालीकिः (बौ०श्रौ० २०।१५) इति। शालीकिपक्षे प्रायश्चित्तहोमानन्तरं समिष्टयजुर्होमात् प्राक् ध्रुवाऽऽप्यायनमिति विशेषः ॥३३॥

अथाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति—'आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्न' (तै० ब्रा० ३।७।११।१) इति कल्पयन्। स्वाहाकृताहुतिरेतु देवान्त्स्वाहा' (तै० ब्रा० ३।७।११।१) इति ॥३४॥ अथ यज्ञसमृद्धीर्जुहोति—'इष्टेभ्यः स्वाहा। वषडनिष्टेभ्यः स्वाहा। भेषजं दुरिष्ट्यै स्वाहा। निष्कृत्यै स्वाहा। दौराद्ध्यै स्वाहा। देवीभ्यस्तनूभ्यः स्वाहा। ऋद्ध्यै स्वाहा। समृद्ध्यै स्वाहा। सर्वसमृद्ध्यै स्वाहा। भूः स्वाहा। भुवः स्वाहा। सुवः स्वाहा। भूर्भुवः सुवः स्वाहा। इमं मे वरुण० तत्त्वा यामि० त्वं नो अग्ने० स त्वं नो अग्ने० त्वमग्ने अयास्ययासन्मनसाहितः। अयासन्हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा। अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि

भेषजं स्वाहा। यदस्मिन् कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा। अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा ॥ यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे ॥ अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानां समर्धयित्रे स्वाहा। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा' (तै०ब्रा० ३।७।११।३) इति ॥३५॥ अथ बर्हिषो धातूनां संप्रलुप्य ध्रुवायां समनक्ति—'समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः'। समिन्द्रेण विश्वेभिर्देवेभिरङ्क्ताम् (तु०—तै० ब्रा० ३।७।५।१०) इति ॥३६॥

भव०—पत्नीसंयाजादिष्वाज्यस्थालीग्रहणमनादेशे ध्रौवाज्यादिति ज्ञापयति। प्रायश्चित्तमिति वचनं दोषनिर्घातार्थम्। नित्यत्वादानुषङ्गिको दोषनिर्घातो भवति। मन्त्रलिङ्गात्तदपेक्षं च ॥३४॥ यज्ञसमृद्धिरिति नाम। क्वचित् समस्तमन्त्रं पठन्ति क्वचित्प्रतीकं सांहितेऽपि वैचित्र्यार्थम्। पारक्षुद्रे विकल्पे गुरुलाघवानादरात् स्पष्टार्थं क्वचित् कथञ्चिदिति केचित्। अन्ये बहूनां शाखानामयं विकल्पः। तत्र सर्वत्र पठितेषु प्रतीकं कस्याञ्चिदेव। अपठितार्थः समस्तमन्त्रपाठ इति। लिङ्गञ्च विहव्याभिरिति प्रकृता ये दश ये नव येऽष्टाविति। इतरथा दशानामाम्नातत्वात् नवादिग्रहणं नाकरिष्यत् ॥३५॥ बर्हिषः संप्रलुप्य एकैकस्यामेकदेशं गृहीत्वा ॥३६॥

सा०—अथाऽऽज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति। आज्यस्थालीग्रहणादनादेशे ध्रौवाऽऽज्येन हवनमिति सूचयति। प्रायश्चित्तानीति वचनाद्दोषनिर्घातार्थत्वेऽपि नित्यत्वमविरुद्धम्, आनुषिङ्गकत्वाद्दोषनिर्घातस्य। स च मन्त्रलिङ्गादवगन्तव्यः। यथा सायं प्रातः सन्ध्योपासनस्य नित्यत्वेऽप्यानुषङ्गिको दोषनिर्घातो मन्त्रलिङ्गादवगतः, तथेहाऽपि इति द्रष्टव्यम्। स्रुवेणोपघातमिति वचनादनादिष्टे स्रुचैव होतव्यम् (बौ० श्रौ० २४।८।१०) इति कर्मान्तोक्तं स्मारयति। आश्रावित…देवान्त्स्वाहा इति ॥३४॥

अथ यज्ञसमृद्धीर्जुहोति। यज्ञसमृद्धिशब्दः 'इष्टेभ्यः स्वाहा' इत्यादिनवानां संज्ञा। इष्टेभ्यः स्वाहा…सर्वसमृद्ध्यै स्वाहा, भूः० भुवः० सुवः० भूर्भुवः सुवः स्वाहा। इमम्मे वरुण० तत्त्वा यामि० त्वन्नो अग्ने० स त्वन्नो अग्ने० त्वमग्ने अयास्य० अयाश्चाग्ने० यदस्मिन्कर्मणि० यदस्य कर्मणो० प्रजापते न त्व० स्वाहा' इति। अथ बर्हिषो धातूनां सम्प्रलुप्य ध्रुवायां समनक्ति—'समङ्क्तां बर्हि…रङ्क्ताम्' इति। धातूनां बर्हिष इति, धातुशब्दः स्तीर्णमुष्टिवाचकः, त्रिधातु पञ्चधातु वेत्यादिषु व्याख्यातः। धातूनां सम्बन्धिनां बर्हिषां ग्रहणमविशेषात् त्रित्वे पर्यवस्यतीति प्रतिधातु त्रयाणां त्रयाणां दर्भाणां ग्रहणमिति गम्यते। अथ वा विशेषेणैकदेशग्रहणे तदवयवाऽपेक्षया बहुवचनमध्याहार्यं

बर्हिषः सकाशाद्दर्भानादायेति। अत एव सम्प्रलुप्येत्युक्तम्। सम्प्रलोपो नाम एकदेशाऽऽहरणेन मुष्टीनामेकावयवत्वच्युतिः। ध्रुवायां समनक्तीति, ध्रुवा शब्दस्तगताऽऽज्यलक्षकः। समनक्तीति एकवारमेवेति गम्यते ॥३५,३६॥

अथैनदाहवनीयेऽनुप्रहरति—'दिव्यं नभो गच्छतु यत्स्वाहा' (तै० ब्रा० ३।७।५।१०) इति ॥३७॥ अथोपोत्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति—'देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञं स्वाहा वाचि स्वाहा वाते धाः स्वाहा' (तै० सं० १।१।१३।३) इति ॥३८॥ उद्गृहति स्रुचम् ॥३९॥ निनयति प्रणीताः ॥४०॥ उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान् क्रमते ॥४१॥

भव०—याजमान उक्तस्य विस्तरेण विष्णुक्रमस्येह वचनप्रयोजनं प्रवसतोऽपि सहक्रमणकरणार्थम् ॥४१॥

॥ इति सप्तदशोऽध्यायः समाप्तः ॥

सा०—अथैनदाहवनीयेऽनुप्रहरति—'दिव्यं···स्वाहा' इति। गतार्थम् ॥३७॥ अथोपात्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति 'देवा गातुविदो ···वाते धाः स्वाहा' इति। द्वैधे विशेषः—समिष्टयजुषो होम इति। सूत्रमाचार्ययोः। अत्रो ह स्माऽऽह गौतमः 'स्वाहा वाचि' इति हुत्वा बर्हिषो धातूनां सम्प्रलुप्य ध्रुवायां समज्याऽनुप्रहृत्याऽभिजुहुयात् 'स्वाहा वाते धाः स्वाहा' इति (बौ० श्रौ० २०।१५)। स्वाहा वाचीति मन्त्रान्तग्रहणम्। हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽसानि (तै० ब्रा० १।३।३।७) इतिवत्। स्वाहा वाचीत्यनेन स्वाहाकारः। यथा परिवप्य होमे स्वाहा देवेभ्य इति। बर्हिरञ्जनहवनमन्त्रौ प्रागुक्तावेव गौतमपक्षेऽप्यनुसन्धेयौ। स्वाहा वाते धाः स्वाहेत्येको मन्त्रः, उभयतः स्वाहाकारः। यथोपांशुग्रहे स्वाहा त्वा सुभवः सूर्याय (तै० सं० १।४।२।१) स्वाहेति ॥३८॥ उद्गृहति स्रुचम्। स्रुचं क्षिपति ॥३९॥ निनयति प्रणीताः। प्रणीतानिनयनस्य याजमानत्वेऽप्यत्राऽभिधानमध्वर्योरपि सहकर्तृतां द्योतयितुम् ॥४०॥ उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान्क्रमते। विष्णुक्रमशब्दस्तन्मन्त्रलिङ्गानुसारेण पदविक्षेपाणां संज्ञा। ते च त्रय एव। तृतीये चतुर्थमनुवर्तयति, न चतुर्थाय प्रक्रामतीति वचनात्। दक्षिणेन पदेति अस्यैव प्राक्प्रसरणं समन्त्रकम्, तदनुविधायित्वञ्च वामपदक्रमस्येति द्योतयति। तथा च सूत्रम्—'अनतिहरन्सव्यम् (आप० श्रौ० ४।१४।६) इति। अस्य याजमानत्वेऽप्यत्राऽभिधानं एतावन्तं कालमध्वर्युसन्निधानस्याऽवश्यकत्वं द्योतयितुम्। केचित्तु पूर्णपात्रनिनयनविष्णुक्रमणयोर्याजमानयोरप्यत्राभिधानस्येवं प्रयोजनमाहुः—यजमानप्रवासेऽप्यमन्त्रकमेवाऽनयोरनुष्ठानमध्वर्युकर्तृकं यथा स्यादिति ॥४१॥

संतिष्ठत आमावास्यं वा पौर्णमास्यं वा हविः ॥४२॥

सा०—सन्तिष्ठत आमावस्यं वा पौर्णमासं वा हविरिति। हविःशब्देन साङ्गं कर्मोपलक्षयति। वाशब्दद्वयेन वैमृधस्य भिन्नतन्त्रपक्षे नैतावता पर्यवसानं तस्या इष्टेः पूर्णमासाङ्गत्वात्। तथाऽपि दार्शमेव तन्त्रं सेन्द्रत्वाऽऽपादकत्वादिति द्योतयति। अयमेवाऽर्थः तत्तत्प्रकरणे प्रपञ्चितः। अथ वै भवति—'ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत। य एनौ सेन्द्रौ यजेतेति। वैमृधः पूर्णमासेऽनु निर्वाप्यो भवति। तेन पूर्णमासः सेन्द्रः। ऐन्द्रं दध्यमावास्यायां, तेनाऽमावास्या सेन्द्रा'(तै०सं० २।५।४।१)इति। केनो स्विदनीजानस्य सेन्द्रौ भवत इति। ऐन्द्राग्नेन पुरोडाशेनेत्येव ब्रूयादित्यथ वै भवति—'देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते चरुं तां पौर्णमासं संस्थाप्याऽनुनिरवपन्ततो देवा अभवन्पराऽसुराः' (तै० सं० २।५।४।१)। यो भ्रातृव्यवान्त्स्यात् स पौर्णमासं संस्थाप्यैतामिष्टिमनुनिर्वपेत् पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताश्च यज्ञञ्च भ्रातृव्यस्य वृङ्क्त इति ब्राह्मणम्। स एव भ्रातृव्यवतो 'यथाकामं प्रयोगो[1] मिथुनान्पशून्सारस्वताभ्यां यावदेवाऽस्यास्ति तत्सर्वं वृङ्क्त इति ब्राह्मणम्। अथ वै भवति—पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति स पौर्णमासीं पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां हत्वा भ्रातृव्यं नाप्याययतीति ब्राह्मणम्(बौ०श्रौ० १७।४७,४८) इति॥४२॥

अत्र प्रयोगक्रमः—

होत्रे वेदं प्रदायाऽऽदत्ते दक्षिणेन हस्तेनाऽऽज्यस्थालीं स्रुवं सव्येन जुहूं प्रदक्षिणमावृत्य प्रत्यगेत्य गार्हपत्यदक्षिणाग्न्योरन्तरागत्य, अतिक्रम्य गार्हपत्यस्य दक्षिणा प्रत्यग्देश उपविशति। होता गार्हपत्यस्योत्तरतो गत्वा पत्न्या उत्तरत उपविशति। आग्नीध्रोऽप्येवमेव गत्वा तस्योत्तरत उपविशति। अध्वर्युर्होतुर्हस्ताद्वेदं गृहीत्वोपभृतं तमेव कृत्वा जुह्वामाज्यस्थाल्याः स्रुवेणोपहत्य चतुर्वारं गृह्णन् आह—सोमायेत्युपांशु अनुब्रूहीत्युच्चैः। आश्राव्य प्रत्याश्रावित आह—सोममित्युपांशु यजेत्युच्चैः। वषट्कृते मध्ये जुहोति। सोमायेदं० सोमस्याहं…धिषीयेति। पुनश्चतुर्गृहीत्वाऽऽह—त्वष्ट्र इत्युपांशु, अनुब्रूहीत्युच्चैः। आश्राव्य प्रत्याश्राविते त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोति। त्वष्ट्र इदं० त्वष्टुरहं…पशूनां रूपं पुषेयमिति। पुनश्चतुर्गृहीत्वाऽऽह—देवानां पत्नीभ्य इत्युपांशु, अनुब्रूहीत्युच्चैः। आश्राव्य प्रत्याऽऽश्राविते देवानां पत्नीरित्युपांशु,यजेत्युच्चैर्वषट्कृते मध्ये गार्हपत्यं परिश्रित्य जुहोति। देवानां पत्नीभ्य इदं०।

आज्यस्थाल्याः स्रुवेण जुह्वां सकृत्सकृदाज्यं गृहीत्वा राकादीन् गार्हपत्ये जुहोति—राकायै स्वाहा, राकाया इदं। सिनीवाल्यै स्वाहा सिनीवाल्या इदं०। कुह्वै०, कुह्वा

1. 'यथाकाम प्रयोगो' इति कै० सं०।

इदं०। अनुमत्यै०, अनुमत्या इदं०। सम्पत्नी पत्या···रभेतां स्वाहा, दिवि ज्योतिषे अजराय परमात्मन इदं प्रजपतय इदं० इति वा। दश ते तनुवः···अमृतो भूत्स्वाहा, नारिष्ठाभ्यां अग्निवायुभ्यामिदं०। यं वा देवा···हहौ स्वाहा, नारिष्ठाभ्यामग्निवायुभ्यामिदं०। चतुरश्राज्यस्य गृह्णन आह—अग्नये गृहपतय इत्यादि। वषट्कृते उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति अग्नये गृहपतय इदं०। देवानां पत्नीरग्निः···भूयासमिति। केचित् राकां सिनीवालीं कुहूञ्चानुमतिञ्च प्राग्गृहपतेर्यजन्ति। पूर्ववद् द्रव्यत्यागः। दब्धिरसि···पाप्मानं दभेयमिति उपांशुयाजवत्सर्वेषामनुमन्त्रणम्। यजमानस्याऽपामुपस्पर्शनञ्च। अध्वर्युरपरेण पत्नीं गत्वाऽग्रेण होतारमतिक्रम्योत्तरतः प्रत्यङ्मुख आसीनः पूर्ववद्धोतुरङ्गुलिपर्वणी अनक्ति। पूर्ववत्कृतकार्यस्य होतुर्हस्ते चतुर आज्यस्य बिन्दूनिडामवद्यति। समन्वारभेते अध्वर्युश्च पत्नी च। उपहूतायामिडायाम् उपहूतः पशुमानसानीति यजमानेनोक्ते, स्थाल्याः षडवत्तमग्नीधे ददाति। सोऽपि पूर्ववत्प्राश्य मार्जयते।

अध्वर्युः स्रुचि चतुर्गृहीतं गृहीत्वाऽप्रदक्षिणं पर्यावृत्याऽन्वाहार्यपचने प्रायश्चित्तं जुहोति—उलूखले जुहोमि स्वाहा, विश्वेभ्यो देवेभ्य इदं०। पुनश्चतुर्गृहीत्वाऽन्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय गृहीताऽऽज्ये पूर्वनिहितान्फलीकरणानोप्य फलीकरणहोमं जुहोति—अग्नेऽदब्धा···योनिं स्वाहा, अग्नय इदं०। यथेतमावृत्य पश्चाद्गार्हपत्यस्य निहितं वेदं विषयं यजमानं वाचयति—'वेदोऽसि वित्तिरसि···वाजिनम्' इति। होत्रे वेदप्रदानम्। पत्नी योक्त्रं विमुञ्चते—इमं विष्यामि···करोमीति। अथाऽस्या अञ्जलौ योक्त्रं निधायोदपात्रमानयति—समायुषा···तनुवा ममेति। पत्नी स्वमुखं विमृष्टे—यदप्सु ते···सरस्वतीति। तां पूर्ववदाचामय्य समिधश्च गार्हपत्य आधापयति मन्त्रैः—व्रतमचारिषं···राधीति विशेषः। उक्ता देवताः। सा यथाप्रपन्नं निष्क्रामति।

अध्वर्युर्गार्हपत्यस्योत्तरेण प्राङेत्य स्थाल्याः स्रुवेणाऽऽज्यमादाय ध्रुवामाप्याययति—आप्यायतां···अस्मिन्निति। ध्रुवामाप्याय्याऽनेनैव मन्त्रेण यजमानोऽनुमन्त्रयते। ततो यजमानः स्वभागं प्राश्नाति—प्रजापते··यजमानेनेति। अध्वर्युः स्थाल्याः स्रुवेणोपघातमविज्ञातदोषनिर्घातार्थानि प्रायश्चित्तानि जुहोति—आश्रावितं···देवान्त्स्वाहा, यज्ञायेदम्०। इष्टेभ्यः०। वषडनिष्टेभ्यः०। भेषजं दुरिष्टचै०। निष्कृत्यै०। दौराध्यै०। दैवोभ्यस्तनूभ्यः०। ऋद्ध्यै०। समृद्ध्यैः०। सर्वसमृद्ध्यै०। इष्टेभ्य इत्यादीनां सर्वसमृद्ध्या इत्यन्तानां नवानां—प्रजापतय इदं०। भूः स्वाहा, अग्नय इदं०। भुवः० वायव इदं०। सुवः स्वाहा, सूर्यायेदं०। भूर्भुवः सुवः० प्रजापतय इदं०। इमम्मे०। तत्त्वा यामि०। उभयोर्वरुणायेदं०। त्वन्नो अग्ने०। स त्वन्नो अग्ने०। उभयोरग्नीवरुणाभ्यामिदं०। त्वमग्ने अयासि···अयाश्चाग्ने०,। एतयोरग्नय इदं। यदस्मिन्कर्मणि···घृतेन स्वाहा, देवेभ्य इदं०। यदस्य कर्मणोत्यरीरिचं···समर्धयित्रे स्वाहा, अग्नये स्विष्टकृत इदं०। प्रजापते न त्व० स्वाहा, प्रजापतय इदं०।

ध्रौवात्स्रुवेणोपहृत्य ब्रह्म प्रतिष्ठा मनसा इत्येतेनाऽनुवाकेन प्रतिमन्त्रं जुहोति। बर्हिषो धातूनां सम्प्रलुप्य—समङ्क्तां ··रङ्क्तामिति ध्रुवायां समज्याऽऽहवनीयेऽनुप्रहरति—दिव्यं नभो···यत्स्वाहेति, दिव्याय नभस इदं०। उपोत्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति—देवा गातुविदो···धाः स्वाहा इति, देवेभ्यो गातुविद्भ्यो यज्ञाय परमात्मन इदं०। उद्वूहति स्रुचम्। निनयति प्रणीताः। सदसि···चिमत्पय इति। अथ यजमानो विष्णुक्रमान्क्रमते—विष्णोः क्रमोऽसि इत्यादि ब्राह्मणांस्तर्पयितवै ॥ इति प्रथमे प्रश्ने सप्तदशोऽध्यायः ॥

॥ इति सप्तदशोऽध्यायः समाप्तः ॥

॥ इति बौधायनश्रौत-(दर्शपूर्णमास)-सूत्रे प्रथमः प्रश्नः समाप्तः ॥

—:o:—

# प्रथमं परिशिष्टम्

## गोपालप्रणीता दर्शपूर्णमासकारिकाः

[गोपालप्रणीतानाम् एतासां कारिकाणां प्रतिलिपिकोशो गौकर्ण-वासिनां कोड्लेकेरेबन्धूनां सौजन्यात् प्राप्तः । अत्र केचन पाठाः सन्दिग्धाः सन्तोऽपि पूर्वोक्तबन्धूनामनुरोधात् यथाकोशं प्रकाश्यन्ते ।]

पक्षादौ पक्षयोः सन्धौ सन्निकृष्टतरं दिवा ।
पौर्णमास्यां प्रधानादिकर्तव्यान्यत्र नो गुरुः ॥१॥
यागान्वाधानयोर्मध्ये पर्वसन्ध्येव पक्षयोः ।
किं नु सन्धेः प्रधानानां सन्निकर्षोऽनपेक्षितः ॥२॥
अन्यो दिनान्ते रात्र्यां वा प्राहेष्टि सन्धियोगयोः ।
संनिपातो मतस्तेन कालहोमोऽप्यनादृतः ॥३॥
आमावास्यस्य पूर्वेद्युरदृष्टेन्दुः प्रशस्यते ।
दृष्टचन्द्रमहर्गौणं यागः स्यादपरेऽहनि ॥४॥
इति द्वैधोदिताः पक्षा एवं स्वामिमतानुगाः ।
अन्वाधानार्थमग्नीनां स्थूलकाष्ठोपवासनम् ॥५॥
आग्निहोत्रे हुते विप्रं भोजयित्वैव दम्पती ।
आशितौ सर्पिषा दुग्धमिश्रमुच्छिष्टकं स्त्रियै ॥६॥
मांसेक्षुरसनिर्यासलवणानृतमैथुनम् ।
शूद्रायोच्छिष्टदानं च न कुर्याद क्रोध-रोदने ॥७॥
तिलेभ्योऽन्यत्र मुद्गादि कोशीधान्यं च वर्जयेत् ।
विकल्पो वापने तीर्थे स्नातावहतवाससौ ॥८॥
तीर्थेऽहताम्बराः स्नाता ऋत्विजो ब्रह्मचारिणः ।
सर्वे प्रक्षालितानार्द्रनिर्मलश्वेतवाससः ॥९॥

अभ्यक्तौ नवनीतेन दीक्षितावञ्जितौ तयोः ।
पवनाचमने मन्त्रप्रोक्षणम् ऋत्विजामपि ॥१०॥
सप्तभिः सप्तभिर्दर्भैस्त्रिस्तूष्णीं पवनं भवेत् ।
अब्लिङ्गाभिः पिबेदद्भिर्व्याहृतीभिर्मृजेत्ततः ॥११॥
अथवा विपरीतं तन्मन्त्राचमनमिष्यते ।
मन्त्रैः सुरभिमत्याद्यैर्मन्त्रप्रोक्षणमिष्यते ॥१२॥
प्रपद्य स च तीर्थेन त इडादेवहूरिति ।
देवा गातुविदो गातुं यज्ञायेत्याध्वरो जपः ॥१३॥
यज्ञाधिदैवतं विष्णुं ध्यात्वादौ पुरुषो ह्यसौ ।
विहृत्याग्नीन्विहव्याभिस्तूष्णीमन्वादधीत वा ॥१४॥
तिसृभिस्तिसृभिस्त्वेकामुत्तराहवनीयतः ।
दशमीं निगदेत्तिष्ठन् व्याहृतीभिरथापि वा ॥१५॥
कृत्वोपस्थं च पाश्चात्य ऊर्ध्वज्ञुर्दक्षिणेऽनले ।
प्रह्व आहवनीयेऽग्नावन्वादध्यात् क्रमेण तु ॥१६॥
परिसमूहन वारिसमुक्षणे हुतभुजां शकृदा परिलेपनम् ।
कुसुम-काष्ठसमाहरणं व्रतं वदति रूपमिहौपवसथ्यकम् ॥१७॥
पयस्वत्या समिद्भिश्च व्रतोपेतस्य यज्वनः ।
शाखाछेदनमित्येकः क्रमोऽद्य वाऽपरेऽहनि ॥१८॥
शुल्वे मुष्टिं निधायाथ प्रस्तरं यजुषोपरि ।
संभरेदिध्मशुल्वादि तूष्णीं संभरणं विना ॥१९॥
योक्त्रेण संनह्य यजुःस एव युक्तं क्रियाता इति वाचयीत ।
ऊनेऽतिरिक्तं यजुरत्र लिङ्गात्पत्नीं पुरस्ताज्ज्वलनेक्षणं च ॥२०॥
प्रागादिषु चतुर्दिक्षु प्रयाजा मध्य उत्तमः ।
पुरस्तादुपरिष्टाच्च हविषां स्यात्स्रुवाहुतिः ॥२१॥
इडायाः पञ्चमं भागं द्वेधाकृत्वा घृतैः सह ।
षडवत्तं तदग्नीधे मार्जयित्वा स्रुतीवलः ॥२२॥

स्पृष्ट्वा ब्रध्नेति तन्मन्त्रैरिदं ब्रह्मण आदिभिः ।
अभिमृश्य पृथग् भागानग्नीधे प्रथमं श्रुतेः ॥२३॥
उपस्तीर्य द्विधा भागं कृत्वा तस्यैकमादधेत् ।
उपस्तीर्यान्यमाधाय ततो द्विरभिघारयेत् ॥२४॥
एतदग्नीध एव स्याद्वेदेन ब्रह्मणे हरेत् ।
होत्रे चाध्वर्यवे चान्यं प्राशित्रं ब्रह्मणे हरेत् ॥२५॥
ब्रह्मभागमथासन्नमन्वाहार्यं प्रतिस्वयं ।
प्रजापतेरिति ब्रह्मा ब्रह्मन्नित्यादि तद्व्रती ॥२६॥
ऋत्विग्भ्यस्तेऽपि तं सप्तदशकृत्वस्त्वपान्य च ।
देवस्य त्वेति गृह्णीयुरुच्छिष्टोद्वासनं ततः ॥२७॥
होतृ-प्रश्नानुवाकेन दक्षिणायाः प्रतिग्रहः ।
हुत्वा पिष्ट ततो वेदे यज्वानं वाचयेत् क्रियाः ॥२८॥
होतृपत्न्योरिमं विष्या पूर्णमाचामयेत् स्त्रियम् ।
आधाप्य समिधो ध्रौवमाप्याय्याश्रावितादिभिः ॥२९॥
ब्रह्म प्रतिष्ठेत्येतेन नित्यं जुह्वति केचन ।
यज्वा व्रतविसर्गात्प्रागुपवेषमथोत्करे ॥३०॥
यं देवा इत्युपोद्वास्य प्रत्यञ्चं स्थूलदेशतः ।
ततो व्रतविसर्गादि तर्पणान्तं समाचरेत् ॥३१॥
दशौदनाः स्युरिष्टीनां पशूनां शतमोदनम् ।
सहस्रमोदनं सोम इत्याहुर्ब्रह्मतर्पणम् ॥३२॥

## ( विहारकारिकाः )

आहापराग्नेः पूर्वाग्नेरष्टासु प्रक्रमेष्विति ।
प्रक्रमान्पञ्चधा कृत्वा षष्ठं भाग समानयेत् ॥३३॥
पाशौ स्पन्द्यान्त्ययोः सर्वं पुनः संभुज्य पञ्चधा ।
लक्षणं द्वि-त्रिमध्ये स्याच्छङ्क्वोः पाशौ प्रमुच्य तु ॥३४॥

तस्य भागद्वयं पश्चात्पुरस्तात् त्रितयं तथा ।
लक्षणं दक्षिणाकृष्य दक्षिणाग्नेः प्रकल्पयेत् ॥३५॥
तथैव चोत्तराकृष्य निहन्यादार्जवाय तु ।
विपर्यस्योत्तराकृष्य निहन्यादुत्कराय च ॥३६॥
आखरस्त्वपरस्याग्नेर्विष्कम्भः सप्तविंशतिः ।
अङ्गुल्यस्तु तदर्धेन कार्यं तत्परिमण्डलम् ॥३७॥
त्रिंशद्दक्षिणविष्कम्भश्चत्वारश्च तिलाः पुनः ।
स्थानादुदक् तिलाशीत्या कृत्वा तु परिमण्डलम् ॥३८॥
परिघादुत्तरे तस्य ततोऽन्यत्परिमण्डलम् ।
संसर्गयोस्तयोः स्पन्द्यां नियम्योत्तरमुत्सृजेत् ॥३९॥
अरत्निचतुरश्रस्तु पूर्वाग्नेराखरो भवेत् ।
यावती मानतो रज्जुस्तावत्यागन्तुकी भवेत् ॥४०॥
आगमार्धे तु शङ्कुः स्यान्मध्यस्यार्धे निरञ्छनम् ।
पश्चादाहवनीयस्य वेदिर्दीक्षितसम्मिता ॥४१॥
तस्यास्तृतीयभागोना तिरश्ची पश्चिमा भवेत् ।
पुरस्ताद्यजमानार्धसम्मिता दक्षिणोत्तरा ॥४२॥
आयामं द्वादशं कृत्वा त्रयोदशे निरञ्छनम् ।
चतुर्दशे तु श्रोणी स्यादंसौ पञ्चदशे तथा ॥४३॥
अष्टादशस्तु पाशः स्यात्सा वेदिर्दार्शिकी भवेद् ॥४४॥

—:o:—

# द्वितीयं परिशिष्टम्

## सूत्र-सूची

—:०:—

# तृतीयं परिशिष्टम्

## सायणभाष्य उद्धृताः सन्दर्भाः

[अस्मिन् परिशिष्टे तैत्तिरीय-संहिताब्राह्मणारण्यकाणां बौधायन-श्रौतगृह्यधर्मसूत्राणां च संदर्भा न संकल्यन्ते ]

| संदर्भः | संकेतः | पृष्ठम् |
|---|---|---|
| अक्तस्य तृणमपादाय प्रज्ञातं निदधाति | आप० श्रौ० ३।६।५ | १७५ |
| अग्निहोत्रं जुहुयात्स्वर्गकामः | मै० आ० ६।३७ | ११२ |
| अग्निहोत्रे हुते विप्रं भोजयित्वैव दम्पती | गोपालकारिका | १२ |
| अग्न्याधानप्रभृतीन्याह वैतानिकानि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः, तन्त्रस्य तत्राम्नातत्वात् | आश्व० गृ० १।१।२,३ | ४ |
| अग्रेण स्रुचोऽपरेण मध्यमं परिधिमनवकाशं प्रस्तरम् | आप० श्रौ० २।१३।५ | १४१ |
| अग्रेणाऽऽघारसंभेदं प्रतीचस्त्रीननूयाजान्यजति | आप० श्रौ० ३।५।१ | १७२ |
| अङ्गुलिप्रक्षालनं पात्रीनिर्णेजनं चोल्मुकेनाऽभितप्य | आप० श्रौ० १।२५।१४ | ९२ |
| अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा० | आश्व० श्रौ० १।२।३१ | ७२ |
| अथ यज्ञपत्नीकः स्यात्तुभाभ्यां तस्य संस्कारः | भार० प० १८३ | ११२ |
| अधस्ताद्धस्तेनोपानक्ति | सत्या० श्रौ० १।८ | १३० |

| संदर्भः | संकेतः | पृष्ठम् |
| --- | --- | --- |
| अध्वर्युः प्रथममवदानमवद्यति, स्वयं होतोत्तरमेतद्वा विपरीतम् | आप० श्रौ० ३।२।६ | १६३ |
| अनतिहरन्सव्यम् | ,, ,, ४।१४।६ | १८८ |
| अपरिमितं प्रमाणाद्भूयः | का० शु० प० १।२३ | ९९ |
| अपरेण गार्हपत्यमूर्ध्वज्ञव आसीनाः | आप० श्रौ० ३।८।९ | १८१ |
| अपरेण स्रुचः पुरोडाशावासादयति | ,, ,, २।११।७ | १३३ |
| अपरेणाऽऽघारसम्भेदं पञ्च प्रयाजान्प्राचो यजति | ,, ,, २।१७।१ | १४९ |
| अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति | ,, ,, १।१।६८ | ३२ |
| अर्थप्राप्तत्वाद्वपनस्य यदि विद्यते ततोऽस्मिन् काले नियम्यते | धूर्त० भा० ,, ,, ४।१।४ | १२ |
| अविकारोऽथ वोहेद्वा या सन्नाडिति शासने | गोपालकारिका | १०१ |
| असति द्रव्ये कर्मलोपः यथा चरौ | भारद्वाज | ७० |
| अर्हविशेषे चोद्यते प्रत्येकं परि समाप्यते | शाबरभाष्य | १०१ |
| अहे···पाकतरः | आश्व० श्रौ० १।२।३० | ७२ |
| आग्नीध्र एतानि कर्माणि कुर्यादित्येकमध्वर्युरित्यपरम् | भार० श्रौ० २।३।१२ | १०१ |
| आतञ्चनाऽपिधाने, निधानञ्च निवर्तते | आप० श्रौ० १।१४।७ | ७२ |
| 'आशास्तेऽयं यजमानोऽसौ' इत्यत्र यजमानस्य | अनुपलब्धमूलम् | १८० |
| आसीन आश्राव्य | आप० श्रौ० ३।६।५ | १७५ |
| आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः | अनुपलब्धमूलम् | ८६ |
| आहरेच्च ततो दारामग्नींश्चैवाविलम्बयन् | गोपालकारिका | ११३ |
| आहवनीयाऽञ्जलिं करोति | भार० श्रौ० २।१३।१ | १४० |
| आहार्येणाऽनाहिताग्निं पत्नीञ्च | आश्व० श्रौ० ६।१०।९ | ११२ |
| आहिताग्नेश्चेत्पूर्वं जाया म्रियेत, तां निर्मंथ्येन दहेत् | जै० गृ० २।५।१ | ११२ |
| इडायाः पञ्चमं भागं द्वेधा कृत्वा घृतैः सह | गोपालकारिका | १६४ |
| इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते | आप० श्रौ० ३।१०।६ | १८६ |
| उच्चैरिति प्रैष उदीरितेऽनीत्सवं समाहन्ति | कल्पसार | ७० |
| उत्तरौ दोहौ | आ० श्रौ० २।११।९ | १३३ |
| उपभृति जुहूमभ्यादधाति मुखतोऽभिहृत्य मुखतः | आप० श्रौ० २।१३।३-४ | १४१ |
| ऊनेऽतिरिक्तं यजुरत्र लिङ्गात्पत्नीं | गोपालकारिका | ११० |
| एते एवाऽऽक्रमणप्रत्याक्रमणे मन्त्रवती भवतः | आप० श्रौ० २।१४।१० | १४२ |
| ओं प्रतिष्ठेति समिधमनुजानीयात् | आश्व० श्रौ० १।१३।७ | १७१ |
| कपालाञ्जनमन्त्रस्य प्रतिकपालयोगमावृत्तिः । अपि वा एकैकशः कपालानि | सत्याषाढ | १३१ |

—:०:—

# चतुर्थं परिशिष्टम्

## विवरण-भाष्ययोर्व्याख्याता विशिष्टाः शब्दाः

---

# शोधन-पत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २ | २५ | ०वशालम्भे | ०वशालम्भे | १५ | १६ | चोत्तरीयं | वोत्तरीयं |
| ३ | १० | ०वह् वचा० | ०वह् वृचा | १५ | २७ | ०स्यादधात | ०स्यादधाति |
| ४ | २१ | प्रत्यक्षश्रति | प्रत्यक्षश्रुति | १५ | ३० | तक्वाम्यदित० | तच्चाभ्युदित० |
| ४ | २३ | नक्त | नक्तं | १६ | २५ | ०दुमत्रापि | ०दुभयत्रापि |
| ५ | ३ | दाचक | वाचक | १८ | ७ | ०शमनं | ०मशनं |
| ६ | १६ | ०वतमति | ०वतमिति | १८ | ११ | मात्रत्य | मत्रत्य |
| ७ | ६ | चौर दिक० | चौरादिक० | १८ | २६ | स्याऽऽत्रत्य | स्याऽत्रत्य |
| ७ | ७ | कत्रमिप्राये | कर्त्रभिप्राये | १९ | १९ | तुचे | चेत् |
| ८ | १ | उपाकरणदयः | उपाकरणादयः | २२ | ११ | अध्वयु | अध्वर्यु |
| ८ | ९ | कुयत्तिस्या० | कुर्यात्तस्या० | २३ | ३ | द्योषदसि | घोषदसि |
| ८ | १२ | वख्यातम् | व्याख्यातम् | २३ | १३ | तिर्यक | तियक् |
| ८ | २६ | ०नामङ्क्नि | ०नामङ्गानि | २४ | २ | स्पशनं | स्पर्शनं |
| ८ | ३० | ग्रीष्मेकाहेन | ग्रीष्म एकाहेन | २४ | ५ | सवस्तम्बं | सर्वस्तम्बं |
| ९ | ५ | इत्यादानां | इत्यादीनां | २४ | १६ | मन्त्रते | मन्त्रयते |
| १३ | ११ | पवणीति | पर्वणीति | २५ | २ | गमनमङ्गी | गमनमनङ्गी |
| १३ | १४ | तनरुहा० | तनूरुहा० | २५ | २५ | सिद्धे | सिद्धे |
| १३ | १६ | वदताप्यासवत्सर | वदताप्यासंवत्सरं | २७ | ८ | ओकारऽछान्दसः | ओकारश्छान्दसः |
| १४ | १३ | निघत्ते | निधत्त | २९ | १ | शकलं | शकलं |
| १५ | ९ | (आप०श्रौ०६।३।८) | | २९ | २ | निदेध्यदिति | निदध्यादिति |
| | | | (बौ०श्रौ० २।१।६) | २९ | ३ | मत्रेणव | मन्त्रेणैव |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| २९ | ११ | सनह्यति | सन्नह्यति | ५३ | २५ | ॥१८॥ | ॥२०॥ |
| २९ | १७ | त्रींस्त्रीन्वानतु | त्रीस्तृचानतु | ५४ | ५ | ०नाम्माना० | ०नाम्नाना: |
| ३० | २१ | रिम | रिध्म | ५४ | ३० | ग्रानादिष्टं | ग्रनादिष्टं |
| ३१ | १४ | साऽमा | सोऽमा | ५५ | १ | वाताम् | वाताय |
| ३१ | २५ | समान्य | सामान्य | ५५ | २० | ग्रवदात | ग्रवदानत |
| ३३ | ८ | इयुक्तत्वात् | इत्युक्तत्वात् | ५६ | १४ | ऽसमन्त्र | ऽभिमन्त्र |
| ३३ | २८ | ०नोपहृत्य | ०नोपहृत्य | ५८ | ८ | वैमृघाम्यामिति | वैमृघाम्यामिति |
| ३५ | १ | पर्णनि | पर्णानि | ५९ | १० | लिङ्गामाहु: | लिङ्गमाहु: |
| ३५ | १० | सामन्य | सामान्य | ६० | ३ | लभतेति | लभेतेति |
| ३६ | ३ | पवित्र | पवित्रं | ६० | ५ | मामित | मादित |
| ३७ | १ | गार्हपत्य | गार्हपत्यं | ६० | १६ | र्मि चेत् | मिति चेत् |
| ३७ | २ | दाहनं | दोहनं | ६१ | १ | निर्वापकम: | निर्वापक्रम: |
| ३७ | २ | साय | सायं | ६१ | २ | ०षोमस्यमि० | ०षोमाम्यामि० |
| ३७ | १३ | बुधस्य | वुधस्य | ६४ | १० | निराकङ्क्षी | निराकाङ्क्षी |
| ३७ | १५ | ०मङ्गरा० | ०मङ्गारा० | ६६ | २ | वादनो | बाधितो |
| ३८ | २२ | ०मापद्यक० | ०मापद्येक० | ६६ | २२ | धूनीत्यूर्ध्वं | धूनोत्यूर्ध्वं |
| ४० | १४ | ाथमिक | प्राथमिक | ६७ | २ | कमव्यपदेश: | कर्मव्यपदेश: |
| ४० | १७ | गृह्णायादिति | गृह्णीयादिति | ६७ | ५ | पात्रा ण | पात्राणि |
| ४२ | ६ | बोधयायन: | बोधायन: | ६७ | ५ | उपपुज्यन्ते | उपयुज्यन्ते |
| ४३ | ६ | ०त्यागस्य० | त्यागस्य० | ६७ | ६ | मन्त्रास्त्रि: | मन्त्रस्त्रि: |
| ४३ | २७ | प्ररणे | प्रकरणे | ६७ | ८ | पस्तृण तीति | पस्तृणातीति |
| ४४ | ६ | ग्रपहरणं | ग्रपाकरणे | ६७ | १९ | उपशिष्टा | उपरिष्टा |
| ४४ | २६ | त मे | तु मे | ६७ | २८ | पस्तृणतीति | पस्तृणातीति |
| ४४ | २७ | मग्निहोत्रं | मग्निहोत्रं | ६७ | २९ | त्रान्तरा | सूत्रान्तरा |
| ४५ | ११ | पयस्यकस्य | पयस्कस्य | ६८ | ३ | मस्यादानादा | मभ्रयादानादा |
| ४५ | २४ | यज | यज | ७३ | ३ | गापाय | गोपाय |
| ४७ | ४ | स्वरितत्वात् | ¹स्वरितत्वात् | ७४ | १२ | ग्रग्रये | ग्रग्नये |
| ४७ | ६ | ०दित्यदिषु | ०दित्यादिषु | ७४ | १६ | तूष्णीण् | तूष्णीम् |
| ५१ | ७ | ०ममुप० | ०मुप० | ७५ | ४ | मातरिश्वान | मातरिश्वन |
| ५१ | ११ | णाऽऽवनीय | णाऽऽहवनीय | ७६ | १७ | सवषु | सर्वेषु |
| ५२ | १९ | िद्धवदन्ते | सिद्धवदन्ते | ७७ | ५ | ग्रमुष्मे | ग्रमुष्मा इति |
| ५३ | २० | म ह्वा: | मा ह्वा: | ७७ | २४ | पिषति | पिंषति |

| पृष्ठे | पंक्तौ | अद्धशुम् | शुद्धम् |
|---|---|---|---|
| ७८ | १ | प्रतौचीं | प्रतीचीं |
| ७८ | १२ | निदधाती | निदधती |
| ७८ | २४ | निदधाति | निदधति |
| ७९ | १ | चर्वथं¹ | चर्वथं¹ |
| ७९ | ७ | पौर्णमास्यास् | पौर्णमास्याम् |
| ८० | १९ | उपवेश | उपवेष |
| ८३ | १ | यतीभ्यारभ्य | यतीत्यारभ्य |
| ८३ | २५ | कपालनमुप | कपालानामुप |
| ८४ | १ | कपालन्युप | कपालामुप |
| ८४ | १२ | देवऽङ्गार | देवाऽङ्गार० |
| ८५ | ८ | घर्मे | घर्मे |
| ८५ | १३ | तान्यङ्गारै | तान्यङ्गारैं |
| ८७ | ७ | ०र्मधुमतीभिः | र्मधुमतीर्मधुमतीभिः |
| ८८ | ५ | षोमा मुष्मा | षोमाभ्यामुष्मा |
| ८८ | ९ | प्रथस्वो स | प्रथस्वोरु |
| ८८ | १४ | सङ्गार्थम् | सङ्ग्रहार्थम् |
| ८९ | १४ | याजरय | याजस्य |
| ८९ | २५ | विरोधाः | विरोधः |
| ९१ | ८ | श्लक्ष्मीकरणेन | श्लक्ष्णीकरणेन |
| ९१ | १७ | ब्राह्मणम् | ब्राह्मणम् |
| ९२ | १ | कर्तृकत्व | तद्व्यापार |
| ९२ | २ | तद्वपापार | कर्तृकत्व |
| ९२ | १२ | विश्वदः | विश्वदानिः |
| ९२ | १५ | मुदपवर्गं | मुदगपवर्गः |
| ९४ | २ | ऽश्विनोर्वा | ऽश्विनोर्वा |
| ९५ | ६ | पृथिवै | पृथिव्यै |
| ९५ | ७ | तास्मि | तस्मि |
| ९६ | २० | घमपक्षे | चर्मपक्षे |
| १०० | २ | स्त्रु चञ्च | स्त्रु चश्च |
| १०२ | १२ | द्वेष्या | द्वेष्य |
| १०२ | १८ | ०हरन्तीयत्यन्वय | ०हरन्तीत्यन्वयः |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०३ | ९ | सृज- | सृज्य- |
| १०३ | १० | अद्भिः | अद्भ्यः |
| १०४ | २ | ज्वलितो | ज्वलतो |
| १०४ | १९ | मौग् | मौक् |
| १०४ | २६ | पूर्वं | पूर्वं परिग्राहं |
| १०४ | ३० | पांसू स्त्रि- | पांसूस्त्रि- |
| १०८ | २ | पक्ष | पक्षे |
| १०८ | २० | प्रवर्त्तिव्यं | प्रवर्तितव्यं |
| १०९ | ३ | आचायं | आचार्यं |
| ११२ | १९ | निर्मंथ्येन | निर्मथ्येन |
| ११२ | २३ | तस्मादलीको | तस्मदपत्नीको |
| ११२ | २८ | श्रवणात | श्रवणात् |
| ११६ | २७ | वेदि | वेद |
| ११७ | २ | प्रयज्छति | प्रयच्छति |
| ११७ | ३ | गोष्टं | गोष्ठं |
| ११७ | ६ | ऽध्युंरा | ऽध्वर्युंरा |
| ११९ | २० | स्थः | स्थः |
| १२० | ४ | स्थनी | स्थानी |
| १२० | ११ | ॥७॥ | ॥८॥ |
| १२० | १२ | मपा- | मुपा- |
| १२० | १२ | ॥८॥ | ॥९॥ |
| १२० | १९ | पितृसम्बन्धे | पितृसम्बन्धे |
| १२२ | ५ | क्रम्यौत्तरा | क्रम्योत्तर |
| १२४ | २१ | करणमुपभूत | करणमुपभृत |
| १२५ | १३ | उद्रूह्म | उद्रूह्य |
| १२५ | १७ | श्रोणिमारम्व | श्रोणिमारभ्य |
| १२५ | २० | श्रोणिभार | श्रोणिमार |
| १२५ | २१ | प्रक्छादयन् | प्रच्छादयन् |
| १२५ | २२ | यजमानहस्तात् | यजमानहस्तात् |
| १२७ | ८ | रव्या | ख्या |
| १२७ | १३ | विनियौगे | विनियोगे |

विशेष—पृ०१२७, पं०९–'परस्परापेक्षत्वाद्वाक्यात्, लिङ्गात् सदनकरण-' इत्येवं शोधनीयम् ।

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १२७ | १४ | धंचंस्तस्मिन् | धंचंस्तस्मिन् | १४३ | २३ | प्यमुपपन्न | प्यनुपपन्नः |
| १२८ | १६ | यवयौंवि | यवयोंवि | १४४ | ३ | ब्रह्मणम् | ब्राह्मणम् |
| ११८ | २३ | खमङ्क्ष्व | खमङ्क्ष्व | १४५ | १२ | नरकोपमन | नरकोपभोगेन |
| १२८ | २६ | यद्वत्यो | यद्वत्यो | १४६ | १६ | अग्रेणाऽहव | अग्रेणाऽऽहव |
| १३० | २६ | अग्नेया | आग्नेया | १४९ | २ | त्तराहुंति | त्तराहुतिं |
| १३० | २६ | प्रत्यग्यागे | प्रत्यग्भागे | १५० | ७ | दानाविधिः | दानविधिः |
| १३१ | १७ | ल्य वाच्यतया | ल्यब्वाच्तया | १५० | ८ | ग्रहणोपक्रने | ग्रहणोपक्रमे |
| १३१ | २३ | संस्कारत्मम | संस्कारात्मम | १५० | २१ | इत | इति |
| १३२ | ४ | ध्वर्युजमानौ | ध्वर्यु यजमानौ | १५१ | १० | बोघायनः | बोधायनः |
| १३२ | १ | उद्वासय | उद्वास्य | १५१ | २० | शालिकि | शालीकि |
| १३२ | २१ | ध्याव्याम् | ध्याय्याम् | १५१ | २२ | स्थाना– | स्थान– |
| १३२ | २५ | जुहूं | दक्षिणेन जुहूं | १५२ | १२ | नाऽज्यपक्षे | नाऽऽज्यपक्षे |
| १३३ | २८ | भस्माऽपोह्य | भस्माऽषोह्य | १५२ | टि० | २, १, २ | १, २, ३ |
| १३५ | २ | अधेध्मात् | अथेध्मात् | १५४ | १२ | सकृवुतरस्य | सकृदुत्तरस्य |
| १३६ | ६ | सशब्दःमुप | सशब्दमुप | १५५ | ५ | इन्द यज | इन्द्रः यज |
| १३६ | २७ | साभिधेनी | सामिधेनो | १५५ | २२ | दङ्डात्याक्रम्य | दङ्डत्याक्रम्य |
| १३६ | २७ | सप्नदश | सप्तदश | १५६ | १६ | स्रचमद्भिः | स्रुचमद्भिः |
| १३९ | १२ | अन्तमेन | अन्तिमेन | १५६ | २६ | स्रवदण्डेना | स्रुवदण्डेना |
| १३९ | १३ | जहोति | जुहोति | | | सादयित्वाभिः | सादयित्वाद्भिः |
| १३९ | २० | माघारयतिं | माघारयति | | | सस्पर्श्या | संस्पर्श्या |
| १३९ | २४ | परिधि | परिधि | १५७ | ७ | रोडाशस्यो | पुरोडाशस्यो |
| १४० | २६ | सविता ह्वयति | ह्वयति | १५७ | १५ | तन्त्रमग्न्यन्वाना | तन्त्रमग्न्वाधाना |
| १४१ | ८ | पाहरणे | प्रावहरणे | १५८ | १४ | क्रम्याऽश्राव्या | क्रम्याऽऽश्राव्या |
| १४१ | २१ | मघारयति | माघारयति | १५८ | २१ | मूले | मूल |
| १४२ | २ | एवारम्मे | एवारम्भे | १५८ | २४ | श्राव्याऽहा | श्राव्याऽऽहा |
| १४२ | १८ | व | व | १५९ | ६ | इंद्राग्न्यो | इन्द्राग्नियो |
| १४२ | २२ | प्राथभिके | प्राथमिके | १६० | ९ | संमिद्य | संभिद्य |
| १४२ | ३१ | हाता | होता | १६० | १२ | कसं | कंसं |
| १४३ | १३ | द्व वे | द्वैधे | १६१ | ४ | वाऽज्येन | वाऽऽज्येन |
| १४३ | १९ | ऽस्यामं | ऽस्यात्मं | १६१ | २४ | तदाऽशीरुप | तदाऽऽशीरुप |
| १४३ | १९ | मित्यर्थं | मित्यर्थः | १६१ | २५ | माह | माहा |
| १४३ | २० | सत्मु | सत्सु | १६४ | २० | ध्वर्युणा | ऽध्वर्युणा |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १६५ | ५ | स्याङ्गीरसः | स्त्वाङ्गीरसः | १८३ | १४ | सयाजयेदिति | संयाजयेदिति |
| १६६ | २ | व्यक्तिरिक्त | व्यतिरिक्त | १८३ | २८ | सस्थापक्षः | संस्थापकः |
| १६६ | १० | इत्ययेतत्प्रकरण | इत्येतत्प्रकरण | १८४ | १८ | कात्यायनयीसूत्र | कात्यायनीयसूत्र |
| १६७ | १३ | बर्हीष्येव | बर्हींष्येव | १८५ | ९ | ऽभावेष्पि | ऽभावेष्वपि |
| १६७ | २५ | प्रति हकाले | प्रतिग्रहकाले | १८६ | २१ | प्रतिरन्न (तै० | प्रतिरन्नेति |
| १६८ | १ | चतुर्घा | चतुर्धा | | | ब्रा० ३।७।११। | कल्पयन् |
| १६८ | २ | वाचेऽन्नेमि | वाचेऽन्नमि | | | १) इति कल्पयन् | |
| १६८ | ५ | तद्दना | तद्दान | १८७ | १९ | तार्थत्देऽपि | तार्थत्वेऽपि |
| १६८ | १८ | इत्यार्थवाद | इत्याद्यर्थवाद | १८७ | २० | आनुषिङ्गक | आनुषङ्गिक |
| १६८ | २० | प्रतिगृह्णीयात | प्रतिगृह्णीयात् | १८७ | २८ | रङ्क्ताम्' | रङ्क्ताम्' |
| १६९ | ३० | प्राशित्र | प्राशित्रं | १८८ | २ | स्तगता | स्तद्गता |
| १७० | ३ | प्राशित्रातं | प्राशित्रगतम् | १८८ | १४ | अथोपात्थाय | अथोपोत्थाय |
| १७१ | ६ | जगी | जिगि | १८८ | २८ | नस्याऽवश्यकत्वं | नस्याऽऽवश्यकत्वं |
| १७१ | ७ | ग्निमन्ना | अग्निमन्नादमन्ना | १८८ | २९ | ऽनयारनुष्ठान | ऽनयोरनुष्ठान |
| १७२ | १४ | ३।८।) | ३।८।) इति | १८९ | १ | पौर्णमास्यं | पौर्णमासं |
| १७३ | १५ | प्रन्यू | प्रत्यू | १८९ | २९ | आज्यस्याला: | आज्यस्थाल्याः |
| १७४ | ६ | जुहूपभृतौः | जुहूपभृतोः | १९० | २ | प्रजपतय | प्रजापतय |
| १७५ | १९ | विश्व | विष्क | १९० | ३ | गौकर्ण | गोकर्णं |
| १७६ | २ | इत्याध्वर्यंव | इत्याध्वर्यव | १९२ | ११ | सन्निपातो | सन्निपात |
| १७६ | १९ | आश्वलानोक्तेः | आश्वलायनोक्ते | १९२ | १६ | आग्निहोत्रे | अग्निहोत्रे |
| १७६ | २२ | याज | याजमानैश्चन याज | १९३ | ११ | स्वकामुत्तरा | त्वेकामुत्तरा |
| १७७ | ३ | तमाहऽऽ | तमाहाऽऽ | १९३ | २१ | योकत्रेण | योक्त्रेण |
| १७८ | ८ | दक्षिणोत्तर | दक्षिणोत्तरौ | १९४ | ११ | दक्षिांयाः | दक्षिणायाः |
| १७८ | १९ | स्रु_वोर्विमोक | स्रु_चोर्विमोक | १९४ | १२ | पिष्ट | पिष्टं |
| १७९ | २३ | वेत्याहु | वेत्याह | १९४ | १४ | समिंधो | समिधो |
| १८१ | १५ | गार्हृपत्यं | गार्हपत्यं | १९४ | २३ | भाग | भागं |
| १८३ | ७ | पूर्वार्धेऽति | पूर्वार्धेऽति | १९५ | १४ | वेंदिर्दीक्षित | वेदिर्दीक्षित |

—:o:—

